# Kavikalpadruma

OR

THE DHATUPA'THA OF

Vopadeva Goswamy.

Untitled "Dhatudipika"

BY

DURGA-DAS VIDYA'BA'GISHA.

Edited and published by

PANDIT ASHU BODHA VIDYABHUSHANA.

**First Edition.**



Calcutta.

Printed by Siddheshwara Pan
At the Siddheshwara Press.
No. 38, Shib Náráyan Dás' Lane.



*Price 1½ Rs*

1904.

To be had of Pandit Kulapati Jibananda Vidyasagara, B A.
Superintendent, Free Sanskrit College, Harrison Road P. O. Calcutta

# कविकल्पद्रुमः ।

## धातुपाठः ।

---

महामहोपाध्यायश्रीवोपदेवगोस्वामिना विरचितः ।

---

श्रीदुर्गादासविद्यावागीशकृत धातुदीपिकाख्यया व्याख्यया समलङ्कृतः ।

पण्डितकुलपति श्रीमज्जीवानन्दविद्यासागर भट्टाचार्य्यात्मजेन

पण्डित श्रीआशुबोध विद्याभूषणेन

संस्कृतः प्रकाशितश्च ।

---

प्रथमसंस्करणम् ।

---

कलिकाताराजधान्याम्

सिद्धेश्वरयन्त्रे मुद्रितः ।

खृ: १९०४

# कविकल्पद्रुमः।

शब्दाकरकरग्राममर्थमण्डलमण्डलम्।
ज्ञानात्मानमनाद्यन्तमादित्यं तमुपास्महे॥

नत्वा श्रीशगिरीशौ श्रीदुर्गादासशर्म्मणा क्रियते।
कविकल्पद्रुमटीका विशदतरा धातुदीपिका नाम॥
कति कति सन्त्यपि सन्तः सन्तोषं नोभजन्त इतरगुणे।
ये परगुणलवलुब्धा दुर्गादासश्शर्मो भवेत्तेभ्यः॥
सुखाय छात्रवर्गाणामत्रेति परिभाष्यते।
अन्तःस्थाः स्युर्यवरला अश्मा इत्यादयः स्वराः।
ऊष्माणः स्युः शषसहा अन्त्यात् प्रागुपधा भवेत्॥

श्रीवोपदेवो धातुपाठं चिकीर्षुः प्रारिप्सितपरिसमाप्तये शिष्टाचारप्राप्तमङ्गलमाचरति—शब्दाकरेत्यादि। तं प्रसिद्धं आदित्यमुपास्महे वयमिति शेषः। तच्छब्दोऽत्र प्रसिद्धार्थत्वात् यच्छब्द नापेक्षते। तथाच—"तं केशपाशं प्रसमीक्ष्य कुर्य्युर्वालप्रियत्वं शिथिलं चमर्य्यः" इति कालिदासः। ग्रन्थोत्कर्षख्यापनार्थमादित्यस्य ग्रन्थस्वरूपतां प्रतिपादयन् विशेषणान्याह—शब्दाकरेत्यादि। शब्दानामाकर उत्पत्तिस्थानमाकाशस्तत्र करग्रामः किरणसमूहो यस्य तम्। अर्थानां प्रयोजनानां मण्डलाय समूहाय, निखिलप्रयोजनानि साधयितुमित्यर्थः। मण्डलं चक्रवाड़ं "स्यान्मण्डलं द्वादशराजके च देशे समूहेऽपि च चक्रवाड़े" इति विश्वः। उदय इति यावत्, यस्य तम्। तथाच—"आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा" इति, "सूर्य्योदयं विना नैव स्नानदानादिकाः क्रिया" इति च स्मृतेः। ज्ञानम् आत्मा यस्य तम्। न विद्येते आद्यन्तौ यस्य तं नित्यमित्यर्थः। पक्षे तं प्रसिद्धं पूर्व्वतरधातुग्रन्थं उपास्महे। आदित्यं सूर्य्यमिवेति लुप्तोपमा।

"अयमुदयति मुद्राभञ्जनः पद्मिनीनाम्" इतिवदसाधारणविशेषणेनैव विशेषोपस्थितिर्भवतीति तादृशविशेषणान्याह शब्दाकरेत्यादि। शब्दानामाकरा उत्पत्तिस्थानानि धातव इति यावत्, त एव करग्रामः किरणसमूह इव यस्य तम्। अर्थानां अभिधेयानां, मण्डलं मण्डलमिव यस्य तम्। ज्ञायतेऽनेनेति ज्ञानं ज्ञानसाधनं धातुरूपं, तदेवात्मा यस्य तम्। अनाद्यन्तमिति वेदाङ्गत्वान्नित्यमित्यर्थः।

इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः॥

सर्व्वेषां स्वपरशिष्याणां प्रवृत्त्यर्थमादिशाब्दिकानां मतमालोक्य क्रियते इति वक्तव्ये आदौ जयशब्दपूर्वकं तन्नामानि संगृह्णाति—इन्द्र इत्यादि। एते अष्ट आदिशाब्दिका जयन्ति। अत्र जेस्तुवन्त्योस्तिवन्तौ इत्यनुशासनादन्तुस्थानेऽन्तिः। जययुक्ता भवन्त्वित्यर्थः।

मतानि तेषामालोक्य सर्वसाधारणः स्फुटः।
धातुपाठः स्वदाद्याद्यक्रमादन्तादिमक्रमः॥
कविकल्पद्रुमो नाम पद्यैर्निष्पाद्यतेऽत्र च।
धातवः पठिताः पाठसूत्रलोकागमस्थिताः॥

अथ ग्रन्थस्वरूपं निरूपयति—मतानीति। तेषामष्टानामादिशाब्दिकानां मतानि ग्रन्थानालोक्य पद्यैः श्लोकैः करणैः कविकल्पद्रुमो नाम धातुपाठो निष्पाद्यते क्रियते मयेति शेषः। सर्वेषां प्रवृत्त्यर्थं विशेषणान्याह—सर्वसाधारण इत्यादि। सर्वेषां साधारणः समानः सर्वसम्मतत्वात्। सर्वशब्दश्चात्र बहुवाद्रिपरः तेन सञ्जज्ञतावित्यादीनां केनचिदमन्यमानानामपि बहुवादिसम्मतत्वादिहोपन्यासः, कुङ्गत्यामित्यादीनाञ्च केनचिन्मन्यमानानामपि बहुशाब्दसम्मतत्वात्तद्वर्जनमिति। स्फुटो व्यक्तः। धातवः पठ्यन्ते अस्मिन्निति धातुपाठो ग्रन्थः। अत् अकार आद्यो येषां धातूनां ते अदाद्याः, ते अकारादयो धातवः आद्याः आदिपठिताः यस्मिन् क्रमे सः अदाद्याद्यः, स चासौ क्रमश्चेति अदाद्याद्यक्रमः, सुष्ठु अदाद्याद्यक्रमो यस्मिन् अदन्तादिमक्रमे स स्वदाद्याद्यक्रमः, अत् अन्तो येषां धातूनां ते अदन्ताः, ते अकारान्ता धातवः, आदिमा आद्या यस्मिन् क्रमे, स अदन्तादिमः, स चासौ क्रमश्चेति

अदन्तादिमक्रमः, अदाद्याद्यक्रमः अदन्तादिमक्रमो यस्मिन् धातुपाठे, स तथा। अकाराद्यादिधातुक्रमेण अकारान्तादिधातवो वक्तव्या इत्यर्थः। अत्रापि सजातीयानां मध्ये विजातीयो न पाठ्य इत्यधिककौशलार्थं सुप्रन्थीयादानां बोध्यम्। यत्तु अथ क्रदष्मङ्चेति क्रदक्लिदि अङ रुदि इत्येतयोर्मध्ये क्रन्दादीनां पठनं तत् क्रदि तु रोदने आह्वाने इत्यस्मादादौ क्रदिञ्ङ रुदीति पृथग्वाक्यगौरवभयात्। एवं स्तृनञ्स्तृताविति स्तृ स्तृ न प्रीतिरक्षाप्राणने इत्थेतयोर्मध्ये स्नादीनां पाठेऽपि बोध्यम्। कवीनां परस्मैपदादिप्रमाणलिप्सूनां तत्तद्दातृत्वेन कल्पद्रुम इवेति कविकल्पद्रुमः। नामेत्यव्ययम्। अभिधेयमाह अत्र चेति। अत्र ग्रन्थे पाठसूत्रलोकागमेषु स्थिताश्चतुर्विधा धातवः पठिताः पठितुमारब्धाः, आदिकर्मणि क्तः, साङ्गोपाङ्गैरिष्टोदिता इत्यमरोक्तवत्। पाठस्थिताः पूर्वाचार्य्याणां धातुपाठेषु स्थिता भवति पचतीत्यादयः। सूत्रस्थिता धातुपाठेषु न दृष्टाः स्तम्नोति स्कम्नोतीत्यादयः। लोकस्थिता धातुपाठेषु सूत्रेषु च न दृष्टा महाकविप्रयोगेषु दृष्टाः प्रेङ्खोलयत्यान्दोलयतीत्यादयः। आगमस्थिता भाषाविषयेषु धातुपाठसूत्रलोकेषु न दृष्टा वेदेष्वेव प्रयुक्ता जगातिचिकेतीत्यादयः।

पदानिड्वेड्विकरणाद्यनुबन्धगणोदितम्।
कर्म्मोच्चारणमात्रेण स्पष्टमत्रानुबन्धतः॥

प्रयोजनमाह—पदेति। पदे परस्मैपदात्मनेपदे, अनिट् इमोऽभावः, वेट् इमो विकल्पः, विकरणाः शप्श्नादयः, आदिशब्दात् यजादिश्वादीनां ग्रहणम्। अनुबन्धाश्च गणाश्च तैरुदितं अनुबन्धगणोदितम्। अत्र ग्रन्थे अनुबन्धोदितं पदानिड्वेड्विकरणादि कर्म अनुबन्धतः स्पष्टं, गणोदितं कर्म उच्चारणमात्रेण गणोच्चारणमात्रेण स्पष्टं व्यक्तमिति व्युत्क्रमेणान्वयः। यथा ओगमृङ् गत्यामित्यत्र इमोऽभावः त्वां ङप्रत्ययश्चानुबन्धोदितः। भ्वादित्वं परस्मैपदञ्च विशेषविधानाभावात् गणोदितमिति।

परोऽनुबन्धः पूर्वेषामेकवाक्यस्थधातुषु।
नाम्रेड़ितानुबन्धेषु न परेषाञ्च मध्यमः॥

अथ परिभाषा भाष्यते पर इति। वाक्यमर्थकथनपर्य्यन्तम्। एकवाक्यस्थितधातुषु परः परधातुस्थोऽनुबन्धः पूर्वतरेण सम्बन्धाभावेऽपि पूर्वेषां सर्वेषामित्यर्थः। यथा टीक टिक् ढौक त्रौक तिक्वङ् गत्यामित्यत्र ङकारङकारौ सर्वेषाम्। एवमङ्काङ्गल पदे लक्षणेऽत्र अङ्कयतेः परस्थितौ तकार-

ककारावङ्गयतेरप्यनुबन्धाविति । अस्यापवादमाह—नाम्रेडितेति । आम्रेडितं द्विस्त्रिरुक्तमित्यमरः । पुनरुक्तैकानुबन्धेषु धातुषु नेयं व्यवस्था । तथाच ञ्षत्क ञ्षतञ् चान्ताविल्यत्र तकारस्य पुनरुक्तत्वात् अकारो न पूर्वस्य । परिभाषान्तरमाह—नेति । मध्यमो धातुद्वयमध्यवर्त्ती अनुबन्धो द्वाभ्यां सम्बद्धोऽपि न परस्य । यथा ञ्षत्क ञ्षतञ् चान्ताविल्यत्र ककारो न परस्य परवर्त्तिन उभयपदिनो ञ्षधातो. ककारानुबन्धो नास्तीत्यर्थं ।

तत्राकारः सुखार्थोऽथा निष्ठाभावादिकर्मवेट् ।
इर्नुम्वानीरनिड्निष्ठ उः क्त्वावेडूस्तु वेट्क ऋः ॥
चङ्यह्रस्वोऽथ ॠर्वा लृरङ्वानिर्वाथ एः सिचि ।
अवृद्धिरैर्यङ्जादिः स्यादोर्निष्ठातन औरनिट् ॥
कश्चुरादिः किस्तुवा गः क्र्यादि र्घिः प्वादिरप्यपूः ।
स ल्वादिर्ङोरुदादिर्ङस्तङ्वान् कर्त्तरि आत्मने ॥
ञोज्ज्वलाद्यो ञिरद्यन्तष्टुः साधुर्डुस्त्विमग्युतः ।
णः फणादिस्तस्त्वदन्तो दस्तनादिर्ध्रुधादिकः ॥
नः स्वादिः पोमुचादिर्भः शमादिर्मोणिचिसमोः ।
दीर्घो वा णिचि ह्रस्वो मिर्वा दिवाद्योयुदादिकः ॥
लुः स्वपादिश्च लिर्ह्लादिर्वो वृतादिः श् तुदादिकः ।
षिः कुटादिश्च ष् क्रदङ्वान् चोजचादी र वैदिकः ॥

[ तत्राकारः सुखार्थः ]

अनुबन्धफलान्याह । तत्र अकारः सुखार्थः । तत्र अनुबन्धेषु मध्ये अकारः सुखार्थः सुखोच्चारणार्थः । यथा—धक्क नक्क क नाशने इत्यादौ ।

[ अथानिष्ठाभावादिकर्मवेट् ]

अथ आ निष्ठाभावादिकर्मवेट् । अथ आ आकारानुबन्धो धातुरित्यर्थः उपचारात् एवमिकारादौ च बोध्यम् । निष्ठा क्तक्तवतू । निष्ठाया वाच्यत्वेन सम्बन्धिनी ये भावादिकर्मणी तयोर्वा इट् यस्मात् स तथा । आका-

रेतो धातोर्भावे आदिकर्मणि च विहितयोः क्तक्तवत्वोरिम् वा इत्यर्थः। यथा इमिंदा स्नेहे 'भावादिढे वा' इति मिन्नं मेदित तेन प्रमिन्नः प्रमेदितः सः। भावादिकर्मभ्यामन्यत्र क्तक्तवत्वोरिम् नेति शेषः। यथा 'आदित' इति मिन्नः मिन्नवान्।

## [ इर्नुम्वान् ]

इः नुम्वान् इति पदच्छेदः। इकारानुबन्धधातूनामन्त्याचः परो नकारागमो भवति। यथावदिङ्नुत्यभिवादयोः। 'अतएवेदितोनुण्' इति वन्द्यते विष्णुः। अत्र प्रथमं वद इति पठित्वा पश्चादिकारानुबन्धत्वान्नकारागमेन वन्द इत्येवं धातुः स्नातः। नकारमध्यपाठेनैवेष्टसिद्धौ इदनुबन्धकरणं अगुणे नलोपनिषेधार्थम्।

## [ ईरनिड्निष्ठः ]

ईः अनिट्निष्ठः इति सन्धिविच्छेदः। अनिट् निष्ठा यस्मात् स तथा। दीपीङ्यक्ष दीपने। 'नेमृडीश्वी'ति इम् निषेधे दीप्तः दीप्तवान्।

## [ उः क्त्वावेट् ]

क्त्वा प्रत्ययस्य वा इट् यस्मात् स तथा। उकारानुबन्धधातुभ्यः क्त्वाचो विकल्पेनेम् भवतीत्यर्थः। यथा चमु भक्षे, 'पूक्लिशुदित' इति इमो विकल्पितत्वेन चमित्वा चान्त्वा।

## [ ऊस्तु वेट्कः ]

ऊः तु वेट्क, ऊकारानुबन्धो धातु वा इट् यस्मात् स तथा। सामान्यविधिना यस्य स्थाने नित्यं इम् विहितः ऊदितः परस्य तस्य वा इम् इत्यर्थः। षिधू शिवे शास्त्रे, 'वेमूदिदि'ति असेधीत् असैत्सीत्।

## [ ऋः चङ्यह्रस्वः ]

ऋःचङि अह्रस्वः। चङि ञेः परे अङि परे नास्ति ह्रस्वो यस्य सोऽह्रस्वः ह्रस्वाभाववानित्यर्थः। ढौकृङ् गत्याम्, इत्यस्मात् औ टीदिविभक्तौ। 'आद्युङः स' इत्यत्र ऋदिहर्जनात्। औकारस्य ह्रस्वाभावे अडुढौकत्।

## [ अथ ॠर्वा ]

चङि अह्रस्व इत्यनुवर्त्तते। ॠकारानुबन्धधातूनां ञेः परेऽङि परे वा ह्रस्वो न भवतीत्यर्थः। कणॄ आर्त्तस्वरे, 'भ्राजभासेति' अचीकणत्

अपचकणत्। येषां सप्तमस्वरानुबन्धः कोचित् पठ्यते कोचिन्न पठ्यते च तेषां ञ्लसविकल्पज्ञापनार्थोऽयमनुबन्ध ।

[ लृरङ्वाम् ]

लृकारानुबन्धधातुभ्यश्चौपे नित्यं ङोभवतीत्यर्थ.। घौगमृलृगत्यां 'घासु-लिघु दि'ति अगमत्।

[ इर्वा ]

इर् वा अङ्वानित्यनुवर्त्तते। येषां धातूनां इर् इत्यनुबन्धोऽस्ति तेभ्य-श्चौपे विकल्पेन ङो भवतीत्यर्थः। च्युतिर् क्षरणे। "घासुलिघुदि"ति सूत्रे इरितस्तु वेति अच्युतत् अच्योतीत्।

[ अथ एः सिचि अवृद्धिः ]

एः एकारानुबन्धोधातुः। सिचि—त्र्यां विहिते सौ। कटे वृतौ वृषि, इति कटधातोः। 'हसादेः सेम' इत्यत्र एदिद्वर्जनात् अकटीत्। त्र्यां सिचि-त्यनेन विहिते सौ परे एकारानुबन्धधातूनां 'हसादेः सेमोऽस्त्रेदि'दित्यत्र एदितो निषेधात्र वृद्धिरित्यर्थः।

[ ऐर्यजादिः स्यात् ]

ऐकारानुबन्धा धातवो यजादिगणे पठिताः, तेन 'व्यथग्रहे'ति 'ग्रह-स्वपाद्यो'रिति च सूत्राभ्यां यथासम्भवं खेर्मूलस्य च जि स्यादित्यर्थः। यजैञौ, 'व्यथग्रहे'ति इयाज। 'घीव्रजयजे'ति क्यप्प्रत्यये 'ग्रहस्वपाद्यो'रिति मूल-धातोर्जौ कृते इज्या।

[ ओर्निष्ठातनः ]

निष्ठायास्तो नो यस्मात् स निष्ठातनः। ओकारानुबन्धधातुभ्यः क्तक्तवत्वोस्तकारस्य 'सूल्वाद्योदि'दितिसूत्रेण नकारो भवतीत्यर्थः। रुजो औ भङ्गे 'सूल्वाद्योदि'दिति रुग्णः रुग्णवान्।

[ औरनिट् ]

औकारानुबन्धधातुभ्य' सामान्यसूत्रेण विहित इम् न भवेदित्यर्थः। घौगमृलृगत्यां, वसोरस्येत्यत्र औदिद्वर्जनात् अमाङ्क्षीत्।

[ कथुरादिः ]

कः ककारानुबन्धो धातुः गणक संख्याने, चुर्ध्यो अिर्वेति गणयति।

## [ क्विस्तुवा ]

क्विकारानुबन्धो धातुः चुरादिर्वा। पक्षे गणान्तरनियमाभावात् सामान्यगणो भ्वादिरित्यर्थः। युजक्वि संयमे, योजयति योजति। 'चुर्व्वो ञिर्वा' इत्यत्र वाशब्दस्य व्यवस्थावाचित्वात् चुरादेर्ञिर्नित्यः चुराद्यन्त-र्गणात् युजादेस्तु वा इति। यत्तु चुरधातोरपि क्विकारानुबन्धत्वं मुग्धबोधे चोर-यति चोरतीत्युदाहरणञ्च तत् कदाचित् चुरादेर्ञेरनित्यत्वज्ञापनार्थम्। अतएव काव्यकामधेनौ अक्विक्लक्षणीत्यत्र स्फुटीकृतमिदं वोपदेवेन।

## [ गः क्र्यादिः ]

गः गकारानुबन्धो धातुः। डुक्रीञगद्रव्यपर्य्यये 'दिवसुतुदे'ति क्र्यादि-त्वात् श्ना प्रत्यये क्रीणाति।

## [ गिः प्वादिरपि ]

गिः गकारानुबन्धो धातुः। अपिशब्दात् क्र्यादिश्च। पूञगिशोधे 'प्वादेः ह्र' इति पुनाति।

## [ अपूः स ल्वादिः ]

पूवर्जितः स प्वादिर्ल्वादिश्च स्यात्। लूञगि च्छिदि, लुनाति। 'ल्वाद्या-द्योदि'दिति लूनः लूनवान्। 'कॄगॄज्वे'ति लूनिः।

## [ घो रुदादिः ]

घः घकारानुबन्धो धातु। ञिघिर रुद रोदे 'रुद्गणोऽयोरुस्येमि'ति रोदिति। 'रुदाद्यस्तौ'ति अरोदीत्।

## [ ङस्तङ्वान् कर्त्तरि ]

ङः ङकारानुबन्धो धातुः। कर्त्तरिवाच्ये तङ्वान् आत्मनेपदी। एधङ्वृद्धौ 'नवशः परे' इति एधते।

## [ ँआत्मने ]

अकारानुबन्धो धातुः तङ्वान् इत्यनुवर्त्तते। आत्मने आत्मार्थं, फलवति कर्त्तर्य्यात्मनेपदीत्यर्थः। अफलवति परस्मैपदीति शेषः। यजँञौ, यजते यजमानः, यजति याजकः। ञित्त्वा'न्नवशःपरे ञित' इत्युभयपदप्राप्तौ 'ञिञन्तपिबे'त्यनेन नियम्यते। नियमश्च फलवत्कर्त्तर्य्येवात्मनेपदमिति

चेत्तर्हि अफलवत्कर्त्तर्य्यात्मनेपदनिषेधे फलवत्कर्त्तरि परस्मैपदापत्तिः कथं न स्यात् ? फलवत्कर्त्तर्य्यात्मनेपदमेवेति चेत् तर्हि फलवत्कर्त्तरि परस्मैपदनिषेधे अफलवत्कर्त्तर्य्यात्मनेपदापत्तिः कथं न स्यादित्युभयथैव व्याघातः। वस्तुतस्तु उभयपदप्राप्तौ व्यवस्थेयं, फलवत्यात्मनेपदम् अफलवति परस्मैपदमिति। एतच्च पाणिनेरनुरोधात्। तथाच वर्द्धमानः—"इति लौकिकवाक्येषु व्यभिचारोऽतिपुष्कलः। वेदवाक्येषु यद्यस्ति नियमः केन धार्य्यते। विशेषः पाणिनेरिष्टः सामान्यं सर्ववर्मणः। सामान्यमनुजानाति तन्त्राचार्य्यपरम्परेति"। तेन "अकरोदचिरेश्वरः क्षितौ द्विषदारम्भफलानि भस्मसात्" इति। "तनोति शुभ्रं गुणसम्पदा यशः" इत्यादौ फलवत्कर्त्तरि परस्मैपदम्। "फलं विश्वोपकाराय धत्ते पर्वणि पर्वणी"ति। "कमलवनोद्घाटनं कुर्वते ये" ये सूर्य्यरश्मय इत्यर्थः, इत्यादावफलवत्कर्त्तर्य्यात्मनेपदमिति। चुरादेस्तु स्वार्थविहितञेञकारेण ञित्वेऽपि उभयपदं न स्यात्। अन्यथा स्यमञक्वितर्के इत्यादेर्ञानुबन्धो वृथा स्यात्। यत्तु धातुपारायणमुग्धबोधयोश्चोरयति चोरयते इत्युभयपदोदाहरणं तत् कदाचिन्महाकविप्रयुक्तस्यात्मनेपदस्य समाधानार्थम्। यथा नैषधे—"नालोकते यथेदानीं मामियं तेन तर्कये" इत्यत्र तर्कये इत्यात्मनेपदम्। अत्र केचित्तु "आत्मनेपदमिच्छन्ति परस्मैपदिनां क्वचित् इति" न्यायमवलम्बन्ते।

## [ ञो ज्वलाद्यः ]

ञः ञकारानुबन्धो धातुः ज्वलञमचलत्विषोः 'दूनीभूज्वलाद्येति' णप्रत्यये ज्वाल, पक्षे पचादित्वादनि ज्वलः। एव कुचञोधपर्ककौटिल्यलेखने, 'दूनीभूज्वलाद्येति' णः कोचः, पक्षे 'कॄगॄज्ञेति' कः कुचः।

## [ ञिरद्यक्तः ]

ञिरित्यनुबन्धो धातु' अद्यक्त'—अद्य वर्त्तमाने क्तो यस्मात् सः। ञिष्ठाञ्स्थाने 'ञार्चेच्छार्थेति' स्थितो विष्णुस्तिष्ठतीत्यर्थ.।

## [ टुः साथुः॰]

टुरित्यनुबन्धो धातुः अथुना सह वर्त्ततेऽसौ साथुः। टुवेपृ वेप चले 'ट्वितोऽथुरि'ति वेपथुः।

## [ डुस्त्रिमग्युतः ]

डुरित्यनुबन्धो धातुः डुकृञ्करणे 'ड्वितस्त्रिः' इति त्रिमक्, कृत्रिमम्।

[ णः फणादिः ]

फणगत्यै निशेषे 'तृफलभजेति' फेणतुः पफणतुः फेणिथ पफणिथ।

[ तस्त्वदन्तः ]

तः तु अदन्तः, तः तकारानुबन्धो धातुः अदन्तः अकारान्तः, अदन्तानां पृथग्वर्गविधानेनैव ज्ञाने सिद्धे तानुबन्धकरणम् अनभ्यासानाम् अह्लादिषु ध्वान्तत्वादिभ्रमनिरासार्थम्।

[ दस्तनादिः ]

द इत्यनुबन्धो धातुः तनादिगणीयः। तनुदञ्विस्तृतौ 'तनृभ्यः श्नुवि'ति तनोति। 'सेर्लुक् तथासोरि'ति अतत अतनिष्ट अतथाः अतनिष्ठाः। 'वनतनाद्यनिमामि'ति प्रतत्य।

[ ध्रुधादिकः ]

ध रुधादिक', ध इत्यनुबन्धो धातुः रुधादिगणीयः। रुधिर्धौञिआवृतौ 'दिवसुतुदे'ति रुणद्धि।

[ नः स्वादिः ]

षुञ् सन्धाक्लेदपीड़ामन्थे 'दिवसुतुदे'ति सुनोति।

[ पो मुचादिः ]

मुच्लृप्रपञौ मोक्षे 'नुण्रधोमुचामि'ति मुञ्चति।

[ भः शमादिः ]

शमुभिर्यश्रमे 'यञ्चोशमादौ'ति शाम्यति।

[ मोणिचिणमोः दीर्घो वा ]

मः मकारानुबन्धो धातुः। णिचिणमोः—चिण्च णम्च तौ चिणमौ, ञेः परौ चिणमौ तयोरिति विग्रहः। मकारानुबन्धधातूनां ञेः परवर्त्तिनो रिण्चणमोः परयोर्वा दीर्घ इत्यर्थः। दीर्घो दीर्घवान्। घटषमङ चेष्टे 'घटादिजनो'ति सूत्रे 'ओणमोस्तुर्वञ्चेति' अघटि अघाटि, घटं घटं, घाटं घाटम्।

[ णिचि ह्रस्वः ]

मोऽनुवर्त्तते। मकारानुबन्धो धातुः। णिचि ञौ परे ह्रस्वो ह्रस्ववान्। 'घटादिजनो'ति घटयति।

### [ मिर्वा ]

चिचि ह्रस्व इत्यनुवर्त्तते। मिकारानुबन्धधातूनां ञौ परे विकल्पेन ह्रस्वो भवतीत्यर्थः। फणमि गतौ 'वा ञमयमेति' फणयति फाणयति।

### [ दिवाद्यो य ]

यकारानुबन्धो धातुर्दिवादिगणीयः दिव्यु जिगीषादौ 'दिवस्तुदेति' दीव्यति।

### [ ल ष्टादिकः ]

ष्टलौ भक्षे 'लुगदन्भ्योऽप' इति ष्टत्ति।

### [ लुः स्वपादिश्च ]

चकारादष्टादिश्च। स्वमते स्वपादेः प्रयोजनं नास्ति। दरिद्रतीत्यादौ स्वपादित्वादजादौ सार्वधातुके श्वाद्याच्चरस्य उदात्तस्वरत्वम्भवति। तथाच श्वाद्युदात्तत्वमिति वोपदेवः।

### [ लिर्ह्वादिः ]

ह्वादेरदाद्यन्तर्गणत्वेन ख्यातत्वात् अदादित्वसूचकानुबन्धो न ज्ञातः। अथवा 'लुः स्वपादिश्च लिर्ह्वादि'रित्येकं वाक्यम्। लुलि इत्युभयानुबन्धौ धातू क्रमात् स्वपादिह्वादौ स्तः, काकाक्षिगोलकन्यायेन चकारस्योभयसम्बन्धाददादौ च इत्यर्थः। ह्वादिः पृथग्गण इत्येके। अतएव पठन्ति च "भ्वाद्यदादौ जुहो-त्यादिर्दिवादिः स्वादिरेव च। तुदादिश्च रुधादिश्च तनक्र्यादिचुरादयः॥" इति। हुलि होमेऽदने 'ह्वादेरे द्विरि'ति जुहोति।

### [ ओर्वृतादिः ]

वृतऋवङ वर्त्तने, 'वृद्भ्यो नेम्प्ये' इति तेनैव परस्मैपदे वर्त्स्यति विवृत्सति। आत्मनेपदे तु वर्त्तिष्यते। अन्यत्र विवृत्सा विवर्त्तिषा।

### [ श तुदादिकः ]

तुद औ श व्यथे 'दिवस्तुदे'ति तुदति।

### [ ञिः कुटादिश्च ]

चकारात् तुदादिश्च। 'कुटां गुणौ ञिणति' इति नियमात् कुट ञि कौटिल्ये इत्यादीनां अकुटीदित्यादौ न गुणः। णूञिस्तवने इत्यादीनां अनुवीदित्यादौ न वृद्धिः अगुणत्वादुवङ्च।

## [ ष क्तट्क्वान् ]

आख्यातिकस्य क्तोऽप्रामाण्यं क्तादिति विशेषणम्। स्वमते तूभयत्र क्त एव। डुओष पच पाके 'भीषिचिन्ती'ति पचा।

## [ घो जक्षादिः ]

जक्ष भक्षहासयोः, 'द्विरुक्तजक्षादी' इति द्विसंज्ञायां शत्रन्तस्य 'शिद्चोऽद्दे'रिति न नुम् तेन जक्षत्। क्लीबे जस्शसोस्तु 'द्वेः शतु'रिति जक्षन्ति जक्षति। आख्यातिकेऽन्तौ अन्तोऽद्दे रिति जक्षति, 'अनुस्सिद्वे'रिति अजक्षुः।

## [ र वैदिकः ]

र इत्यनुबन्धो धातुः। वैदिको वेदेष्वेव प्रयुक्तो नतु भाषायामित्यर्थः। गाऌिं स्तुतौ जगाति।

## [ धातवो हन्तिभासार्था घकितो वा चुरादयः ]

इत्यनुबन्धेन फलं निरूप्य अर्थेनैव प्रयोजनं प्रथयति धातव इति। हन्त्यर्था हिंसार्थाः, हन्तेर्हिंसार्थ एव प्रसिद्धत्वात्। भासार्था दीप्त्यर्थाः। घटिक्य-पिच्युताविन्यत्र च्युत्यर्थत्वेऽपि किकरणमर्थान्तरार्थमिति वोपदेवस्वरसात्। हन्त्यर्था भासार्थाश्च ये धातवस्तेऽकितोऽपि गणान्तरपठिता अपि वा चुरादयः स्युः। वाशब्दस्यानुक्तसमुच्चयार्थत्वात् कदाचिदन्येऽपि चुरादयः स्युरित्यर्थः। एवमेवं धातुपारायणक्रमदीश्वरौ। यथा हनृ्लौ गतौ बधे घातयति हन्ती-त्यर्थः। शुभलृङदीप्तौ शोभयति शोभते इत्यर्थः। दीप्त्यर्थस्य पाक्षिकचुरा-दित्वं सर्वैर्न मन्यते। अन्येषान्तु चुरादित्वं यथा "इन्द्रियादेरसामर्थ्यं वक्ष्यमाण-मदीदिशत्" इति भट्टवार्त्तिकम्। "दृष्टे सूर्य्ये पुनरपि भवान् वाहयेदध्व-शेषम्" इति कालिदासः। "कोकिलो विष्णुरूपेण राजकन्यामजीहरत्" इति पञ्चतन्त्रम्। "दशवर्षसहस्राणि रामो राज्यमकारयदि"ति व्यास इत्यादि।

**क्रादिः कॄगॄदृधृप्रच्छो मुहद्रुहष्णुहृनशः ष्णिहः।**
**मुहादिर्व्हिहलन्तोऽनुदात्तेदृत्विड्युतादिकः॥**

अथ स्वरूपेण फलं निरूपयति क्रादिरिति। क्रादि. कॄश विक्षेपे, गॄश निगरणे, दृङ्आदरे, धृशङ्स्थितौ, प्रच्छीश ज्ञीप्से इति पञ्च। फलन्तु अन्येषां मते क्रादिभ्यः सन इम् चिकरिषति इत्यादि। स्वमते तु श्विङ्पूअरञ्ज-

ष्वित्यादिसूत्रे एषां ग्रहणात् क्वादेः फलाभावः। मुहद्रुहष्णुहनशष्णिहो मुहादिः। मुह्यूल्त्ञि वैचित्ये, ल्टद्रुह्यू जिघांसे, ष्णुह्यूल उद्गारे, नश् ल्टयू नाशे, ष्णिह्यू ल्टञि प्रीतौ। फलन्तु 'मुहां घड्वे'ति मुक् मोग्धा, 'ह्रोढोभा'-विति मुट् मोढ़ा इत्यादि। द्रुहस्तु घडोऽप्राप्तिपक्षे 'ह्रोढोभा'वित्यनेन ढ एव नतु 'दादेर्घ' इत्यनेन घः, अन्यथा दादेर्घ इत्यनेनैवेष्टसिद्धौ मुहादावस्य पाठो-व्यर्थः स्यात्।

## [ ङिद्धलन्तोऽनुदात्तेत् ]

ङानुबन्धो हलन्तो हसन्तो यो धातुः सोऽनुदात्तेत् अनुदात्तस्वरानुबन्धः परिभाषित इत्यर्थः। तेषां वेदेष्वेवोच्चारणभेदोऽस्तीति फलम्। आत्मने-पदञ्चेति केचित्।

## लृङिद्द्युतादिकः ]

ल्टङ इत्युभयानुबन्धो धातुर्द्युतादि' स्यात्। द्युत्लृङ द्युत्यां 'अास्लि-द्युदि'ति परस्मैपदे अद्युतत्। लिदित्यनेनैवेष्टसिद्धौ द्युतादिपाठ' प्राचामनु-रोधात्।

## श्विश्रिडीशीयुरुनुस्नुक्ष्णुवृङ्वृञ्विवर्जिताः।
## एकस्वरा आदिवर्णोदृदन्ता धातवोऽनिटः॥

ट्वि ओश्वीर्गतिवृद्ध्योः, श्रिञ सेवने, ओडीङ्य गतौ, डीङ् च नभोगतौ, शीङ्लञि स्वप्ने, युल मिश्रणे, रुल ध्वनौ, रुङ्वधे गत्यां, नुल स्तुतौ, ष्णुल प्रस्नुत्यां, टुक्षुल क्षुते, क्ष्णुल तेजने, वृङ्ग सम्भक्तौ, वृनगञ वृतौ। वृ इत्यने-नैवेष्टसिद्धौ उभयग्रहणं स्वरूपस्य कस्यचिदप्राप्त्यर्थम्। तेन युजगबन्धे इत्यस्मा-दिम् न स्यात्। श्व्यादिवर्ज्जिता एकस्वरा ये आकारान्ता इवर्णान्ता उकारान्ता ऋकारान्ताश्च धातवस्तेभ्य. सामान्यविधानादिम् न स्यात्। यथा 'नेमिका--जाद्युद्दृत' इति पाता जेता क्रेता श्रोता कर्त्तेति। विशेषविधानात्तु स्यादेव। यथा 'यमरमनमे'ति अपासिष्टाम्। 'सुस्तुधोः सेरिम्पे' इति असावीत् अस्ता-वीत् अधावीत्। 'स्यस्यर्द्धन' इति करिष्यति। श्व्यादेस्तु श्वयितेत्यादि।

## [ इति परिभाषा ]

वक्ष्यमाणग्रन्थस्य सङ्क्षेपनिर्वाहार्थं सङ्केतविशेषः परिभाषा इत्यर्थः।

अथ धातवो निर्द्धार्य्यन्ते। तत्रादावदन्ता' तेषु च मृषतञ्वर्जेषु सर्वेषु धातुषु ककारोऽनुबन्धः, तकारस्तु सर्वेष्वेव। ननु हसाल्लोप इत्यनेनाल्लोपस्य

णित्वादादन्तत्वं व्यर्थमिति चेन्न यतः "अग्लोपित्त्वं स्थानिवत्त्वञ्चादन्तत्वप्रयोजनम्। यत्र त्वेते न विद्येते तत्राग्लोपविकल्पनम्॥ तद्बलादन्त्यदीर्घश्च पुक्चेत्यज्ञापयत्यत" इति। यथा—अग्लोपित्वेन अजगवेषदित्यादौ न ह्रस्वसन्वद्भावौ। लोपोऽप्यादेश उच्यते इति न्यायात् स्थानिवत्त्वेन कुणयतीत्यादौ न गुणः गणयतीत्यादौ च न वृद्धिः। यत्र तु एते न विद्येते अग्लोपित्वस्थानिवत्त्वयोः प्रयोजनं न सम्भवति तत्र धातौ तद्बलात् अदन्तत्वस्वीकारबलात् अल्लोपविकल्पनम्। अकारस्थितिपक्षे दीर्घः पुक् च आदन्तत्वात् पणुच स्यादतोऽज्ञापयतीति सिद्धमिति केचित्। स्वमते तु अग्लोपित्वस्थानिवत्त्वयोः कार्य्यं येषु न स्यात् ते धातवो हसन्ता एव मन्तव्याः, तेन अज्ञापयतीत्यादिप्रयोगाः स्वमतविरुद्धा इति बोध्यम्। न च स्वमतविरुद्धानामिह्वोपन्यासोऽपि विरुद्ध इति वाच्यम्, अष्टानां मतान्यालोक्य कर्त्तव्ये परमतन्यासेऽपि दोषाभावात्। अन्यथा कैश्चिदमन्यमानस्य कुञ्चक्षताविति भौवादिकस्य पाठो विरुद्धः स्यात्। किञ्च यदि तन्मतैकवाक्यता क्रियते तदाग्लोपविकल्पोऽन्त्यदीर्घश्च मनीषादित्वात् साध्यः। यथा अङ्कधोर्ञिः हसाल्लोप इति अल्लोपः टौविभक्तेर्दिः ञिश्चौत्यङ् "नकारजावनुस्वारपञ्चमौ झलि धातुषु। सकारजः शकारश्च षाट्टवर्गस्तवर्गज" इति वचनात् ङस्य नप्रकृतिकत्वे 'स्यादौ नवद्र इति' ङकारं हित्वा कि इत्यस्य द्वित्वे कस्य चत्वे निमित्ताभावे नैमित्तिकस्याप्यभाव इति ङस्य नत्वे नस्यानुस्वारे तस्य च ञत्वे आञ्चिकदिति। केचित्तु अङ्क इति ङप्रकृतिं मन्वानाः अङ्कि इत्यस्य खेर्द्वित्वे आडिङ्कदित्याहुः। अत्र ह्रस्वसन्वद्भावयोरसम्भवान्नाग्लोपित्वं गुणवृद्धेरसम्भवान्न स्थानिवत्त्वमिति। केचित्तु द्वित्वेऽपि अकारलोपस्य स्थानिवत्त्वं मन्वानाः क इत्यस्य द्वित्वे अग्लोपित्वान्न सन्वत्कार्य्यम् इत्याञ्चकदित्युदाहरन्ति।

---

## अकारान्तवर्गः।

१

**अङ्काङ्क त्क पदे लक्ष्मण्यंशांस त्क विभाजने।**
**अर्थ त्कङ् याचनेऽम्ब त्क दृक्चयेऽघ त्क तत्कृतौ॥**

१। अङ्कत्क पदे लक्ष्मणि। (अङ्क—अदन्त० चु० प०) कण्ठ्यवर्गाद्योपधः। पदं संख्यासंस्थानम्, लक्ष्म चिह्नयुक्तकरणम्। तथाच—"अर्थः क्रियैव धातूनां कर्त्तृव्यापारलक्षणा। आत्मनिष्ठं क्रियार्थत्वं धात्वर्थेष्वक्रियात्मसु॥" इति वोपदेवः।

त, क—अङ्कयति अङ्कापयति । अङ्कयत्यरिसैन्यानि युधि पृष्ठेषु सायकैरिति हलायुधः ।

२ । अङ्ग त्क पदे लक्ष्मणि । (अङ्ग—अदन्त० चु० प०) कण्ठ्यवर्गतृतीयोपध । पदलक्ष्मव्याख्यानं पूर्ववत् । त, क—अङ्गयति अङ्गापयति ।

३ । अंश त्क विभाजने । (अंश—अदन्त० चु० प०) तालव्योपध. । विभाजन इति भाजत्कतु पृथक्कृत्यामित्यस्य रूपम् । त, क—अंशयति अंशापयति धनं वणिक् ।

४ । अंस त्क विभाजने । (अंस—अदन्त० चु० प०) दन्त्योपधः । अन्यत् सर्वं अंशधातुवत् ।

५ । अर्थ त्क ङ याचने । (अर्थ—अदन्त० चु० आ०) ङ—अर्थयते अर्थापयते । "गावस्तृणमिवारण्ये प्रार्थयन्ति नवं नव"मिति, "प्रार्थयत्यल्पमूल्यानी"-त्यादौ प्रार्थनं प्रार्थः पश्चात् प्रार्थं करोतीति णौ परस्मैपदम् ।

६ । अन्ध त्क दृक्क्षये । (अन्ध—अदन्त० चु० प०) दृक्क्षयो दृष्टिरहितीभाव., तेनाकर्मकोऽयं धातुः । तथाच—सत्ताजीवनदर्पभीतिशयनक्रीडानिवासक्षयाद्यन्तध्वाननभोगतिस्थिति-जरालज्जाप्रमादोदये । मोहे खोटनवेगयुद्धदहनख्यातिक्षरोन्मादके शुद्धिखेदपलायनभ्रमणके शान्तौ प्लुतौ मज्जने । दृप्तौ जागरशोषवक्रगमनोत्साहे मृतौ संशये ग्लानौ मन्दगतौ च नृत्यपतने चेष्टाक्रुधो रोदने । तुष्टौ ह्रावक्रतौ च सिद्धिविरतौ हर्षोपवेशे बले कम्पोद्वेगनिमेषभङ्गयतनाद्ये धातवोऽकर्मका । दौर्बल्यादिषु चार्थेषु वर्त्तमानास्तु धातवः । वाचका भावमात्रस्य यतस्तस्मादकर्मकाः ॥ कौटिल्यादिषु चार्थेषु प्रोक्ता ये ते तु धातवः । तद्भावेऽकर्मका. स्युस्तद्वत् कृत्यां सकर्मकाः ॥ इति । त, क—अन्धयति, अन्धापयति ।

७ । अघ त्क तत्कृतौ । (अघ—अदन्त० चु० प०) तत्कृतिः पापकृतिः । त, क—अघयति व्याधः । कर्मणोऽर्थमध्यपाठादकर्मकोऽयम् । तथाच—"धातोरर्थान्तरे वृत्ते धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया" ॥ इति गोयीचन्द्र. । धात्वर्थेन सह कर्मण उपसंग्रहादित्यर्थः । क्रमेणोदाहरणानि—नदी वहति क्षरतीत्यर्थः । अघयति व्याध । भवति घटः । आस्ते जनः ।

अवधीर त्कावज्ञायामान्दोल त्क तु दोलने ।
ऊन त्क परिहाणे स्यादोज त्क बलतेजसोः ॥

८। अवधीर ल्क अवज्ञायाम्। (अवधीर—अदन्त० चु० प०) त, क—अवधीरयति साधुमसाधुः। अवधीरितसुहृद्वाक्यस्य फलमेतदिति हितोपदेशः।

९। आन्दोल ल्क तु दोलने। (आन्दोल—अदन्त० चु० प०) त, क—नान्दोलयन्ति परच्छिद्रं साधवः। टौदिविभक्तौ आन्दुदोलत्। तु शब्दः परत्र सम्बन्धज्ञापकः, एवं सर्वत्र।

१०। ऊन ल्क परिहाणे स्यात्। (ऊन—अदन्त० चु० प०) दीर्घादिर्दन्त्योपधः। तथाच—"क्षोभमाशु हृदयं नयदूनां रागवृद्धिमकरोन्न यदूना"मिति माघयमकम्। परिहाण न्यूनक्रिया। त, क—ऊनयति स्वर्णं वणिक् प्रथमपरिमाणात्। परिमाणमात्रेऽयमिति केचित्। ऊनधो ञिः अङ् द्वित्वे स्वस्थानमेव नास्ति अतो नाग्लोपित्वमिति सन्देहनिरासार्थमाह। "मा भवान् ऊनिनत्। अनेकाद्दनुबन्धज्ञापकबलात् द्वित्वात् प्राक् प्राप्तोऽग्लोपित्वान्न स्यादिति" कामधेनौ वोपदेवः।

११। ओज ल्क बलतेजसोः। (ओज—अदन्त० चु०प०) बलमिन्द्रियशक्तिः, तेजःप्राणशक्तिः। मा भवान् ओजिजत्।

## कथ ल्क वाक्यप्रबन्धे कल ल्क गतिसंख्ययोः।
## स्यात् कर्व कत्र कर्त्त ल्क शैथिल्ये कर्ण तक् भिदि॥

१२। कथ ल्क वाक्यप्रबन्धे। (कथ—धा० अदन्त०चु० प०) वाक्यप्रबन्धो वाक्यरचना। त, क—कथयति। टौदिविभक्तौ अचीकथत् अचकथत्।

१३। कल ल्क गतिसंख्ययो। (कल—धा० अदन्त० चु० प०) गतिरिह यापनम् अन्तर्भूतञ्यर्थत्वात्। त, क—कलयति कालं धीरः, यापयति गणयति चेत्यर्थः।

१४। कर्व ल्क शैथिल्ये। (कर्व—धा० अदन्त० चु० प०) रेफद्वययुक्तस्तकारः। त, क— कर्त्रयति कर्त्रापयति धूलिर्जलेन।

१५। कत्र ल्क शैथिल्ये। (कत्र—धा० अदन्त० चु० प०) रेफोपधस्तमध्यः। त, क—कत्रयति कत्रापयति धूलिर्जलेन।

१६। कर्त्त ल्क शैथिल्ये। (कर्त्त—धा० अदन्त० चु० प०) रेफोपधस्तकारः। त, क—कर्त्तयति कर्त्तापयति धूलिर्जलेन।

१७। कर्ण तक् भिदि। (कर्ण—धा० अदन्त० चु० प०) त, क—कर्णयति, कर्णापयति। आङ्पूर्व्वकोऽयं श्रवणे। तथाच—"देवाकर्ण्य येन येन सहसा

यद्यत्समासादित"मिति। उपसर्गास्तत्तदर्थानां द्योतका एव न तु वाचकाः। केवलधातोरनेकार्थत्वेऽवश्यवक्तव्ये उपसर्गपूर्वस्याप्यन्यार्थो धातोरेव कल्प्यते लाघवात्। क्वचिदुपसर्गा धात्वर्थमेवानुवर्त्तन्ते। तथाच—"धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्त्तते। तमेव विशिनष्ट्यन्य उपसर्गगतिस्त्रिधा॥" इति विस्तरवृत्तिः। क्रमेणोदाहरणानि—आदत्ते गृह्णातीत्यर्थः। प्रसूयते अत्र प्रसव एव धात्वर्थः, प्रशब्दस्तमेवार्थं द्योतयति। प्रणमति प्रकर्षेण नमतीत्यर्थः। केचित्तु, अनर्थकोऽन्यः प्रयुज्यते इति चतुर्थचरणं पठन्ति तच्चिन्त्यम्।

काल ल्क कालोपदेशे कुण ल्काभाषमन्त्रयोः।
स्यात् कुमार कुमाल ल्क केलौ केत ल्क मन्त्रणे॥
निश्रावणेऽथ कूण ल्क सङ्कोचेऽथ कुह ल्क ङ।
विस्मायनेऽथ कूट ल्क दाहे मन्त्रे क्रप ल्क तु।
दौर्बल्ये चप ल्क म स्यात् चेपे खच ल्क बन्धने॥

१८। काल ल्क कालोपदेशे। (काल—अदन्त० चु० प०) त, क—अचकालत् कालमियत्तया गणक', एतावती वेलेति कथितवानित्यर्थः।

१९। कुण ल्क आभाषमन्त्रयोः। ( कुण—अदन्त० चु० प० ) ह्रस्वी मूर्द्धन्योपधः। त, क—कुणयति। मन्त्रोऽभिमुखीकरणं, गुप्तोक्तिरित्येके।

२०। कुमार ल्क केलौ। (कुमार—अदन्त० चु० प०) ह्रस्वी। त, क—कुमारयति। अचुकुमारत्।

२१। कुमाल ल्क केलौ। (कुमाल—अदन्त० चु० प०) ह्रस्वी। त, क—कुमालयति। अचुकुमालत्।

२२। केत ल्क मन्त्रणे निश्रावणे। (केत—अदन्त० चु० प०) त, क—केतयति। मन्त्रणं निमन्त्रणम्। अचिकेतत्। निश्रावणं समयोद्भाषणम्।

२३। अथ कूण ल्क सङ्कोचे। ( कूण—अदन्त० चु० प० ) दीर्घी मूर्द्धन्योपधः। त, क—कूणयति। अचुकूणच्चक्षु' सङ्कुचितमभूदित्यर्थः।

२४। अथ कुह ल्क ङ विस्मायने। (कुह—अदन्त० चु० आ०) ह्रस्वी, विस्मायनं अन्यतो विस्मयोत्पादनम्। त, क, ङ—कुहयते कुहकैरैन्द्रजालिको लोकं विस्माययतीत्यर्थः। "स्यातां कुहयते विस्मापयते हेतुतो भय"मिति भट्टमल्लदर्शनाद्विस्मापने इति पाठ इत्येके।

२५। अथ कूट क्त दाहे मन्त्रे। (कूट—अदन्त० चु० प०) दीर्घी। अचुकूटत्। "यः कूटयति शत्रूणां दृष्ट्वा गजघटा रणे" इति हलायुधः। २३४।

२६। क्षप क्त तु दौर्बल्ये। (क्षप—अदन्त० चु० प०) सप्तमस्वरी। क्षपयति। षष्ठस्वरीति विलोचनः। "प्रचुरं प्रथितोऽप्यर्थं नासौ क्षपयति प्रभु"रिति हलायुधः। २३५। अर्थं दातुमितिशेषः।

२७। चप क्त म स्यात् क्षेपे। (चप—अदन्त०चु०प०) त, क—चपयति। म—अचपि अचापि, चपं चप, चापं चापम्। मानुबन्धसामर्थ्यात् स्थानिवत्त्वाभावे दीर्घः। स्वमते तु अत्र दीर्घविधिरुपधां नापेक्षते।

२८। खच क्त बन्धने। (खच—अदन्त० चु० प०) त, क—खचयति।

## खोट खोड़ तक क्षेपे खेट खेड़ क्त भक्षणे।

२९। खोट क्त क्षेपे। (खोट—अदन्त० चु० प०) त, क—अचुखोटत्।

३०। खोड क्त क्षेपे। (खोड—अदन्त० चु० प०) त, क—अचुखोडत्।

३१। खेट क्त भक्षणे। (खेट—अदन्त० चु० प०) त, क—अचिखेटत्। "खेटयत्यरिवीरांश्च संग्रामरसिकान् नृप." इति हलायुध.। १५५। खेटयति हन्तीत्यर्थः।

३२। खेड क्त भक्षणे। (खेड—अदन्त० चु० प०) त, क—अचिखेड़त्।

## गद क्ताभ्रध्वनौ गर्व क्तङ् दर्पेऽथ गृह तकङ्।
## ग्रहे गण तक संख्याने गवेष तक मार्गणे॥

३३। गद क्ताभ्रध्वनौ। (गद—अदन्त० चु०प०) त, क—गदयति मेघः। अभ्रध्वनिर्मेघकर्तृकशब्दः।

३४। गर्व क्तङ् दर्प। (गर्व—अदन्त० चु० आ०) त, क, ङ—गर्वयते गर्वापयते धनैर्नीचः। दर्पोऽहङ्कारः। "विद्याधनसमृद्धोऽपि यो न गर्वयते प्रभु"-रिति हलायुध'। ७१।

३५। अथ गृह क्तङ ग्रहे। (गृह—अदन्त० चु० आ०) सप्तमस्वरी। त, क, ङ—गृहयते। ग्रहो ग्रहणम्। "द्विषां गृहयते श्रिय." इति हलायुधः। ३३

३६। गण क्त सख्याने। (गण—अदन्त० चु० प०) मूर्द्धन्योपधः। त, क—गणयति। ढौदिविभक्तौ अजीगणत् अजगणत्।

३७। गवेष तक मार्गणे। (गवेष—अदन्त०चु०प०) मूर्द्धन्योपधः। मार्गण-

मन्वेषणम् । त, क—अजगवेषत् गुणं गुणी । "गवेषयति सत्क्रियां यः" इति हलायुधः । २४७ ।

गोम ल्क लेपने गात्र ल्कङ् शैथिल्ये गुण ल्क तु ।
मन्त्रे गह्व ल्क गहने चित्र ल्क क्षणिकेक्षणे ।
लेख्येऽद्भुते, चह्व ल्क स्यात् शाठ्ये छद ल्क संवृतौ ॥

३८ । गोम ल्क लेपने । (गोम—अदन्त० चु० प० ) त, क—गोमयति अजुगोमत् गोमयेन स्थानं चेटी ।

३९ । गात्र ल्क ङ् शैथिल्ये । (गात्र—अदन्त० चु० आ० ) दन्त्यवर्गाद्यमध्यः । शैथिल्यं शिथिलीभावः । त, क, ङ—गात्रयते गात्रापयते ।

४० । गुण ल्क तु मन्त्रे । (गुण—अदन्त० चु० प०) ह्रस्वी मूर्द्धन्योपधः । त, क—गुणयति ।

४१ । गह्व ल्क गहने । (गह्व—अदन्त० चु० प०) गहनं दुर्बोधः । त, क—गह्वयति शास्त्रं जड़धीः, दुःखेन जानातीत्यर्थः ।

४२ । चित्र ल्क क्षणिकेक्षणे लेख्येऽद्भुते । (चित्र—अदन्त० चु० प०) क्षणिकेक्षणं कादाचित्कदर्शनम् । त, क—चित्रयति चित्रापयति राहुं लोकः कदाचित् पश्यतीत्यर्थः । चित्रयति प्रतिमां लोकः । अद्भुतं साश्चर्य्यीभावः चित्रयति लोकः आश्चर्य्यान्वितो भवतीत्यर्थः ।

४३ । चह्व ल्क स्यात् शाठ्ये । (चह्व—अदन्त० चु० प०) शाठ्यं प्रतारणम् । त, क—चह्वयति खलः, साधुं प्रतारयतीत्यर्थः ।

४४ । छद ल्क संवृतौ । (छद—अदन्त० चु० प० ) संवृतिराच्छादनम् । त, क—छदयति दिशं मेघः । "छदयति सुरलोकं यो गुणै"रिति हलायुधः ।१६।

छिद्र ल्क भेदे छेद ल्क छेदे तीर ल्क कर्म्मणाम् ।
समाप्तावथतूण ल्क सङ्कोचे तुत्थ तक् स्तृतौ ॥

४५ । छिद्र ल्क भेदे । (छिद्र—अदन्त० चु० प०) भेद इह रन्ध्रकरणम् । त, क—छिद्रयति छिद्रापयति भाण्डं बालकः ।

४६ । छेद ल्क छेदे । (छिद—अदन्त० चु० प०) त, क—अचिच्छेदत् । छेदयत्यहितोदयमिति हलायुधः ।२४६।

४७। तीर त्क कर्मणां समाप्तौ। (तीर—अदन्त० चु० प०) कर्मणा-मिति स्पष्टार्थम्। त, क—अतितीरद् व्रतं लोकः समापितवानित्यर्थः।

४८। अथ तूण त्क सङ्कोचे। (तूण—अदन्त० चु० प०) दीर्घी, मूर्द्धन्योपधः। त, क—अतुतूणत्।

४९। तुत्थ तक् स्तृतौ। (तुत्थ—अदन्त० चु० प०) आद्ये पञ्चमस्वरः शेषे दन्त्यवर्गाद्ययुक्तस्थकारः। त,क—तुत्थयति तुत्थापयति। स्तृतिराच्छादनम्।

**दुःख त्क तत्कृतौ दण्ड त्क तत्पाते ध्वन त्क तु।**
**शब्दे निवास तक् स्तृत्यां प्रेङ्खोल तक चापले॥**

५०। दुःख त्क तत्कृतौ। (दुःख—अदन्त० चु० प०) विसर्गमध्यः। तथा च "काले तडिल्लताजाले घनपीनपयोधरे। कान्तः सर्वगुणोपेतो बालेन्दुः खे न लभ्यते"॥ इति विन्दुच्युतकम्। अस्यार्थः—तडिल्लतासमूहवति घन-स्थूलमेघे काले कमनीयः सर्वगुणोपेतो बालेन्दुः खे आकाशे न लभ्यते। पक्षे हे बाले। सर्वगुणोपेतः कान्तः पतिः दुःखेन लभ्यते इति। त, क—दुःखयति दुःखापयति। मूर्द्धन्यषमध्य इति केचित्। तत्कृतिर्दुःखकरणम्।

५१। दण्ड त्क तत्पाते। (दण्ड—अदन्त० चु० प०) तत्पातो दण्डपात-नम्। त, क—दण्डयति दण्डापयति अपराधिनं राजा।

५२। ध्वन त्क तु शब्दे। (ध्वन—अदन्त० चु० प०) दन्त्योपधः। शब्दो द्विविधः ध्वन्यात्मको वर्णात्मकश्च। भाषवचादीनां प्रयोगादन्यत्र शब्दे ध्वनावि-त्यादि यत्र श्रूयते प्रायेण तत्राव्यक्तशब्दे इति बोध्यम्। त,क—ध्वनयति मृदङ्गः। ध्वनयन्ति च खचराः "यद्गुणान् घोषयन्तो"त्यर्थः इति हलायुधः।२५५।

५३। निवास तक् स्तृत्याम्। (निवास—अदन्त० चु० प०) त, क—अनिनिवासत्। स्तृतिराच्छादनम्। "निवासयति यश्चित्रञ्च चीनांशुक"मिति हलायुधः।१४।

५४। प्रेङ्खोल तक चापले। (प्रेङ्खोल—अदन्त० चु० प०) अन्तस्थ-तृतीयोपधः। त, क—अपिप्रेङ्खोलत्। चापलं चपलीभावः।

**पट त्क वेष्टने पर्ण त्क हारित्ये पट त्क ङ।**
**गतौ पश पषत्कानुपसर्गौ बन्धबाधयोः।**
**स्पर्शगत्योः पसत्कैश्यगत्योः पार त्क तीरवत्॥**

५५। पट त्क वेष्टने। (पट—अदन्त० चु० प०) ग्रन्थने इत्यन्ये। त, क—पटयति मालां मालिकः।

५६। पर्ण त्क हारित्ये। (पर्ण—अदन्त० चु० प०) हरित् पालाश-वर्णस्तस्य भावो हारित्यम्। त, क—पर्णयति पर्णापयति कदलीपत्रम्।

५७। पद त्क ङ गतौ। (पद—अदन्त० चु० आ०) त, क, ङ—पदयते। "यं परिक्षिप्य लक्ष्याणि पदयन्ते पदातयः" इति हलायुधः। यं राजानं परिक्षिप्य परिवार्य्य पदातयः लक्ष्याणि शरवेधयोग्यान् रिपून् पदयन्ते गच्छन्तीत्यर्थः।२०७।

५८। } पश त्क } (पश—अदन्त० चु० प०) (पष—अदन्त० चु० प०)
५९। } पष त्क } अनुपसर्गौ, बन्धबाधयोः स्पर्शगत्यो। द्वौ क्रमात्तालव्यमूर्द्धन्योपधौ। त, क—पशयति, पषयति। अनुपसर्गेति सोपसर्गयोः प्रयोगो निषिध्यते। बाधो विहृति।

६०। पतत्कैश्वर्य्यगत्यो। (पत—अदन्त० चु० प०) ऐश्वर्य्यमीश्वरीभाव। गतिरिह पतनम्। त, क—पतयति पत्र वृक्षात्। "पतयन्ति समन्ततो विपक्षाः" इति हलायुधः।४९।

६१। पार त्क तीरवत्। (पार—अदन्त० चु० प०) त, क—अपपारत्। तीरवदिति कर्मसमाप्तावित्यर्थः।

**पल्यूलपल्युलत्क स्यात् लूनिपूत्योः पुट त्क तु।**
**संसर्गे पक्ष त्क परिग्रहे भाम त्क कोपने॥**

६२। } पल्यूल त्क लूनिपूत्योः } (पल्यूल—अदन्त० चु० प०) (पल्युल—
६३। } पल्युल त्क लूनिपूत्योः } अदन्त० चु० प०) द्वौ यकारयुक्तैक-लकारमध्यौ, क्रमाद्दीर्घह्रस्वमध्यौ च। लूनिश्छेदः, पूतिः पवित्रीकरणम्। त, क—अपपल्यूलत् तृणं लोकः। पल्युलयति जन गङ्गा।

६४। पुट त्क तु संसर्गे। (पुट—अदन्त० चु० प०) त, क—पुटयति पुष्पं सूत्रेण लोकः, संसृजतीत्यर्थः।

६५। पक्ष त्क परिग्रहे। (पक्ष—अदन्त० चु० प०) त, क—पक्षयति, पक्षापयति।

६६। भाम त्क कोपने। (भाम—अदन्त० चु० प०) त, क—अबभामत्। भामयति कुप्यति या सा भामिनी। तथा च "कोपना सैव भामिनी" त्यमरः।

**भाज क्त तु पृथक्कृत्यां मृग क्त ङ तु मार्गणे।**
**मह क्त पूजे मूत्र क्त प्रस्रावे मन तक् धृतौ॥**

६७। भाज क्त तु पृथक्कृत्याम्। (भाज—अदन्त० चु० प०) त, क—अबभाजत् धनं भ्रातृवर्गः। "विभाजयति यो द्रव्य"मिति हलायुधः।२६४।

६८। मृग क्त ङ तु मार्गणे। (मृग—अदन्त० चु० आ०) त, क, ङ—मृगयते। मार्गणमनुसन्धानम्। "रामो मृगं मृगयते वनवीथिकासु" इति महानाटकम्।"सेवायै मृगयामहे नरमहो मूढा वराकावय"मिति शान्तिशतके। कातन्त्रादौ "मृग्य अन्वेषणे" इति दिवादिपरस्मैपदी धातुश्च दृश्यते, दुर्गसिंह-त्रिलोचनयोरसम्मतत्वादनेनोपेक्षितः। "मृग्यन्तः पदवीं तथाप्यकरुणा व्याधा न मुञ्चन्ति मा"मिति तु अकारान्तस्यैव भावे क्विपि त्रिलोपे मृगं करोतीति कण्ड्वादित्वात् क्ये साध्यम्।

६९। मह क्त पूजे। (मह—अदन्त० चु० प०) त, क—महयति।

७०। मूत्र क्त प्रस्रावे। (मूत्र—अदन्त० चु० प०) दीर्घी। त, क—मूत्रयति मूत्रापयति।

७१। मन तक् धृतौ। (मन—अदन्त० चु० प०) दन्त्योपधः। त, क—मनयति।

**मृष क्त मृष तञ् क्षान्तौ मिश्र त्क्यूत्यां रह क्त तु।**
**त्यागे रस क्त त्वास्वादे स्नेहे रूप क्त तत्कृतौ॥**

७२। } मृष क्त क्षान्तौ } (मृष—अदन्त० चु० प०) (मृष—अदन्त०
७२। } मृष त ञ क्षान्तौ } उ०) द्वौ मूर्द्धन्योपधौ। त, क—मृषयति। "मृषयति न नृपाणा"मिति हलायुधः, अणुमात्रमनुचित य इति शेष.।१५। त, ञ—मृषति, मृषते।

७३। मिश्र क्त यूत्याम्। (मिश्र—अदन्त० चु० प०) तालव्यमध्योऽयं, दन्त्यमध्य इति वर्णदेशनायाम्। यूतिः संयोजनम्। त, क—मिश्रयति मिश्रापयति घृतेनान्नं लोकः।

७४। रह क्त तु त्यागे। (रह—अदन्त० चु० प०) त, क—रहयति शोकं धीर'। "न भूरि दान विरहय्य सत्क्रिया"मिति भारविः।

७५। रस क्त त्वास्वादे स्नेहे। (रस—अदन्त० चु० प०) दन्त्योपधः।

त, क—रसयति मधु द्विरेफः । "रसयन्ति मुखाद्यानि तत्करप्रतिपालिताः" इति हलायुधः । यस्योद्याने पतत्रिण इति शेषः ।२०२।

७६ । रूप त्क तत्कृतौ । (रूप—अदन्त० चु० प०) तत्कृतौरूपयुक्तकरणम् । त, क—अररूपत् प्रतिमां शिल्पी । निपूर्वकः स्वरूपकथने, "अनुमानं निरूप्यते" इत्यनुमानखण्डम् ।

**रच त्क कृत्यां रूक्ष त्क पारुष्ये रंह तक् गतौ ।**
**रूष त्क स्याद्विस्फुरणे लज लञ्ज त्क भासने ॥**

७७ । रच त्क कृत्याम् । (रच—अदन्त० चु० प०) त, क—रचयति ।

७८ । रूक्ष त्क पारुष्ये । (रूक्ष—अदन्त० चु० प०) दीर्घी । तथा च—"स पुनातु व्रजे यस्य गोरजःपातरूक्षितौ । शिशुरुच्छिद्य यमजौ निष्पिपेष तरूक्षितौ" ॥ इति कीचकयमकम् । पारुष्यमस्निग्धीभावः । त, क—रूक्षयति रूक्षापयति केशः ।

७९ । रंह तक् गतौ । (रंह—अदन्त० चु० प०) त, क—रंहयति, रंहापयति ।

८० । रूष त्क स्यात् विस्फुरणे । (रूष—अदन्त० चु० प०) दीर्घी । मूर्द्धन्योपधः । त, क—अररूषत् । "पदातिरन्तर्गिरिरेणुरूषितः" इति किराते ।१।३४।

८१ । लज त्क भासने । (लज—अदन्त० चु० प०) भासनं दीप्तिः । त, क—लजयति ।

८२ । लञ्ज त्क भासने । (लञ्ज—अदन्त० चु० प०) भासनं दीप्तिः । त, क—लञ्जयति, लञ्जापयति ।

**लड़ लाड़ तक क्षेपे ललत्क्येप्से वरत्क च ।**
**वर्ण त्क स्तुतिविस्तारशुक्लाद्युद्युक्तिदीपने ॥**

८३ । लड तक क्षेपे । (लड—अदन्त० चु० प०) त, क—लड़यति, अललडत् ।

८४ । लाड तक क्षेपे । (लाड—अदन्त० चु० प०) त, क—लाड़यति, अललाड़त् ।

८५ । ललत्क्येप्से । (लल—अदन्त० चु० प०) ईप्स इति आपधातोः सनन्तस्य भावे अलिरूपम् । ननु संस्याद इत्यनेन समानरूपोऽपि अल् कथ न

बाध्यते इति चेन्न, स्त्रीविहितप्रत्यये. कश्चित् सरूपोऽपि न बाध्यते इति मतस्या-वश्यवक्तव्यत्वात्। अतएव कारणं भर्त्सनं मिथ्यातनं निशामनमित्यादौ णौचि-श्रन्थिग्रन्थीत्यनेन अनट् न बाध्यते। एवं वक्ष्यमाणेषु व्रीड़ लज्जे, ईह ईहे इत्यादिष्वपि बोध्यम्। त, क—ललयति धनं लोकः।

८६। वर त्क च। (वर—अदन्त० चु० प०) रेफोपधः। त, क—वरयति। चकारादीप्से।

८७। वर्ण त्क स्तुतिविस्तारशुक्लाद्युद्युक्तिदीपने। (वर्ण—अदन्त० चु० प०) उद्युक्तिरुद्योगः। त, क—वर्णयति वर्णापयति कविः स्तौतीत्यर्थः। वर्णयति तन्तुं तन्तुवायः विस्तारयतीत्यर्थः। वर्णयति प्रतिमां कारुः शुक्लादिवर्णां करोतीत्यर्थः। वर्णयति रविः उद्युङ्क्ते दीप्यते चेत्यर्थः। शुक्लाद्यत्युक्तिदीपने इत्यपि पाठ इति केचित्।

वस त्क वासे वासत्कोपसेवायां व्यय त्क तु।
गतौ वित्त त्क च त्यागे वात त्क गतिसेवयोः॥
सुखे वेल त्क कालार्थे वुं च त्क दृशि वराट तक्।
भागे वट त्क वेष्टे च वल्यूल वल्युल त्क तु॥
पल्यूलार्थेऽथ वीज त्क व्यजने वीर तङ्क तु।
शौर्य्ये व्रण त्काङ्गचूर्णे अथशारश्लथ त्क तु॥
दौर्बल्ये श्राम तक् मन्त्रे शूर त्कङ् विक्रमे शठ।
श्वठ त्क दुर्वाचि शील तकाभ्यासेऽतिशायने॥

८८। वस त्क वासे। (वस—अदन्त० चु० प०) त, क—वसयति सुखं लोकान् राजा निवासयतीत्यर्थः।

८९। वासत्कोपसेवायाम्। (वास—अदन्त० चु० प०) उपसेवागुणान्तरा-धानम्। त, क—अववासत् वस्त्रं चन्दनेन जनः। "यस्या गन्धेन वासित"मिति विष्णुपुराणम्।

९०। व्यय त्क तु गतौ। (व्यय—अदन्त० चु० प०) त, क—व्यययति धनं दाता। "बहु व्यययति द्रव्य"मिति हलायुधः।११७।

९१। वित्त त्क च त्यागे। (वित्त—अदन्त० चु० प०) त, क—वित्तयति, वित्तापयति। चकारात् व्यय त्क च "व्ययधातुरपि त्यागार्थकः" इत्यर्थः।

९२। वात क्व गतिसेवयोः सुखे। (वात—अदन्त० चु० प०) त, क—अववातत्। त्रयोऽर्थाः। रमानाथस्तु गतिसुखसेवनयोरिति मत्वा गतौ सुखं गतिसुखं, वातयति पान्थं वातः गच्छन्तं सुखयतीत्यर्थं इत्याह। सुखसेवनयोरिति जौमराः।

९३। वेल क्व कालार्थे। (वेल—अदन्त०चु०प०) कालार्थः कालोपदेशः। त, क—अविवेलत् कालमियत्तया गणकः एतावती वेलेति कथितवानित्यर्थः।

९४। वृेच क्व दृशि। (वृेच—अदन्त० चु० प०) अन्तस्थाद्वतीययुक्तः। त, क—वृेचयति वृेचापयति। दृशि दर्शने।

९५। वण्ट क्व भागे। (वण्ट—अदन्त० चु० प०) त, क—वण्टयति, वण्टापयति। "वण्टयन्ति च रत्नानि भूमिं वण्टापयन्ति च" इति हलायुधः। विप्रा इति शेषः।७८।

९६। वट क्व वेष्टे च। (वट—अदन्त० चु० प०) त, क—वटयति। चकारात् भागे च।

९७। वल्यूल क्व पल्यूलार्थे। (वल्यूल—अदन्त० चु० प०)(वल्युल—
९८। वल्युल क्व अदन्त० चु०प०) द्वौ यकारयुक्तौ लकारमध्यौ, क्रमाद्दीर्घह्रस्वमध्यौ च। त, क—अववल्यूलत्, वल्युलयति। पल्यूलार्थे लूनिपूत्योरित्यर्थः।

९९। वीज क्व व्यजने। (वीज—अदन्त० चु० प०) त, क—अविवीजत् चामरेण नृपं भृत्यः। "वीज्यते स हि संसुप्तः" इति कुमारसम्भवे। वीज इति जान्तो गत्यर्थो भ्वादिरात्मनेपदी कातन्त्रे दृश्यते।

१००। वीर त ङ्‌क्व शौर्य्ये। (वीर—अदन्त० चु० आ०) त, ङ, क—अविवीरत। शौर्य्यमुद्यमः।

१०१। व्रण क्व अङ्गचूर्णे। (व्रण—अद० चु० प०) अङ्गचूर्णमङ्गभेदः। त, क—व्रणयति गात्रं वाणेन भटः।

१०२। श्रथ क्व दौर्बल्ये। (श्रथ—अदन्त० चु० प०) (श्रार—अदन्त०
१०३। श्रार क्व चु० प०) (श्लथ—अदन्त० चु० प०) आद्यो रेफयुक्तः,
१०४। श्लथ क्व मध्यमो रेफोपधः, शेषोऽन्तस्थाद्वतीययुक्तः। त, क—श्रथयति, अशश्रारत्, श्लथयति।

१०५। श्राम क्व मन्त्रे। (श्राम—अदन्त० चु० प०) त, क—अशश्रामत्। मन्त्रोऽभिमुखीकरणम्। गुप्तोक्तिरित्येके।

१०६। शूर क्ल ङ् विक्रमे। (शूर—अदन्त० चु० आ०) दीर्घी। त, क—अशुशूरत। विक्रम उद्यमः। "रणे शूरयते यश्चे"ति हलायुधः।२४४।

१०७। शठ क्ल } दुर्वाचि। (शठ—अदन्त० चु० प०) (श्वठ—अदन्त०
१०८। श्वठ क्ल } चु० प०) शेषो वकारयुक्तः। त, क—शठयति श्वठयति नीचः कुत्सितं वदतीत्यर्थः। रमानाथस्तु सम्यग्भाषणे इति मत्वा शठयति सम्यग्वदतीत्यर्थं इत्याह। सम्यग्भाषण इति जौमराः। सम्यग्भावे इत्येके।

१०९। शील क्ल अभ्यासेऽतिशायने। (शील—अदन्त० चु० प०) तालव्यादिः। अतिशायनमतिशयकरणम्। त, क—अशिशीलत्। उपधारण इत्यन्ये। "शीलय नीलनिचोलम्"इति जयदेवः। "शीलयत्यात्मनोहितम्"इति हलायुधः।२४५।

**षमष्टम क्ल वैक्लव्ये सान्त्वसाम क्ल सान्त्वने।**

११०। षम क्ल } वैक्लव्ये। (षम—अदन्त० चु० प०) (ष्टम—अदन्त०
१११। ष्टम क्ल } चु० प०) द्वौ मूर्द्धन्यादी। षोपदेशपाठो ण्याद्यादीति दन्त्यत्वे कृतषकारत्वात् षत्वार्थः। त, क—सिषमयिषति, सिष्टमयिषति। एवं सर्वत्र। वैक्लव्यं विह्वलीभाव।

११२। सान्त्व क्ल } सान्त्वने। (सान्त्व—अदन्त० चु० प०) (साम—अदन्त०
११३। साम क्ल } चु० प०) द्वौ दन्त्यादी। आद्यस्तमध्यो वकारोपधः। एतयोरजन्तसादित्वेऽपि दन्त्यादित्वस्य बोज ष्टकस्तक म प्रतीघाते इत्यत्र दृश्यम्। सान्त्वन प्रियकरणम्। त, क—सान्त्वयति सान्त्वापयति। अससामत् दीनं धनेन दाता। "य सामयति सामज्ञः स्निग्धैरालोकनैश्च ताः" इति हलायुधः। ताः सीमन्तिनीः।२२३।

**सङ्ग्राम ङ ञ तक् युद्धे स्पृहत्क्लेप्से साट क्ल तु।**
**प्रकाशने सभाज क्ल सेवने प्रीतिदर्शने॥**

११४। सङ्ग्राम ङ ञ त क् युद्धे। (सङ्ग्राम—अदन्त० चु० आ० उ०) त, क, ङ—सङ्ग्रामयते। ञ—सङ्ग्रामयति, सङ्ग्रामयते। "तस्थौ सिसङ्ग्रामयिषुः शितेषु"रिति भट्टिः।३।४७। ञित्त्वेनैवोभयपदसिद्धौ ङित्करणमफलवत्कर्त्तर्य्यात्मनेपदार्थम्। एवं सर्वत्र। किन्त्वेष आत्मनेपदीति प्राञ्चः। कदाचित् परस्मैपदार्थो ञकारः।

११५। स्पृह क्प्से। (स्पृह—अदन्त० चु० प०) त, क—स्पृहयति। ईप्सः प्राप्तुमिच्छा।

११६। साट क्त प्रकाशने। (साट—अदन्त० चु० प०) द्वितीयस्वरयुक्त-दन्त्यसादिरयम्। त, क—असमाटत्।

११७। सभाज क्त सेवने प्रीतिदर्शने। (सभाज—अदन्त० चु० प०) त, क—अससभाजत्। "स .जयति सज्जनान्"इति हलायुध.। सेवते इत्यर्थः।२६४। "त्वं ह्यात् सभाजयितुमेत्यदिनान्यमूनी"त्युत्तरचरितम्।

स्थूल क्तङ् वृंहणे सूत्र क्त ग्रन्थे सत्र तङ्क तु।
सम्बन्धे सन्ततौ सूचक्तपैशुन्ये स्वर क्त तु॥
आक्षेपे स्तेन तक् चौर्य्ये स्तोम क्त श्लाघने स्तनत्।
काभ्रशब्दे सार तक् दौर्बल्ये सुख क्त तत्कृतौ॥

११८। स्थूल क्तङ् वृंहणे। (स्थूल—अदन्त० चु० आ०) दीर्घी। त, क, ङ—अतुस्थूलत। वृंहण वृद्धिः।

११९। सूत्र क्त ग्रन्थे। (सूत्र—अदन्त० चु० प०) दीर्घी, दन्त्यवर्गाद्य-मध्यः। वेष्टने इत्यन्ये। त, क—सूत्रयति सूत्रापयति सूत्रेण हस्त लोक.।

१२०। सत्र त ङ्क तु सम्बन्धे सन्ततौ। (सत्र—अदन्त० चु० आ०) दन्त्यवर्गाद्यमध्यः। सन्ततिर्निर्वाहक्रियेति भट्टमल्लः। त, क, ङ—सत्रयते सत्रापयते प्रतिज्ञां साधु। सन्ततिर्विस्तार इति गोविन्दभट्ट।

१२१। सूच क्त पैशुन्ये। (सूच—अदन्त० चु० प०) दीर्घी। त, क—"असुसूचत् कथा लोक" कथितवानित्यर्थं इति रमानाथः। पैशुन्यमन्तर्द्रोह इत्येके।

१२२। स्वर क्त तु आक्षेपे। (स्वर—अदन्त० चु० प०) वकारयुक्तादीरेफो-पधश्च। आक्षेपस्तिरस्कार.। "स्वरयत्यतिकोऽपि न कश्चन परिग्रहम्" इति हलायुधः।२२२। न स्वरयति नाधिक्षिपति न भर्त्सयतीति यावत्, परिग्रहं परिजनम्। त, क—सिस्वरयिषति। पञ्चमस्वरयुक्त इति चतुर्भुजः। सुरयति, सुसुरयिषति।

१२३। स्तेन तक् चौर्य्ये। (स्तेन—अदन्त० चु० प०) त, क—अतिस्तेनत् धनं चौरः।

१२४। श्लोम ल्क श्लाघने। (श्लोम—अदन्त० चु० प०) श्लाघनं प्रशंसा। त, क—अशुश्लोमत् कविं बुधः।

१२५। स्तन ल्काभ्रशब्दे (स्तन—अदन्त० चु० प०) त, क—स्तनयति मेघः। "स्तनितं गर्ज्जितं मेघनिर्घोषे रसितादि च" इत्यमरः।

१२६। सार तक् दौर्बल्ये। (सार—अदन्त० चु० प०) रेफोपध.। त, क—अससारत्।

१२७। सुख ल्क तत्कृतौ। (सुख—अदन्त० चु० प०) तत्कृतिः सुखक्रिया। त, क—श्रीजयदेवकवेरिति गीतं सुखयतु केशवपदमुपनीतमित्यादि।

**स्फुट ल्क स्याद्विसरणे स्कन्द ल्क तु समाहृतौ।**
**स्वन स्यम तक ध्वाने हिल्लोल तक दोलने॥**

१२८। स्फुट ल्क विसरणे। (स्फुट—अदन्त० चु०प०) विसरणं विकसनम्। त, क—स्फुटयति चम्पककलिका। अपुस्फुटत्।

१२९। स्कन्द ल्क समाहृतौ। (स्कन्द—अदन्त० चु० प०) दन्त्यवर्ग-तृतीयोपधोऽय, तच्चतुर्थोपधोऽयमिति केचित्। त, क—स्कन्दयति स्कन्दापयति। अचस्कन्दत्।

१३०। स्वन तक }
१३१। स्यम तक } ध्वाने। (स्वन—अदन्त० चु० प०) (स्यम—अदन्त० चु० प०) द्वौ वकारान्तस्यादियुक्तौ क्रमात्। त, क—स्वनयति, स्यमयति।

१३२। हिल्लोल तक दोलने। (हिल्लोल—अदन्त० चु० प०) अन्तस्थतृतीयद्वयमध्यस्तदेकोपधश्चायम्। त, क—अजिहिल्लोलत् वायुर्लताम्।

**इत्यकारान्तधातूनां सद्वात्रिंशच्छतं मतम्।**

तुल्यावयवानां धातूनां पृथक्पठितानामप्येकत्वे संख्यासङ्गति।

अदन्तचुरादिषु अङ्कादिहिल्लोलान्ता धातवः परिगणनया त्रयस्त्रिंशदधिकशतसंख्यका भवन्ति। किन्तु मृष ल्क क्षान्तौ मृषतक क्षान्ताविति गणद्वये धातुद्वयस्य तुल्यावयवत्वादेकत्वे समुदायस्य सद्वात्रिंशच्छतसंख्याया नामङ्गतिरित्याशयः।

---

## आकारान्तवर्गः ।

**ख्याल् ख्यातौ कथने गार्लि स्तुतौ जन्मनि गाङ् गतौ ।**
**घ्रा गन्धग्रहणे ज्या गि जरायां ज्ञा ग बोधने ॥**

१ । ख्याल् ख्यातौ कथने । (ख्या—अदा० प०) ख्यातिः प्रसिद्धिः । ल—ख्याति गुणी प्रसिद्धः स्यादित्यर्थः । ख्याति साधु कथां हरे । तथा च ख्या प्रकथने, प्रकथनं प्रसिद्धिरिति गोविन्दभट्टः । ख्या प्रकथने इति चतुर्भुजजुमरौ ।

२ । गार्लि स्तुतौ जन्मनि । (गा—ह्वा० प०) र—वैदिकः । लि—जगाति ।

३ । गाङ् गतौ । (गा—भ्वा० आ०) ङ—गाते ।

३ । घ्रा गन्धग्रहणे । (घ्रा—भ्वा० प०) जिघ्रति पुष्पं लोकः ।

४ । ज्या गि जरायाम् । (ज्या—क्र्यादि० प्वादि० प०) जरा—गतबहुवयोभावः । गि—जानाति वृद्ध । जीनः, ज्यानिः । "न जिनाति तेजः" इति हलायुध. ।

५ । ज्ञा ग बोधने । (ज्ञा—क्र्या० प०) ग—जानाति । "सन्दर्भशुद्धिं गिरां जानीते जयदेव एव" इत्यत्रानुपसर्गात् फलवत्कर्त्तर्य्यात्मनेपदम् । "ततोऽनुजज्ञे गमनं सुतस्य" इत्यत्रानुशब्दस्योपसर्गप्रतिरूपकत्वेनानुपसर्गत्वात् । शेषोदाहरणे कर्मणि प्रत्यय इत्यप्यन्ये ।

**ज्ञाक् म मारण आलोके निशाने तोषणे स्तुतौ ।**
**ज्ञाक् प्रेरणे दाल लूनौ दा तु दाने डुदाञ्लि च ॥**

५ । ज्ञाक् म मारण आलोके निशाने तोषणे स्तुतौ । (ज्ञा—चु० घटादि० प०)क, म—ज्ञपयति, अज्ञपि अज्ञापि, ज्ञप ज्ञप, ज्ञाप ज्ञापम् ।"ओस्मृमोस्तुर्घस्वेत्युक्तेः" आलोकदर्शनप्रेरणम् । निशान तीक्ष्णीकरणम् । तोषण तुष्टीकरणम् । ज्ञपयति शत्रु शूरोमारयतीत्यर्थं । "यज्ञे सञ्ज्ञापयत्यजान्" इति हलायुध ।६८। छिनत्तीत्यर्थ । ज्ञपयति रूपं कामिनी षिड्गान् दर्शयतीत्यर्थ. । ज्ञपयति खड्गं कर्म्मकार शानयतीत्यर्थः । ज्ञपयति गुरुं शिष्यस्तोषयतीत्यर्थः । स्तुतिः केचिन्न मन्यते । आलोको ज्ञानप्रेरणमित्यनुन्यासरचितौ । अतएव क्रमदीश्वरोऽपि जानातेर्घटादित्वं विभाषया मन्यते । तेन ज्ञपयितु बोधयितुमित्य-

माणो ज्ञीप्स्यमान इति पाणिनीयवृत्तौ ज्ञानप्रेरणेऽपि क्रस्ते सनि ज्ञीप्स्यमान इति प्रसिद्धम् । एवं,"विज्ञसिरेषा मम जीवबन्धो"इत्यादिषु च विज्ञापनमेवार्थः ।

५ । ज्ञा क प्रेरणे । (ज्ञा—चु० प०) प्रेरणमिह नियोजनम् । क—ज्ञापयति भृत्यं स्वामी नियुङ्क्ते इत्यर्थः । "आज्ञापय ज्ञातविशेष पुंसाम्"इति कुमारसम्भवम् ।३।३।

६ । दा ल लूनौ । (दा—अदा० प०) ल—दाति । लूनिश्छेदः । केचित्तु दा प लवने इति पठित्वा पित्त्वाद्दासंज्ञाभावे यगादौ दायते इत्यादि मन्यन्ते । स्वमते तु पित्त्वाभावाद्दासंज्ञायां दीयते इत्याद्येव ।"दाति दारिद्र्यमर्थिनाम्"इति हलायुधः ।२४।

६ । दा तु दाने । (दा—भ्वा० प०) दान दाने इति प्रसिद्धोऽयम् अस्यैव यच्छादेशः । यच्छति । "दरिद्रान् भर कौन्तेय मा प्रयच्छेश्वरे धनम्" इत्यादि ।

६ । डुदाञ्लि च । (दा—ह्वा० उ०) डु—दत्त्रिमम् । ञ, लि—ददाति दत्ते । चकाराद्दाने ।

दरिद्रा खलु दुर्गत्यां द्रा ल स्वप्ने पलायने ।
डु धाञ्लि धारणे पुष्टौ दाने ध्माग्नियुतौ ध्वनौ ॥

७ । दरिद्रा खलु दुर्गत्याम् । (दरिद्रा—अदा० प०) दुर्गतिरकिञ्चनीभावः । ख, लु—उपर्य्युपरि पश्यन्त सर्व एव दरिद्रति । दरिद्रतीत्यत्र जक्षादित्वात् द्विरुक्तत्वे अन्तोऽद्दे रित्यनेन अदादेश, स्वमते स्वपादेः प्रयोजनं नास्तीत्युक्तं प्राक् ।

८ । द्राल स्वप्ने पलायने । (द्रा—अदा० प०) स्वप्नो निद्रा । निपूर्वक एव निद्रायामिति रमानाथः । ल—निद्राति । निद्रालु । द्राति चौरः पलायते इत्यर्थः । "न निद्राति च सन्ध्ययोः" इति हलायुधः ।२५४।

९ । डुधाञ्लि धारणे पुष्टौ दाने । (धा—ह्वा० उ०) डु—हित्रिमम् । ञ, लि—दधाति धत्ते । धारणं धृतम् । धारणमित्यस्य ञान्तत्वभ्रमनिरासार्थमिदं व्याख्यानम् । दाने—"द्विषता विहित त्वयाथवा" इति किराते विहितं दत्तमित्यर्थः । पुष्टौदधतुर्भुवनद्वयमिति रघौ ।१।२६।

१० । ध्माग्नियुतौ ध्वनौ । (ध्मा—भ्वा प०) युतिरिह बाहुल्याब दीर्घः । अग्नियुतिरग्निसंयोग । ध्वनि शब्दोत्पत्तिहेतुभाव. । धमति स्वर्णं वणिक् अग्निसयुक्त करोतीत्यर्थ. । धमति शङ्ख जनः सशब्द करोतीत्यर्थः । अग्नि-

फुत्कृतौ च, मुखेनैव धमेदग्निमिति । "नाडीन्धम: स्वर्णकारः" इत्यमरः । शङ्खान् दध्मुः पृथक् पृथगित्यादि ।

**प्सा ल भक्षे प्रा ल पूर्त्तौ पा पाने पा ल रक्षणे ।**
**भा ल्ष दीप्तौ मा ङ्लि शब्दे मा ल्च मानेऽथ मा ङ्य च ॥**

११ । प्सा ल भक्षे । (प्सा—अदा० प०) ल—प्साति । "मांसमप्सासीत्" इति भट्टिः ।१५।६।

१२ । प्रा ल पूर्त्तौ । (प्रा—अदा० प० ) ल—प्राति घटं जलेन लोकः । पूर्त्तिः पूरणम् ।

१३ । पा पाने । (पा—भ्वा० प०) अस्यैव पिबादेशः, पिबति पयः पान्थः ।

१३ । पा ल रक्षणे । (पा—अदा० प ) ल—पाति ।

१४ । भा ल्ष दीप्तौ । ( भा—अदा० प० ) ल—भाति । ष—भा । "भीषिचिन्ति" इत्यनेन षित्वात् डप्रत्ययः । "हिमाद्रिटङ्कादिव भान्ति यस्याम्" इति भट्टिः ।१।८।

१५ । माङ्लि शब्दे । (मा—ह्वा० आ०) ङ, लि—मिमीते । शब्दायते दुन्दुभिरित्यर्थः । परत्र मा ल्च माने इत्यत्र चकारेणास्यापि परिमाणार्थत्व-मुक्तम् । तथाच—"पुरः सखीनाममिमीत लोचने" इति कुमारसम्भवम् ।५।१५।

१५ । मा ल्च माने । (मा—अदा० प०) ल—माति भूमिं नस्वं न राजा । "न माति मानिनो यस्य यशस्त्रिभुवनोदरे" इति हलायुधः ।७१। अयं धातुः परिमाणकरणार्थे सकर्म्मकः, परिमितीभावार्थे चाकर्मकः । तथा च—"तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः" इति माघः ।१।२३।

१५ । अथ माङ्य च । (मा—दिवा० आ०) ङ, य—मायते । चकारात् माने ।

**म्नाभ्यासे याल् गतौ राल दाने लाल् च ग्रहेऽथ वाक् ।**
**सुखाप्तिगतिसेवासु स्याद्दाल् गमनहिंसयोः ॥**

१६ । म्नाभ्यासे । (म्ना—भ्वा० प०) अभ्यासः पौनःपुन्येनानुशीलनम् । मनति सन्ध्यां ब्राह्मणः । आम्नायते सम्यगभ्यस्यते मुनिभिरसावित्याम्नायो वेद इत्याम्नायशब्दटीकायां भरतः । क्वचिदन्यार्थेऽपि । तथा च—"त्वामामनन्ति प्रकृतिम्" इति कुमारसम्भवम् ।२।१३।

१७। याल् गतौ। (या—अदा० प०) ल—याति।

१८। राल दाने। (रा—अदा० प०) ल—राति।

१९। लाल् च ग्रहे। (ला—अदा० प०) ल—लाति। चकारात् राल च। राधातोरपि ग्रहणार्थत्वमित्यर्थः। ग्रहो ग्रहणम्।"ताम्वालासीद्दियन्नताम्" इति भट्टिः।१५।५३।

२०। अथ वाक् सुखाप्तिगतिसेवासु। (वा—चु० प०) क—वापयति। सुखाप्तिरुपभोगः।

२०। स्याद्वाल् गमनहिंसयो। (वा—अदा० प०) ओष्ठ्यादिरप्ययमित्येके। गमनमिह वायुकर्त्तृकमेव। ल—वाति वायु। "न वाति वायुस्तत्पार्श्वे ताल-वृन्तानिलाधिकम्" इति कुमारसम्भवम्।२।३५। हिंसनं सूचनमिति चतुर्भुज।

**श्राल् स्वेदे श्राल्म पाके ञिष्ठास्थाने ष्णालशोधने।**
**ओहाक्लित्याग ओहाङ्लिगतावान्तास्त्विरष्टधा॥**

२१। श्राल् स्वेदे। (श्रा—अदा० प०) रेफयुक्तस्तालव्यादि। ल—श्राति।

२१। श्राल्म पाके। (श्रा—अदा० घटा० प०) रेफयुक्तस्तालव्यादिः। ल—श्राति। "श्राति श्रेष्ठं हविरभिमत श्रोत्रियाणां गृहेषु" इति हलायुध.।१९। म—श्रपयति।

२२। ञिष्ठा स्थाने। (स्था—भ्वा० प०) ञि—स्थित अस्तीत्यर्थ। स्थानं गतिनिवृत्तिः। स्थिरीभाव इत्यपि। तिष्ठति साधुर्धर्मे। "पृष्ठतस्तिष्ठमान" इति वीररचिते प्रकाशार्थे आत्मनेपदविधानात् शान। अथवा ताच्छील्ये शतु शानः।

२३। ष्णाल शोधने। (स्ना—अदा०प०) मूर्द्धन्यादिरयम्। षोपदेशोऽयम्। दन्त्यादिरिति केचित्। ल—स्नाति गङ्गायां धीर। "अनुपसर्गस्य णौ ज्वल-ह्वल—" इत्यादिना ह्रस्वो वा, स्नपयति स्नापयति। सोपसर्गस्य तु प्रस्नापयति।

२४। ओहाक्लि त्यागे। (हा—ह्वा० प०) ओहालि त्यागे इति प्रसिद्धो-ऽयम्। यत्र हाक इति ग्रहण तत्रास्यैव विषय, तेन"दामागैहाक" इत्यादिसूत्रे-णास्य हीयते इत्यादि। अन्यस्य हायते इत्यादि। ओ—हीन। लि—जहाति। "जहातु नैनं कथमर्थसिद्धि"इति भारवि।३।१४।"हातव्योऽयमसार एव विरसः संसार इत्यादिकम्। सर्वस्यैव हि वाचि चेतसि पुनः कस्यापि पुण्यात्मनः"॥ इति शान्तिशतकम्। अकर्मकश्चायम्। यथा—स्वार्थाद्धीनः, एवं जहाति अपैति स्वार्थो यस्यामिति जहत्स्वार्था वृत्तिः।

२४। ओ हा ङ् लि गतौ। (हा—ह्वा० आ०) ओ—हानः। ङ, लि—जिहीते। "उपाजिहीथा न महीतलं यदि" इति माघः।१।३७। धातूनामनेकार्थत्वादुन्नयनार्थेऽपि, तथा च—"सौमित्रिरचिभ्रुवमुज्जिहानः" इति भट्टिः।३।४७।

## आन्तास्त्विरष्टधा।

आन्ता आकारान्ता धातवस्त्विरष्टधा चतुर्विंशतिः। पूर्ववत् तुल्यावयवानां धातूनामेकरूपत्वे सङ्ख्यासङ्गतिरित्यनुसन्धेयम्।

---

## इकारान्तवर्गः।

इ इ ल् गतावधी ल् स्मृत्यामधीङ् लध्ययने किंलि।
ज्ञाने चि न् ग ष हिंसायां चि क्षयैश्वर्य्ययोः चिश॥
वासगत्योश्चिरिन् हिंसि, चिन्चिञ्चित्यान्तुचिक्मिच।

१। इ गतौ। (इ—भ्वा० प०) अयति। "अयमुदयति मुद्राभञ्जनः पद्मिनीनाम्" इत्यादि।

१। इल् गतौ। (इ—अदा० प०) ल—एति। पृथक्पाठसामर्थ्यात् पूर्वो न लित्। शेषस्तु इ न गताविति प्रसिद्ध। यिनोऽच्यणावित्यादिषु ग्रहणमस्यैव। "उदेति सविता ताम्रस्ताम्र एवास्तमेति च" इति साहित्यदर्पणम्।"चतुरस्तोयनिधीनिवायतान्"इति भारवि.।२।२३। "ततोऽभ्यगाद्गाधिसुतः क्षितीन्द्रम्" इति भट्टिः।१।१७।

१। अधी ल् स्मृत्याम्। (अधि-इ—अदा० प०) अधिरुपसर्गः। अधिग्रहणमन्यपूर्वस्य केवलस्य च प्रयोगनिषेधार्थम्। एवं सर्वत्र। ल—अध्येति तव लक्ष्मण.। तव त्वामित्यर्थ.।"स्मृत्यर्थदयेशां वा"इति कर्मणि षष्ठीविधानात्। इक स्मरणे इति प्रसिद्धोऽयम्। इन्वदिक इत्यदास्यैव ग्रहणम्।

१। अधी ङ् ल् अध्ययने। (अधि-इ—अदा० आ०)' अध्ययनमर्थतः शब्दतश्च गुरुतो ग्रहणम्। ङ, ल—वेदमधीते विप्रः। "सोऽध्यैष्ट वेदान्" इति भट्टिः।१।२।

२। किं लि ज्ञाने। (कि—ह्वा० प०) र—वैदिकः। लि—चिकेति।

३। चि नगष हिंसायाम्। (चि—स्वा० क्र्या० प०) न—क्षिणोति।

ग—चिणाति। "चिणाति दुरितं इष्ट्या" इति हलायुध ।११०। प—चिया। "आयुः परं चीयते" इति तु कर्मकर्त्तरि साध्यम्।

२। चि चयैश्वर्य्ययोः। (चि—भ्वा॰ प॰) चयति पापम्।

३। चि श वासगत्योः। (चि—तुदा॰ प॰) श—चियति। चियन्ति निवसन्त्यस्यामिति चिति'। "चि श वासगत्योराधारे क्ति" इत्यमरटीकायां भरतः। "यशः चियति रोदस्योर्यस्य धर्मरतात्मनः" इति हलायुध ।११२।

४। चिरिर्न हिंसे। (चिरि—स्वा॰ प॰) रेफोपधः। र—वैदिकः। न—चिरिणोति।

५। चि न ञ चित्याम्। (चि—स्वा॰ उ॰) चितिश्चयनं राशीकरणमिति यावत्। न, ञ—चिनोति चिनुते। "फलान्यवाचिनोद्वृक्षान्" इति मुग्धबोधम्।"अभिमानधनस्य गत्वरैरसुभिः स्थास्नु यशश्चिचीषत"इति भारवि'।२।१८।

५। चि ञ चित्याम्। (चि—भ्वा॰उ॰) ञ—चयति, चयते धनं लोक'।

५। चि क्मि च। (चि—चु॰ प॰) क, मि—चययति चाययति। स्वमते तु चपयति चापयतीत्यपि। चकारात् चित्याम्।

## जिरिर्न हिंसे ज्याऽभिभवे जि जये चाथ धिश् धृतौ।

६। जिरिर्न हिंसे। (जिरि—स्वा॰ प॰) रेफोपधः। र—वैदिकः। न—जिरिणोति।

७। ज्याऽभिभवे। (ज्रि—भ्वा॰ प॰) रेफोपध'। ज्रयति शत्रुं बली।

८। जि जये च। (जि—भ्वा॰ प॰) जय उत्कर्ष' स्वीकारश्च। उत्कर्षेऽकर्मकः, यथा—"राधामाधवयोर्जयन्ति यमुनाकूले रहः केलय" इत्यादि। स्वीकारे—"मखैरसंख्यैरजयत् सुरालयम्"इति कादम्बरी। चकारादभिभवे च, जयति शत्रु बली। अनभिधानादस्मात्तुबन्त्वोः प्रयोगाभावः, किन्तु तयोः स्थाने तिबन्तौ इति। किञ्च तुपः स्थाने तातङ् दृश्यते, यथा—"भावगम्यलयः कोऽपि जयताद्वागगोचर"इत्यादि।

९। अथ धि श् धृतौ। (धि—तुदा॰ प॰) श—धियति।

## पि श् गतौ डु मि ञ न् चेपे रिश् गतौ श्रि ञ सेवने।
## शि नञ् निशाने ट्वायोश्वोर्गतिवृद्धोः स्मि ङ स्मिते॥

१०। पि श् गतौ। (पि—तुदा॰ प॰) श—पियति।

११। डु मि ञ् क्षेपे। (मि—स्वा० उ०) डु—मानाज्जातमिति वाक्ये—मित्रिमम्। ञ, न—मिनोति मिनुते।

१२। रि श् गतौ। (रि—तुदा० प०) रेफादिः। श—रियति।

१३। श्रि ञ सेवने। (श्रि—भ्वा० उ०) ञ—श्रयति श्रयते। "शैलं न्वशि-श्रियद्दा" इति भट्टिः।६।१७।

१४। शि नञ निशाने। (शि—स्वा० उ०) निशानमिति श्यतेरूपं, शानञतेजे इत्यस्य नित्यसनन्तत्वात्। अनेकार्थत्वान्निशानमिह तीक्ष्णीकरणम्। न, ञ—शिनोति शिनुते खड्ग कर्मकारः। "निशिनोत्यसिपुत्रिकाम्" इति हलायुधः।७६।

१५। टु ऐ ओ श्वि इर् गतिवृद्ध्योः। (श्वि—भ्वा० प०) तालव्यादिः। टु—श्वयथुः। ऐ—शूयात्। ओ—शूनः। इर्—अश्वयत् अश्वयीत्। "रुदतोऽशिश्वियच्चक्षुरास्यं हेतोस्तवाश्वयीत्" इति भट्टिः।६।१९।

१६। षि ङ स्मिते। (ष्मि—भ्वा० आ०) मूर्द्धन्यादिः। षोपदेशोऽयं, सिषिये इत्यादौ षत्वार्थः षोपदेशपाठः। स्मितमीषद्धास्यम्। ङ—स्मयते वधू। विपूर्वको विस्मयार्थः—"रामं विस्मापयेत कः"इति भट्टिः।५।५८।"विस्मापयन् विस्मयनीयकीर्त्तिम्"इति रघौ विस्मापनं विस्मापः, विस्मयोत्पादनमित्यर्थः। पश्चात् तं करोतीति ञौ शवन्तम्।

## षिन् गञ् बन्धे स्मिकङनादरे हिन् वर्द्धने गतौ।
## एकोनविंशतिरमी इकारान्तास्तु धातवः॥

१७। षि न् गञ् बन्धे। (षि—स्वा० क्र्या० उ०) मूर्द्धन्यादिः। षोपदेशोऽयम्। न, ञ—सिनोति सिनुते। ग, ञ—सिनाति सिनीते।

१८। स्मि कङनादरे। (स्मि—चु०आ०) दन्त्यादिः। क, ङ—स्माययते।

१९। हि न् वर्द्धने गतौ। (हि—स्वा०,प०) गतिरिहान्तर्भूतण्यर्थत्वाद्गतिप्रेरणम्। न—प्रहिणु स्वसूनुमिति भट्टिः।१।२१। वर्द्धने विरलप्रयोगः।

अमी इकारान्ता धातव एकोनविंशतिरेकोनविंशतिसंख्यया संख्येया इत्यर्थः।

---

## ईकारान्तवर्गः।

**ई ल कान्ति-गति-व्याप्ति-क्षेप-प्रजन खादने।**
**ई ङ_य गत्यां क्षी ञ हिंसे डु क्री ञग् द्रव्यपर्य्यये॥**

१। ई ल कान्ति गति व्याप्ति क्षेप प्रजन खादने। (ई—अदा० प०) कान्तिरिच्छा, प्रजनोगर्भग्रहणम्। ल—एति गौर्गर्भं गृह्णातीत्यर्थः। "न हि तरणिरुदीते दिक्पराधीनवृत्तिः" इति गणकृतानित्यत्वादात्मनेपदम्। धातुरयं केश्चिन्न मन्यते।

१। ई ङ_य गत्याम्। (ई—दिवा० आ०) ङ, य—ईयते। "नोदीयन्ते च विद्विष" इति हलायुध.।२३। "रिपुतिमिरमुदस्योदीयमान दिनादौ" इति भारविः।१।४६।

२। क्षी ञ हिंसे। (क्षी—भ्वा० उ०) ञ—क्षयति क्षयते।

३। डु क्री ञग् द्रव्यपर्य्यये। (क्री—क्र्या० उ०) पर्य्यय. परिवर्त्त। डु—क्रीत्रिमम्। ञ, ग—क्रीणाति क्रीणीते धान्यं धनेन लोकः। "दत्त्वा शस्त्रप्रहारश्च तेषां क्रीणाति यः श्रियम्" इति हलायुध ।११७।

**ज्री गि कि ज्यान ओ डी ङ्य गतौ डीङ् च नभोगतौ।**

४। ज्री गि कि ज्याने। (ज्री—क्र्या० चु० भ्वा० प०) गि—ज्रिणाति, ज्रीणः ज्रीणि। कि—ज्राययति ज्रयति। गिकाभ्यामेव पाक्षिकचुरादित्वे सिद्धे किपाठो भ्वादित्वार्थं। ज्यान गतवहुवयोभावः।

५। ओ डी ङ_य गतौ। (डी—दिया० आ०) ओ—डीनः। ङ, य—डीयते।

५। डी ङ_ च नभोगतौ। (डी—भ्वा० आ०) ङ—डयते पक्षी। अस्यापि निष्ठायां डीन इति कातन्त्राः। धातुपारायणिकास्तु इम्निषेधे (इम्निषेधसूत्रे) ओदनुबन्धडीङोग्रहणादिमि वक्तव्यादगुणे डयित इत्याहु। गोयीचन्द्रोऽपि डयितः डयितवानित्युदाजहार। स्वमते तु डीत इत्येव। चकारात् ओडीङ्य च नभोगत्यर्थक इत्यर्थः।

**णी ञ प्रापणे ओ दी ङ्य क्षये दीधीङ्_ क्लु देवने।**
**दीप्त्यावोधीङ्_य आराधेऽनादरे प्री ञ तर्पणे॥**

६। णी ञ प्रापणे। (णी—भ्वा० उ०) णोपदेशपाठो णादित्वेन प्राग्वत्र इति णत्वार्थः। प्रणयति। एवं सर्वत्र। प्रापणमिह अजन्तस्य रूपम्। तथाच— "नृणाति लम्भयति च वहत्यपि नयत्यमू" इति क्रियानिर्घण्टः। ञ—नयति नयते गां वनं गोपः प्रापयतीत्यर्थः।

७। ओ दीङ्‌ य क्षये। (दी—दिवा० आ०) ओ—दीनः। ङ, य—दीयते। "दीयन्ते प्रत्यहं यस्य दुरितानि तपस्विन." इति हलायुधः।८४।

८। दीधीङ्‌ चुलु देवने दीप्तौ। (दीधी—अदा० आ०) दीर्घमध्यः। र—वैदिक। च—अदीधयुः। "बहुलं ब्रह्मणि" इति परस्मैपदे "अनुसुसिद्धे" इति अन उस्. 'गुरुस्यध्याम्'' इति गुण।

९। ओ धीङ्‌य आराधऽनादरे। (धी—दिवा० आ०) अनादर इति कातन्त्रादौ। ओ—धीन। ङ, य—धीयते खलं लोक।

१०। प्री ञ तर्पणे। (प्री—भ्वा०उ०) ञ—प्रयति प्रयते। तर्पणं सन्तुष्टीकरणं, तथाच—"प्रयते च भृत्यान्"इति हलायुधः।७।

**प्रीक्‌च प्री गञ कान्तौ च प्रीङ्‌ य प्रीतौ च पीङ्‌ य तु।**
**पाने ञि भी लि भीत्यां भ्री ग गिभृत्याञ्च मीङ्‌ यओ।**
**मी ञ्‌ग बधे मी कि गत्यां मत्यां री गि रवे गतौ॥**

१०। प्रीक्‌ च। (प्री—चु० प०) चकारात् तर्पणे। क—"यं प्राययन्ति कविसूक्तिरसायनानि'' इति हलायुध।७। प्रीणयत्यपीति केचित्।

१०। प्री गञ कान्तौ च। (प्री—क्र्या० उ०) ग, ञ—प्रीणाति प्रीणीते। चकारात् तर्पणे। तर्पणमिह प्रीतिभाव. प्रीतीकरणञ्च। "प्रभु प्रीणातु विश्वभुक्" इत्यादि। "प्रीणाति बान्धवजनान्" इति हलायुधः।७।

१०। प्री ङ य प्रीतौ च। (प्री—दिवा० आ०) प्रीतिरिह प्रीतिभावः। तथाच—"यः प्रीयते प्रणयिषु" इति हलायुध।७। "प्रकाममप्रीयत यज्वनां प्रिय'' इति माघः।१।१७। चकारात् कान्तौ च।

११। पी ङ्‌यतु पाने। (पी—दिवा० आ०) ङ, य—पीयते।

१२। ञि भी लि भीत्याम्। (भी—ह्वा० प०) ञि—भीतोऽस्ति। लि—बिभेति।

१३। भ्रीगगि भृत्याञ्च। (भ्री—क्र्या० प०) भृति पोषणम्। ग—

भ्रीणाति, भ्रीतः, भ्रीतिः। गि—भ्रिणाति, भ्रीणः, भ्रीणिः। गित्वेनैव क्र्यादित्वसिद्धौ गकरणं प्वादित्वविकल्पार्थम्। चकारात् भीत्याद्य।

१४। मीङ् य ओ बधे } (मी—दिवा० आ०) (मी—क्र्या० उ०) ङ,
१४। मी अग् बधे } य—मीयते। ओ—मीनः। "मीयते हिंस्यते इति मीनः" इति मीनशब्दव्युत्पत्तौ भरतः। अ ग—मीनाति मीनीते। "धातुभेदे ङ्ञोरसङ्करः" इति वोपदेवः। एवं सर्वत्र।

१४। मी कि गत्यां मत्याम्। (मी—चु० भ्वा० प०) मतिर्बोधः। कि—माययति मयति। "न चानुमाययत्यन्यस्तस्य यच्चेतसि स्थितम्" इति हलायुध ।१४३।

१५। री गि रवे गतौ। (री—क्र्या० प०) गि—रिणाति, रीणः, रीणिः। रवः शब्दः। तथाच कातन्त्रादौ "री गतिरेषणयोः"। "रेषणं वृकध्वनि." इति रमानाथः। "रिणाति रेषते वृक." इति शब्दार्थे भट्टमल्ल।

**ओ रीङ्य चरणे, ली कि द्रावणे, लीङ् य ओ श्लिषि।**
**ली ल्पी गि च ल्वी गिग गत्यां वेव्री चर्लुङ् वील ईलवत्॥**

१५। ओ रीङ् य चरणे। (री—दिवा० आ०) ओ—रीणः। ङ, य—रीयते पयः।

१६। ली कि द्रावणे। (ली—चु० भ्वा० प०) द्रावणं द्रवीकरणम्। कि—लाययति लयति। "विलयत्यचलानाञ्च हृदय मदनव्यथा" इति हलायुधः ।१८६। मिथ्योर्यंवृणौ डेति लापयति लौहमग्नौ कर्मकार.। घृते द्रवे तु लाक्योर्लम्भनाविति जनो घृतमग्नौ लीनयतीत्यपि।

१६। लीङ् य ओ श्लिषि। (ली—दिवा० आ०) श्लिषीति श्लिषधातोर्भावे क्विपि ङौ रूपम्, श्लेषोऽत्र परस्परसयोगः। ङ, य—लीयते चन्द्रः सूर्य्ये। ओ—लीन.। "नेन्द्रियार्थेषु लीयते" इति हलायुध. ।२६०। "उत्थाय हृदि लीयन्ते दरिद्राणा मनोरथाः" इत्युद्भट। "दिवाकराद्रक्षति यो गुहासु लीन दिवाभीतमिवान्धकारम्" इति कालिदास.।

१६। ली गि च। } (ली—क्र्या० प०) (ल्पी—क्र्या० प०) द्वावन्तःस्थ-
१७। ल्पी गि च। } तृतीयादौ। द्वितीयस्तु ओष्ठ्यवर्गाद्योपध.। चकारात् श्लिषि। श्लेषोऽत्र सयोग, धातूनामनेकार्थत्वादयं प्रार्थ्यर्थेश्च। गि—लिनाति

बाला लावण्यं प्राप्नोतीत्यर्थः। कर्माविवक्षायान्तु लिनाति जलधौ नदी। "लिनाति धर्म एवासौ" इति हलायुधः।२६०। लीनः, लीनिः। गि—ल्पिनाति ल्पीनः ल्पीनिः। "अयं धातुः अन्तःस्थाद्योपधः" इति रमानाथः। ल्विनाति।

१८। ल्वी ग्गि गत्याम्। (ल्वी—क्र्या० प०) वकारोपधः। ग—ल्वीनाति, ल्वीतः, ल्वीतिः। गि—ल्विनाति, ल्वीनः, ल्वीनिः। गिनैव क्र्यादित्वसिद्धौ गकरणं ल्वादित्वविकल्पार्थम्।

१९। वेवी ऱ् च् लु ङ् ईलवत्। (वेवी—अदा० आ०) ईलवदित्यनेन ईधातुवदयमपि कान्ति-गति-व्याप्ति-क्षेप-प्रजन-खादनार्थक इति सूचितम्। ऱ—वैदिकः। च्—अवेवयुः। "बहुलं ब्रह्मणि" इति परस्मैपदे "अनुस्सिद्धेः" इति अन उस्, "गुणस्यद्यम्" इति गुणः। लु, ङ—वेवीते।

२०। वील् ईलवत्। (वी—अदा०प०) ल—वेति। ईलवत् कान्ति-गति-व्याप्ति-क्षेप-प्रजन-खादने। "वियन्ति वीरसन्तानं द्वष्टौ यस्य कुलाङ्गनाः" इति हलायुधः।१८८।

व्री ग्गि वृत्यां व्रीङ् य ओच व्लीगिगत्याञ्च शीङ् ञि।
स्वप्ने, श्री ञग् पचि क्ली लि लज्जेऽमि पञ्चविंशतिः॥

२१। व्री ग्गि वृत्याम्। (व्री—क्र्या० प०) रेफोपधः। वृतिर्वरणम्। ग—"यो व्रीणाति जयश्रियं रणमुखे" इति हलायुधः।११। व्रीतः व्रीतिः। गि—व्रिणाति व्रीणाति। व्रीणः व्रीणि.। गिणैव क्र्यादित्वे सिद्धे गकरणं ल्वादित्व-विकल्पार्थम्।

२१। व्री ङ् य ओ च। (व्री—दिवा० आ०) रेफोपधः। ङ, य—व्रीयते। ओ—व्रीण.। चकारात् वृत्याम्। "यो यशो व्रीयते" इति हलायुधः।११।

२२। व्लीगि गत्याञ्च। (व्ली—क्र्या० प०) अन्तःस्थतृतीयोपधः। गि—व्लिनाति। व्लीनः व्लीनि। चकारात् वृत्याञ्च।

२३। शीङल ञि स्वप्ने। (शी—अदा० आ०) ल, ङ—शेते। "शेरते तेऽभि मारुतम्" इति माघ।२।४२। ञि—शयितोऽस्ति। शार्ङ्गेच्छार्थऔच्छी-लादेः सतीति वर्त्तमाने क्तः। मण्डपे शयामोति गणकृतानित्यतया "शपो लुगभावे च" इति रमानाथः। वस्तुतस्तु शेते शयः पचादित्वादन्, पश्चात् शय इवाचरा-मीति क्वौ साध्यम्।

२४। श्री ञग् पचि। (श्री—क्र्या० उ०) तालव्यादिः। ञ, ग—

श्रीणाति श्रीणीते। पचि पाके।"श्रीणात्यन्य: सुकविसदृशान् क्षीरखण्डप्रकारान्" इति हलायुधः।१८। तत्र श्रीणाति पचतीत्यर्थः।

२५। ह्री लि लज्जे। (ह्री—ह्वा० प०) लि—जिह्रेति नीचसङ्गेभ्य इति हलायुधः। "न जिह्रयाञ्चकाराथ सीतामभ्यर्थ्य तर्जितः" इति भट्टि ।६।३।

## अमी पञ्चविंशतिः।

अमी (ईकारान्ताः) पञ्चविंशतिः। संख्यासङ्गतिस्तु पूर्वोक्तरीत्यैव।

---

## उकारान्तवर्गः।

### उ ङ शब्दे ऊर्णु लञाच्छादने टु क्षुल क्षुते।
### कुङ् शब्दे कुल्च् कु शि ङार्त्तस्वरे ष्णु ल तेजने॥

१। उ ङ शब्दे। (उ—भ्वा० आ०) ङ—अवते गौः।

२। ऊर्णु ल ञ आच्छादने। (ऊर्णु—अदा० उ०) दीर्घादिर्दन्त्योपधः, रेफयोगान्मूर्द्धन्यः। तेन ऊर्णुनाव इत्यादौ निमित्ताभावात् मूलधातोर्णत्वाभावः। ल, ञ—ऊर्णोति ऊर्णौति ऊर्णुते दिशं मेघः। "प्रोर्णुवन्तं दिशो बाणैः" इति भट्टिः।५।५६।

३। टु क्षुल क्षुते। (क्षु—अदा० प०) क्षुतं हाँचीति ख्यातम्। टु—क्षवथुः। ल—क्षौति कफी। "क्षतकं कामिनि चुक्षुवे मृगाक्ष्या" इति माघः। जीवेति क्षुवतो ब्रूयादिति स्मृतिः।

४। कुङ् शब्दे। (कु—भ्वा० आ०) ङ—कवते पक्षी। "यत्राक्षन्ते जनपदः कवते च सूक्तम्" इति हलायुध.।२०। धातूनामनेकार्थत्वादुच्चारणार्थे सकर्मकोऽयं, कवते उच्चारयति, सूक्तं वेदोक्तस्तोत्रमन्त्रादि।

४। कुल्च्। (कु—अदा० प०) ल—कौति। चकारात् शब्दे।

४। कु शिङार्त्तस्वरे। (कु—तुदा० आ०) शि, ङ—कुवते (तनि) अकुत। कुटादित्वाद्गुणाभावे सिलोप। "शोकात्र कौति कुवते च भयाच कश्चित्" इत्युभयत्र हलायुधः।२०। "क्रूरायाकुवत द्विजाः" इति भट्टिः।५।२६।

५। ष्णु ल तेजने। (ष्णु—अदा० प०) मूर्द्धन्यषोपधः षादिः। तेजनं तीक्ष्णीकरणम्। ल—स्नौति खड्गं कर्मकारः।

खुङ् ध्वनौ गुशि घो विष्ठोत्सर्गे गु घु ङु ङ ध्वनौ।
च्युक् हासे सहने च्यु छ्यु ज्यु जु ङ् गत्यां जु रंहसि॥

६। खुङ् ध्वनौ। (खु—भ्वा० आ०) ङ—खवते।

७। गु शि घो विष्ठोत्सर्गे। (गु—तुदा० प०) शि—गुवति, अगुवीत्। घो—गून:। दुर्गादासः।

७। गु ङ ध्वनौ। (गु—भ्वा० आ०) ङ—गवते।

८। घु ङ ध्वनौ। (घु—भ्वा० आ०) ङ—घवते।

९। ङु ङ ध्वनौ। (ङु—भ्वा आ०) ङ—ङवते।

१०। च्युक् हासे सहने। (च्यु—चु० प०) एतदाद्याश्चत्वारोऽन्तःस्थाद्योपधाः। क—च्यावयति।

१०। च्युङ गत्याम्। (च्यु—भ्वा०आ०) ङ—च्यवते। "अच्योष्ट सत्वान्नृपतिश्चुताशः" इति भट्टिः।१।२०।

११। छ्युङ गत्याम्। (छ्यु—भ्वा० आ०) ङ—छ्यवते।

१२। ज्युङ गत्याम्। (ज्यु—भ्वा० आ०) ङ—ज्यवते।

१३। जुङ गत्याम्। (जु—भ्वा० आ०) ङ—जवते।

१३। जु रंहसि। (जु—भ्वा० प०) रंहो वेगगतिः। जवति घोटकः। "स्फुटसरोजवना जवना नदी" इति भारवियमकम्।

णु ल् स्तुतौ तु ल् वृत्तिहिंसापूर्त्तिषु द्रु स्रुतौ गतौ।
द्रुर्न्‌दु ट्वोनुपतापे दु गतौ द्यु लऽभिसर्पणे॥

१४। णु ल् स्तुतौ। (णु—अदा०प०) ल—नौति। "तव नौमि सरस्वति पादयुगम्" इति। "शिवविरिञ्चिनुतं शरण्यम्" इत्यादि।

१५। तुल् वृत्तिहिंसापूर्त्तिषु। (तु—अदा० प०) वृत्तिर्जीविका, पूर्त्तिः पूरणम्। ल—तौति तवीति।

१६। द्रु स्रुतौ गतौ। (द्रु—भ्वा० प०) द्रवति। "नेमसुम्" इति दुद्रुव। स्रुतिः क्षरणम्। "मदीं तु प्रत्यदुद्रुवत्" इति भट्टिः।६।१७ विपूर्वकः पलायनार्थस्तथा च—"नलिनीं क्षतसेतुबन्धनो जलसङ्घात इवासि विद्रुतः" इति कुमारसम्भवम्।४।६।

१६। द्रुन्‌ उपतापे। (द्रु—स्वा० प०) र—वैदिकः। न—द्रुणोति। "द्रुणोति द्रोणवद् युद्धे शरजालेन यो रिपून्" इति हलायुधः।२४०।

१७। टुदुँ॒ उपतापे। (दु—स्वा॰ प॰) टु, ओ, न् एते अनुबन्धाः। टु—दवथुः, ओ—दूनः, न—दुनोति। उपताप इह उपतप्तीभाव उपतप्तीकरणञ्च। आद्येऽकर्मकः।"मन्मथेन दुनोमि" इति जयदेवः। द्वितीये सकर्मकः।"वर्णप्रकर्षे सति कर्णिकारं दुनोति निर्गन्धतया स्म चेतः" इति कालिदासः।"न दुनोति परं वाचा" इति हलायुधः।२५६।

१७। दु गतौ। (दु—भ्वा॰ प॰) दवति।

१८। द्यु लऽभिसर्पणे। (द्यु—अदा॰ प॰) अभिसर्पणमाभिमुख्येन गमनम्। ल—"द्यौति सिंहो मृगानिव"।

## धुञ्न कम्पे त्रि ध्रु श्रि ध्रु स्थैर्य्ये प्रु प्लु ङ् च सर्पणे।
## युल् मिश्रणेऽमिश्रणे युञ् ग बन्धे युङ्क निन्दने॥

१९। धुञ्न कम्पे। (धु—स्वा॰ उ॰) ञ, न—धुनोति धुनुते। कम्प-इह भान्तस्य रूपम्। "धुनोत्यशोकं वायुः" इति हलायुधः।८।

२०। त्रि ध्रु श्रि स्थैर्य्ये } (ध्रु—तुदा॰ प॰) (ध्रु—भ्वा॰ प॰) स्थैर्य्यं

२०। ध्रु स्थैर्य्ये } स्थिरीभावः। द्वौ रेफोपधौ। आद्यो गत्यर्थोऽपि इति कश्चित्। त्रि—ध्रुतोऽस्ति। श्रि—ध्रुवति, अध्रुवीत्। भ्वादित्वात् ध्रवति शैलः।"ध्रुव औत्तानपादिः स्यात्"इत्यमरोक्तध्रुवशब्दव्युत्पत्तौ "ध्रु स्थैर्य्ये कः" इति तट्टीकाकारः। "तं दुध्रावाद्रिणा कपिः" इति भट्टिः।१४।८१। दुध्राव मारितवान् अनेकार्थत्वाद्धिंसायामपीति भरतः।

२१। प्रुङ् सर्पणे } (प्रु—भ्वा॰ आ॰) (प्लु—भ्वा॰ आ॰) सर्पणं

२२। प्लु ङ च सर्पणे } गमनम्। द्वौ क्रमात् रेफान्तःस्थतृतीयोपधौ। ङ—प्रवते। प्लवते। चकारात् त्रि ध्रु श्रि, ध्रु च (चकारेण ध्रुधातुद्वयमपि गमनार्थकमिति सूचितम्। अतएव ध्रु गतिस्थैर्य्ययोरित्यन्ये) "क्षपोद्धं भर्तुरानर्द्दं मा न प्रोद्धं द्रुतं वियत्" इति भट्टिः।८।७७।

२३। युल् मिश्रणेऽमिश्रणे। (यु—अदा॰ प॰) ल—यौति। मिश्रणे यथा—"यौति काले कुलस्त्रीभिः स्वेव्रसन्तानवृद्धये"इति हलायुधः।१८५। अमिश्रणे समवायलक्षणे यथा—अयुतसिद्धानाम् अपृथक्सिद्धानामित्यर्थः। "यवयारातीः" इति श्रुतावपि अरातीः सहजशत्रून् यवय पृथक् कुरु इत्यर्थः।१।

२४। युञ्ग बन्धे। (यु—क्र्या॰ उ॰) ञ, ग—युनाति युनीते। "युनाति

यो वयःस्थोऽपि न वेश्याबन्धकीजनैः" इति हलायुधः ।१८५। अस्मात् ञ्याम् अयौषीत् ।

२३। युङ्क निन्दने। (यु—चु० आ०) ङ, क—यावयते। "यावयते बाला वृद्धम्" इति कातन्त्रधातुवृत्तौ।

**रुल्ध्वनौ रुङ्वधे गत्यां स्रुगतौ श्रुन्गतौ श्रुतौ ।**

**षुञ्न सन्धाक्लेदपीड़मन्थे षुञ गतौ षु च ॥**

२४। रुल्ध्वनौ। (रु—अदा० प०) ल—रवीति रौति।

२४। रुङ्वधे गत्याम्। ( रु—भ्वा० आ० ) ङ—रवते। गमनार्थे रविः सूर्य्यः।

२५। स्रु गतौ। ( स्रु—भ्वा० प० ) स्रवति। रेफरहितोऽप्ययमिति केचित् तेन सवति।

२५। श्रुन्गतौ श्रुतौ। (श्रु—स्वा० प०) श्रुतिराकर्णनम्। न—शृणोति गीतं लोकः। "रक्षांसीति पुराऽपि संशृणुमहे" इति मुरारौ व्यतीहारादात्मनेपदम्। "संशृणुष्व मयाख्यातम्" इति गणकृतानित्यत्वात्, आख्यातशब्दस्य क्रियाविशेषणत्वेनाकर्मकतया 'समोगमृच्छ' इत्यादिना वा मम्। मुग्धबोधे भ्वादावस्य पाठात् क्वचिद्भ्वादिकत्वमपीति सूचितम्। तेन "श्रवति राक्षसनिस्वनमाहतः" इत्यादि सिद्धम्।

२६। षुञ्नसन्धाक्लेदपीडमन्थे। ( षु—स्वा० उ० ) मूर्द्धन्यादिः। न, ञ—सुनोति सुनुते। सन्धा सन्धानम्। क्लेद इह स्नानं मङ्गलस्नान वा। तथा च "षु ञ अभिषवे"इति प्राञ्चः। अभिषव पीडनं मन्थनं वेति त्रिलोचनादयः। स्नानञ्चेति दुर्गः। सन्धान मङ्गलस्नान वेति धातुप्रदीपः। "सोमं सुनोति यज्ञेषु परलोकजिगीषया"इति हलायुधः। तत्र सोमं सोमलतां सुनोति निष्पीडयति, यज्ञे सोमलतां निष्पीड्य तद्रसं पिबतीत्यर्थः। मङ्गलस्नानं यथा—राज्ञा सूयते मङ्गलपूर्वकं स्नायते यस्मिन् क्रतौ स राजसूय क्रतुरिति।

२६। षुञगतौ। (षु—भ्वा० उ०) ञ—सुषाव सुषुवे।

२६। षु च। (षु—भ्वा० प०) सवति। चकारात् गतौ।

**षुल्चैश्वर्य्यप्रसवयोः ष्णुल्प्रस्नुत्यां ष्टुञल्स्तुतौ ।**

**सुप्वर्थे सुञ्गतौ स्कुग् न ञुद्धृतौ स्तुद्रुवत् हुलि ।**

**होमेऽदने क्रुङ्ल्लु चौर्य्ये त्रयस्त्रिंशदुदन्तकाः ॥**

२६। षुल् च ऐश्वर्य्यप्रसवयोः। (षु—अदा०प०)ल—सौति।"प्रसौति विजयं धर्म."इति हलायुध'।२६।चकारात् षु च। भौवादिकस्य षुधातोरपि ऐश्वर्य्यप्रसवावर्थावित्यर्थः। अतएव कातन्त्रधातुवृत्तौ षु प्रसवे इत्यत्र प्रसवति पुत्रं मातेत्युक्तम्। ऐश्वर्य्यमीश्वरीभावः। अस्यायमर्थो न सर्वैर्मन्यते। "प्रसवो गर्भमोचनम्"।

२७। ष्णुल् प्रस्नुत्याम्। (ष्णु—अदा० प०) प्रस्नुतिः चरणम्। ल—स्नौति दुग्धं स्तनात्।

२८। ष्टुञल् स्तुतौ। (ष्टु—अदा० उ०) मूर्द्धन्यादिः। षोपदेशोऽयम् ञ, ल—स्तवीति स्तौति स्तुते।

२६। षुप्वर्थे। (सु—भ्वा० प०) दन्त्यादिः। सवति। प्वर्थे—गत्यैश्वर्य्यप्रसवेषु। अयं धातुः पूर्वोक्तषुधातोरर्थे प्रयुज्यते इत्यर्थः। "स च प्रसवति श्रियम्" इति हलायुधः।२६।

२६। सुञगतौ। (सु—भ्वा० उ०) ञ—सुसाव सुसुवे।

३०। स्कुग्नञुद्धृतौ। (स्कु—क्र्या० स्वा० उ०) ग, ञ—स्कुनाति स्कुनीते। न, ञ—स्कुनोति स्कुनुते चुस्काव। अत्राकृतसकारत्वान्न षत्वमिति दर्शितम्। उद्धृतिरुद्धरणम्। आप्लवने इति प्राञ्चः। तथा च"स्कुनाति च स्कुनोति च स्कुनोत्याप्लवतेऽपि च। स्कन्दते स्कुन्दते चाऽपि षडाप्लवनवाचिन." इति भट्टमल्लः। आवरणे इति पाणिनीया। "स्कुनाति शत्रु बाणेन" भट्टं "आच्छादयतीत्यर्थः" इति रमानाथ.। "राममभ्यद्रवज्जिष्णुरस्कुनाच्चेषुवृष्टिभि." इति भट्टि.।१७।८२।

३१। स्रु द्रुवत्। (स्रु—भ्वा० प०) स्रवति। द्रुवत् स्रुतौ गतौ पूर्वोक्तद्रुधातुरिव स्रुतिगतिरूपार्थवाचक।

३२। हुलि होमेऽदने। (हु—ह्वा० प०) होमो देवतासम्प्रदानकवह्न्यधिकरणकवस्तुत्याग.। लि—जुहोति घृतमग्नौ कृष्णाय होता। प्रक्षेपेऽप्ययं "चिराय सन्तर्प्य समिद्भिरग्निं यो मन्त्रपूता तनुमप्यहौषीत्"इति रघु.। "जटाधरः सन् जुहुधीह पावकम्" इति किराते प्रीणनार्थोऽपि।

३३। ह्नुङ् लु चौर्य्ये।(ह्नु—अदा०आ०) ङ,लु—ह्नुते। स्वपादित्वाददादित्वं सिद्धं, तस्य तदन्तर्गतत्वात्। चौर्य्यमत्रापनयनम्। अतएव ह्नुङ अपनयने इति धातुप्रदीपे कातन्त्रे च पाठः। "निजुह्नुषु' चपाटताम्"इति भट्टि' ।५।६४।

## त्रयस्त्रिंशदुदन्तकाः।

उकारान्ता धातवस्त्रयस्त्रिंशत्सख्यका'। संख्यासङ्गतिस्तु पूर्ववदिति।

## ऊकारान्तवर्गः ।

कूशिङार्त्तस्वरे क्नूञ्ग शब्दे गू श्रो शि विट्सृजौ ।
णूशिस्तवने श्रो टूङ् य खेदे द्रून्गञ् बधे गतौ ॥

१। कूशिङार्त्तस्वरे। (कू—तु० श्रा०) शि, ङ—कुवते, अकुविष्ट। आकूतमभिप्रायः। अयं धातुः कैयटादीनां सम्मत इति धातुप्रदीपः।

२। क्नूञ्ग शब्दे। (क्नू—क्र्या० उ०) दन्त्यनोपधः। ञ, ग—क्नूनाति क्नूनीते। ह्रस्वान्तोऽयमिति जैमिनिः। नकाररहितो ह्रस्वान्त इति रमानाथः। दीर्घान्त इति जौमराः। दन्त्यनोपधो दीर्घान्तो धातुप्रदीपे पठितः।

३। गू श्रो शि विट्सृजौ। (गू—तुदा० प०) श्रो—गूनः। शि—गुवति अगुवीत्। विट्सृजिर्हदनं, मलत्याग इत्यर्थः।

४। णूशि स्तवने। (नू—तुदा० प०) ह्रस्वान्तोऽयमिति वररुचिः। शि—नुवति, अनुवीत्।

५। श्रो टूङ्य खेदे। (टू—दि० श्रा०) खेद इह उपतप्तीकरणम् उपतप्तीभावश्च। श्रो—टूनः। ङ, य—टूयते दैन्यं जनमिति चतुर्भुजः। "दुर्जनोक्त्या न टूयते" इति हलायुधः।२५६।"तया हीनं विधातर्मां कथ पश्यन्न दूयसे" इति रघुः।१।७०।

६। द्रून्गञ बधे गतौ। (द्रू—स्वा० क्र्या० उ०) न, ञ—द्रूणोति द्रूणुते। ग, ञ—द्रूणाति द्रूणीते।

## धूशिक् कम्पे धून्गि धूञच् पूङ् शोधे पूङ्य पूञ्गि च ।

७। धूशिक् कम्पे। (धू—तुदा० चु० प०) कम्प इह ञ्यन्तस्य रूपम्। शि—धुवति मारुतो मालतीलताम्। अधुवीत्। क—धावयति। "वायुर्विधूनयति केशरपुष्परेणून्" इति चुरादौ हलायुधः।८।"प्रीधूञोर्नन् वा" इत्यत्र धूञग्रहणादस्य कथं नन्निति चेन्न, स्वार्थविहितस्य ञेर्ञकारेण सम्बन्धस्य वाच्यत्वात्। अन्यथा कम्पप्रेरणे धूनयतीत्यादिप्रयोगा न स्युः। धूनोतीत्यादीनां साध्या इति चेत् स्वभावात् कम्पप्रेरणार्थाना तेषां (प्रेरणार्थे) ञौ कृते कम्पप्रेरणस्य प्रेरणमेवार्थः स्यात्। किञ्च कम्पनायां धूनयतीत्यादीनामावश्यकत्वात् तत्सूत्रे ञकारः प्राचीनमतानुवादार्थ एव। "आधूतवनराजिभिः" इति रघुः।१।३८।

७। धूनगि ञ च } (धू—स्वा० क्र्या० उ०) (धू—भ्वा० उ०) चकारात्
७। धूञ्च } कम्पे। स च इच्छाऽपि कम्प प्रेरणम्। न, ञ—
"धूनोति चम्पकवनानि" इति हलायुधः।८। धूनुते। गि, ञ—धुनाति वायुरश्वत्थम्। "धुनीते बन्धूकं तिलकुसुमजम्भाऽपि पवनः" इति। धूनः धूनिः।
ञ—"धवति चन्दनमञ्जरीश्च" इति हलायुधः।८। धवते।

८। पूङ् शोधे। (पू—भ्वा० आ०) शोध इह शुद्धीकरणम्। ङ—पवते पापिनं गङ्गा।

८। पू ङ् य च } (पू—दि० आ०) (पू—क्र्या० उ०) आद्यः केश्चिन्न
८। पू ञ् गि च } मन्यते। चकारात् शोधे। ङ, य—पूयते। ञ, गि—"जाह्नवी न. पुनातु"। पुनीते। पूवर्जनादस्य स्वादित्वाभावात् पूतः पूतिः। क्वचित् श्नाप्रत्ययस्यापि प्वादित्वात् ह्रस्व इति वररुचिः। तेन—"स्मरणात् पुनते पापं धारणात् पूर्वसञ्चितम्। दर्शनाल्लभते मोक्षमेतद्योगस्य लक्षणम्"॥ इति।

**ब्रूलञुक्तौ भूकङ् भूञप्राप्तौ भूक्शुद्धिचिन्तयोः।**
**मिश्रणे भू तु सत्तायां मूङ्बन्धे लूगिञ्छिदि॥**

९। ब्रूलञ् उक्तौ। (ब्रू—अदा० उ०) ल, ञ—ब्रवीति ब्रूते। "विब्रूतिः कटके क्षता" इत्यत्र अरविहितकार्यस्यानित्यत्वान्न वचादेशः।

१०। भू कङ् प्राप्तौ } (भू—चु० आ०) (भू—भ्वा० उ०) क, ङ—
१०। भूञप्राप्तौ } भावयते। ञ—भवति"भवते धनं धीरः। भवत्येव हि सत्तायां प्राप्तिसम्पन्नजन्मस्विति भट्टमल्लः। "भवते दुरितक्षयं यथोक्तक्रतुभिर्भावयते च नाकलोकम्"इति हलायुधः।५०। केचिदमुं भ्वाद्यात्मनेपदिनं मत्वा प्राप्तौ परस्मैपद सत्तार्थस्यैवानेकार्थत्वात् समादधते।

१०। भूक्शुद्धिचिन्तयोर्मिश्रणे। (भू—चु० प०) क—"त्वणवद्भावयति द्विषश्च सर्वान्"इति हलायुधः।५०। त्वयोऽर्थाः।

१०। भू तु सत्तायाम्। (भू—भ्वा० प०) सत्ता इह द्विविधा, उत्पत्तिर्विद्यमानता च। भवति मनुष्योऽथवा विष्णुः।

११। मू ङ बन्धे। (मू—भ्वा० आ०) पवर्गपञ्चमादिः। ङ—मवते। "बद्धे सन्दानितं मूतम्" इत्यमरः।

१२। लूगिञ् छिदि। (लू—क्र्या० उ०) गि, ञ—लुनाति लुनीते। लूनः लूनिः। "लुनीहि नन्दनम्" इति माघः।१।५१।

## षूङ्ल षूयोङ सूतौ षूश् चेपे ऊतस्त्रयोदश ।

१३ । षूङ्ल सूतौ } (षू—अदा॰ आ॰) (षू—दि॰ आ॰) द्वौ मूर्द्ध-
१३ । षूयो ङ सूतौ } न्यादी । ङ, ल—सूते । य, ङ—सूयते । ओ—सून' । सूतिर्गर्भमोचनम् । सूते पुत्त्रं नारी । अन्यत्रापि—धर्म्ममर्थः प्रसूयते । "यस्य पृथ्वी प्रसूतेऽर्थ धर्म्ममर्थः प्रसूयते" इति हलायुधः ।२६।

१३ । षूश् चेपे । (षू—तु॰ प॰) मूर्द्धन्यादिः । श—सुवति ।

ऊतस्त्रयोदश ।

ऊकारान्ता धातवस्त्रयोदशसंख्यकाः । संख्यासङ्गतिस्तु पूर्ववदिति ।

---

## ऋकारान्तवर्गः ।

### ऋन हिंसे ऋलिं गत्यामृप्रापे च कृञन् वधे ।
### कृञ्कृतौ कृञ्दडु च गॄ घृ सेके घृलिं भासि च ॥

१ । ऋनं हिंसे । (ऋ—स्वा॰प॰) र—वैदिक । न—ऋणोति । रेफादि-स्तृतीयस्वरान्तोऽयमिति केचित् । केचिदिमं रिधातुं पठन्तीत्यर्थः "ऋणोति धरणीं कृत्स्नाम्" इति हलायुधः ।४५। यस्य कीर्त्तिरिति पूर्व्वेण सम्बन्धः, ऋणोति व्याप्नोतीत्यर्थ' ।

१ । ऋलिं गत्याम् । (ऋ—ह्वा॰ प॰) र—वैदिकः । लि—इयर्त्ति । अपो लुक्करणादस्य शतृशानयोरेव ऋच्छादेशः । इयृच्छत्, इयृच्छानः । "यस्य कीर्त्तिरियर्त्ति द्याम्" इति हलायुध' ।४५।

१ । ऋ प्रापे च । (ऋ—भ्वा॰ प॰) प्राप प्राप्तिः । ऋच्छति धनं कृती । चकारात् गत्याञ्च । "दिङ्मुखानि च ऋच्छति" इति हलायुधः ।४५।

२ । कृ ञ न वधे । (कृ—स्वा॰उ॰) ञ, न—कृणोति कृणुते । "कृणोति किरणं शत्रोः" इति हलायुध' ।४४।

२ । कृञ् कृतौ । (कृ—भ्वा॰उ॰) ञ—करति करते । अयं कैश्चिन्न मन्यते ।

२ । कृ ञ द डु च । (कृ—तना॰ उ॰) ञ, द—करोति कुरुते । डु—कृत्रिमम् । चकारात् कृतौ । "अस्मादगुणिमकारोऽप्यगुणी वा वक्तव्यः" इति वररुचिः । तेन "किं करोमि कथं कुर्मि क्वानुगच्छामि माधव ! दुर्य्योधन-विहीनन्तु शून्यं सर्व्वमिदं जगत्" इति ।

३। क्षृ सेके। (क्षृ—भ्वा० प०) क्षरति तरुं मेघः।

४। घृ सेके। (घृ—भ्वा० प०) घरति तरुं मेघः।

४। घृर्लि भासि च। (घृ—ह्वा० प०) चकारात् सेके च। र—वैदिकं। लि—जघर्त्ति घृतं दीप्यते क्षरति वेत्यर्थः।

## घृक् सेके च्छादने जॄ न्यक्कारे जागृ च्लु जागरे।

४। घृक् सेके च्छादने। (घृ—चु० प०) क—घारयति।

५। जॄ न्यक्कारे। (जॄ—भ्वा०प०) न्यक्कारस्तिरस्करणम् जरति शत्रुं शूरः।

६। जागृ च्लु जागरे। (जागृ—अदा० प०) च—जाग्रति। लु—जागर्त्ति। "दिशो निरीक्षमाणस्य नास्ति जागरतो भयम्"इति पचादित्वादनि जागर इवाचरतीति क्वौ शत्रन्तम्।

## दृङ् आदरे हृ स्थगने ध्वृ कौटिल्ये धृ शङ् स्थितौ।

७। दृङ् आदरे। (दृ—तुदा० आ०) आदरः प्रीत्या सम्भ्रमः। ङ, श—द्रियते गुरुं लोकः। मानुबन्धोऽयमित्येके।

८। ह्वृ स्थगने। (ह्वृ—भ्वा० प०) वकारोपधः। ह्वरति। स्थगनं संवरणम्। वरणे इति प्राञ्चः। वरणं स्वीकारः स्थगनञ्चेति गोविन्दभट्टः। ह्वरन्ति आह्वयति रक्षिणोऽस्यामिति घञि ह्वारम्। "घञन्तोऽपि क्वचिन्नपुंसकमिति धातुप्रदीपे" इत्यमरटीकायां भरत.।

९। ध्वृ कौटिल्ये। (ध्वृ—भ्वा० प०) वकारोपधः। कौटिल्यमिह कुटिलीकरणम्। ध्वरति तृणं वायुः।

१०। धृ शङ् स्थितौ। (धृ—तुदा० आ०) श, ङ—ध्रियते। "ध्रियते यावदेकोऽपि रिपुस्तावत् कुतः सुखम्"इति माघ।२।३५।"ध्रियते कुसुमप्रसाधनं तव तच्चारुवपुर्न दृश्यते' इति कुमारसम्भवम्।४।१८।

## धृञ् च धृत्यां धृक् च धृङ्ऽवध्वंसे पृलि पालने।

१०। धृञ् च धृत्याम्। (धृ—भ्वा० उ०) ञ—धरति धरते। चकारात् धृशङ् च। तौदादिको धृधातुरपि धारणार्थे वर्त्तते इत्यर्थः।

१०। धृक् च। (धृ—चु० प०) क—धारयति। चकारात् धृत्याम्।

१०। धृङ् अवध्वंसे। (धृ—भ्वा० आ०)अवध्वंसः पतनम्। ङ—धरते पत्रं वृक्षात्। गोविन्दभट्टस्तु अविध्वंसने इति पठित्वा विध्वंसनं स्रंसनं तस्याभावोऽविध्वंसनं स्थापनमिति व्याख्याति।

११। पृलि पालने। (पृ—ह्ला० प०) लि—पिपर्त्ति। "पिपर्त्ति पृथिवीञ्च यः" इति हलायुधः।३७।

पृक् च पूर्त्तौ पृ न प्रीतौ पृशङ् व्यायामके भृलि।
टु डु भृञ् भृतिपुष्ट्योर्मृशङ् मृतौ वृग्न वृञ्वृतौ॥

११। पृक् च पूर्त्तौ। (पृ—चु० प०) पूर्त्तिः पूर्णीकरणम्। क—पारयति पयसा कुम्भं लोकः। चकारात् पृलि च पूर्त्त्यर्थक इत्यर्थः। "पारयत्यर्थिनामाशाम्" इति हलायुधः।३७।

११। पृ न प्रीतौ। (पृ—स्वा० प०) न—"अतिथीन् पृणोति" इति हलायुधः।७।

११। पृ शङ् व्यायामके। (पृ—तुदा० आ०) व्यायामको व्यापारः। श, ङ—"धर्मे व्याप्रियते नित्यम्" इति हलायुधः।३७।

१२। भृलि टु डु ञ् भृतिपुष्ट्योः (भृ—ह्ला० उ०) (भृ—भ्वा० उ०)
१२। भृ ञ भृतिपुष्ट्योः भृतिर्भरणं, पुष्टिः पोषणम्। लि, ञ—बिभर्त्ति शशिनं शम्भुर्बिभृते जनकः सुतम्। टु—भरथुः। डु—भृत्रिमम्। भ्वादिपक्षे भृतिः पूरणम्। ञ—भरति भरते कुम्भमद्भिर्जनः। "यो भुजाभ्यां भुवो भारं भरते भरतोपम। बिभर्त्ति च यशोराशिं भूयांस यस्य भूरपि॥" इति कविरहस्योदाहरणे भ्वादिपक्षेऽपि धारणार्थत्वमुपलभ्यते। "भरणं पोषणं पूरणं वा" इति कातन्त्रधातुवृत्तौ रमानाथः।

१३। मृशङ् मृतौ। (मृ—तुदा० आ०) मृतिः प्राणत्यागः। ङ, श—म्रियते प्राणी। ङित्त्वेऽप्यस्य "मृङष्टीव्ये मम्" इति नियमेनान्यत्र परस्मैपदम्। ममार, मर्त्ता, मरिष्यति, अमरिष्यत्।

१४। वृग्न ञ वृतौ। (वृ—क्र्या० स्वा० उ०) (वृ—भ्वा० उ०) ग,
१४। वृ ञ वृतौ। ञ—वृणाति वृणीते। न, ञ—वृणोति वृणुते। ञ—वरति वरते। वकारस्य दन्त्यत्वात् संवृणोतीत्यादौ नानुस्वारस्य मकारः। ओष्ठ्यत्वाच्च वुवूर्षतीत्यादौ "ऋदिरणौ" इत्युर्। न च दन्त्यस्य कथमोष्ठ्यकार्यमिति वाच्यं, यतः स्वभावादोष्ठ्यस्य वकारस्य ओष्ठ्यकार्यं स्वाभाविकमेव, क्वचिद्दन्त्यकार्यमपीति दन्त्यमध्ये पाठः। नह्येकवर्णस्योभयस्थानं सम्भवति। सत्कीर्त्तिञ्च वृणातीति, धर्मं वृणीतेऽध्वरे इति, वरति ज्ञातीन् यथार्हैर्धनैरिति, "निवरते नित्य प्रियोपद्रवम्" इति च हलायुधः।११।

**वृक् चाथ वृङ् ग सम्भक्तौ स्वृ ऊ शब्दोपतापयोः।**

१४। वृक् च। (वृ—चु०प०) क—वारयति। चकाराद्वृतौ।"युधि वारयति द्विषः" इति हलायुधः।११। अत्र वारणार्थत्वं धातूनामनेकार्थत्वात्।

१४। अथ वृङ् ग सम्भक्तौ। (वृ—क्र्या०आ०) ङ, ग—वृणीते। सम्भक्तिः सेवनम्। "वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः" इति भारविः।२।३०।

१५। स्वृ ऊ शब्दोपतापयोः। (स्वृ—भ्वा० प०) दम्भादिर्वकारोपधः। ऊ—अस्वारीत् पिकः, अस्वार्षीत् खलं राजा।

**स्तृनञ् स्तृतौ सृक् च सृलिं सृगतौ स्मृ स्मृतौ स्मृम।**
**औत्क्ये स्तृ स्पृन् प्रीतिरक्षाप्राणने ह्वृ ध्व्रवत् हलिर्।**
**प्रसह्यकृत्यां हृञ् इत्यामृदन्तास्त्वेकविंशतिः॥**

१६। स्तृनञ् स्तृतौ। (स्तृ—स्वा० उ०) न, अ—स्तृणोति स्तृणुते। स्तृतिराच्छादनम्। "तच्छिरोभिः स्तृणोति गाम्।" "स्तृणुते त्रिदशावासं यः कुन्देन्दुनिभैर्गुणैः" इति हलायुधः।७४।

१७। सृक् च। (सृ—चु० प०) क—सारयति। चकारात् स्तृतौ।

१७। सृलिं गतौ। (सृ—ह्वा० प०) र—वैदिकः। लि—ससर्त्ति।

१७। सृ गतौ। (सृ—भ्वा० प०) सरति। "नालानां करिणां सस्रे त्रिपदोच्छेदिनामपि"इति रघौ कर्म्मकर्त्तृत्वादिति रमानाथः, तच्चिन्त्यं, कर्त्तृस्थभावधातूनां तन्निषेधात्। वस्तुतस्तु गणकृतानित्यत्वादात्मनेपदम्। नालानैरिति वा पाठ्यम्। तत्र कर्म्माविवक्षायां भावे प्रत्ययः।

१८। स्मृ स्मृतौ। (स्मृ—भ्वा०प०) स्मरति। स्मृतिर्ज्ञानविशेषः। तथाच—"संविज्ञगवती द्वेधा स्मृत्यनुभवभेदिका"इति तार्किकाः। तेन ञौ अकर्म्मकर्त्तुः कर्म्मत्वम्। गुरु शिष्यं शास्त्रं स्मारयति।

१८। स्मृ म औत्क्ये। (स्मृ—भ्वा० प०) म—स्मरयति। उत्क उत्कण्ठितः तस्य भाव औत्क्यमुत्कण्ठा। आध्याने इति प्राञ्चः, आ समन्तात् ध्यानमाध्यानमिति कश्चित्, उत्कण्ठेति काशिकावृत्तिवोपदेवौ। उत्कण्ठापूर्वकं स्मरणमिति वृद्धाः। "मुहुरनुस्मरयन्तमनुक्षपं त्रिपुरदाहम्"इति भारविः।५।१४।

१८। स्तॄ प्रीतिरक्षाप्राणने } (स्तॄ—स्वा० प०) (स्तृ—स्वा० प०) द्वौ
१८। स्तृन् प्रीतिरक्षाप्राणने } क्रमाद्दन्त्योष्ठ्यवर्गाद्योपधौ। न—स्तृणोति।
तस्तार। न—स्पृणोति। पस्पार। शेषस्तु ओष्ठ्यवर्गपञ्चमोपध इति दुर्गरामौ।
स्मृणोति।

२०। ह्वृ ध्वृवत्। (ह्वृ—भ्वा० प०) ध्वृवत् कौटिल्ये। ध्वृधातुरिव
कौटिल्यार्थकः। ह्वरति लतां वायुः।

२१। हृ लि र् प्रसह्यकृत्याम्। (हृ—ह्वा० प०) प्रसह्यकृतिर्बलात्कारः।
लि—जहर्त्ति धनं दस्युः। र—वैदिकः।

२१। हृञ् हृत्याम्। (हृ—भ्वा०उ०) हृतिर्देशान्तरप्रापणा। ञ—हरति,
हरते गां वनं गोपः।

## ऋदन्तास्त्वेकविंशतिः।

ऋकारान्ता धातव एकविंशतिसंख्यया संख्येयाः। संख्यासङ्गतिस्तु पूर्ववत्।

—०—

## ॠकारान्तवर्गः।

ॠगि गत्यां कॄञ् गि हिंसे कॄश् विक्षेपेऽथ कॄक ङ।
विज्ञाने गॄङ्क विज्ञापे च गॄश् निगरणेऽथ गॄ।
गिशब्दे जॄगिकि ज्याने जॄ इर्षस्य च भॄष्य च॥

१। ॠगि गत्याम्। (ॠ—क्र्या० प०) गि—ॠणाति, ईर्णः, ईर्णिः।
"ॠणाति फणिनां पुरम्" इति हलायुधः।४५। यस्य कीर्त्तिरिति पूर्वेण सम्बन्धः।

२। कॄञ्गि हिंसे। (कॄ—क्र्या० उ०) ञ, गि—कृणाति कृणीते, कीर्णः
कीर्णिः। "कृणाति तुरगान् रणे" इति हलायुधः।४४।

२। कॄश् विक्षेपे। (कॄ—तुदा०प०) श—किरति। अस्याऽपि निष्ठायां
कीर्णं इति। "मूर्च्छाद्योदित्" इत्यत्र मूर्च्छवर्जनसामर्थ्यात् येन केनापि प्रकारेण
रेफान्तान्निष्ठातस्य न इति व्याख्यानात् "ॠदिरणे" इति इरि उरि च कृते
रान्तत्वान्निष्ठातस्य न स्यात्। एवं गॄश निगरणे इत्यादेरपि गीर्णं इत्यादि
बोध्यम्। "बाणावलिं किरत्याजौ" इति हलायुधः।४४।

२। अथ कॄ कङ विज्ञाने। (कॄ—चु० आ०) क, ङ—कारयते।

१। गॄ ङ्, क विज्ञापे च। (गॄ—चु० आ०) विज्ञापो विज्ञापनम्। चकारात् विज्ञाने च। ङ, क—गारयते सूक्ष्ममर्थं सुधीः।

२। गॄ श निगरणे। (गॄ—तुदा० प०) निगरणं भक्षणम्। श—गिरत्यन्नं लोकः। "दैवात्ततो विगलितो गिलितो वकेन" इति तु अस्मात् "आतो: कभावे" इति भावे कप्रत्यये "ऋदिरणो"इति इरि वक्तव्याद्रेफस्य लकारे गिल इति स्थिते "ले: क्रत्याख्याने"इति जौ कर्म्मणि क्ते सिद्धम्। "सत्यं सङ्गिरते यश्च" इति हलायुधः।२५८।

३। अथ गॄ गि शब्दे। (गॄ—क्र्या० प०) शब्द इह व्यक्तवाक्यम्। गि—गृणाति वाक्यं लोकः। गीर्णः गीर्णिः। "गृणाति शुभगं वचः" इति हलायुधः।२५८।

४। जॄ गि कि ज्याने। (जॄ—क्र्या० चु० भ्वा० प०) गि—जृणाति, जीर्णः, जीर्णिः। कि—जारयति जरति। ज्यानं गतबहुवयो भावः। "जृणाति न यस्य शक्तिः" इति हलायुधः।८।

४। जॄ इर्य्यस्य च। (जॄ—दिवा० प०) इर्—अजरत् अजारीत्। ष—जरा। म—जरयति। य—जीर्य्यति। चकारात् ज्याने। "जीर्य्यन्ति जीर्य्यतः केशा दन्ता जीर्य्यन्ति जीर्य्यतः। धनाशा जीविताशा च जीर्य्यतोऽपि न जीर्य्यति" ॥ इति हितोपदेशः।

५। झॄष च। (झॄ—दिवा० प०) ष—झरा। य—झीर्य्यति। चकारात् ज्याने।

**तॄ तरेऽभिभवे प्लुत्यां दॄगि हॄम् भियि हॄ यगि।**
**विदारे, नॄगि नॄम् नीतौ ञि पॄगि लितु पालने॥**

६। तॄ तरेऽभिभवे प्लुत्याम्। (तॄ—भ्वा० प०) तरः प्लवनपूर्वकदेशान्तरगमनम्। प्लुतिर्मज्जनाभावः। तरे यथा—"तरति नदीं भेलया पान्थः"। अभिभवे यथा—"तरति सकलदुःखं वामनं भावयेद् यः"। प्लुतौ यथा—तरति शुष्ककाष्ठं जले न मज्जति इत्यर्थः। "तामवारोहयत् पत्नीं रथादवततार च" इति रघुः।१।५४।

७। दॄगि भियि। (दॄ—क्र्या० प०) गि—दृणाति, दीर्णं, दीर्णिः। "न जातहार्दैन न विद्विषादरः"इति भारविः।१।१२।

७। दॄम् भियि। (दॄ—भ्वा० प०) दरति। म—दरयति। "दरन्ति दिग्धीशाश्च यस्य दिग्विजयोदये" इति हलायुधः।७२।

७। दॄ यगि विदारे (दॄ—दिवा० क्र्या० प०) य—दीर्य्यति। गि—दृणाति, दीर्णः, दीर्णिः। "न विदीर्य्ये कठिनाः खलु स्त्रियः" इति कुमारसम्भवम् ।४।५। "दृणाति च रणे रिपून्" इति हलायुधः ।७३।

८। नॄ गि नीतौ। (नॄ—क्र्या०प०) गि—नृणाति, नीर्णः, नीर्णिः।

८। नॄम् नीतौ। (नॄ—भ्वा० प०) नरति। म—नरयति। नीतिः प्रापणा।

९। ञि पॄगिलि तु पालने। (पॄ—क्र्या० ह्वा० प०) ञि—पूर्त्तोऽस्ति। "सूल्वाद्योदित्"इत्यत्र पूर्वजंनात्र निष्ठातस्य नः। गि—पृणाति। लि—पिपर्त्ति। "अपारीत् स गृहीतोल्को हतशेषान् प्लवङ्गमान्" इति भट्टिः। १५।१००।

पॄक् च पूर्त्तौ वॄगि वृत्यां भृत्यां भॄगि भृतौ भृजि।
भर्त्से मॄगिवधे वॄगिञ् वृत्यां शॄ स्तॄगि हिंसने॥

९। पॄक् च पूर्त्तौ। (पॄ—चु० प०) क—पारयति। चकारात् ञि पॄ गि लि च (पूर्त्त्यर्थकः) इत्यर्थः।

१०। वॄगि वृत्यां भृत्याम्। (वॄ—क्र्या० प०) गि—वृणाति, वूर्णः, वूर्णिः।

११। भॄगि भृतौ भृजि भर्त्से। (भॄ—क्र्या० प०) गि—भृणाति, भूर्णः, भूर्णिः। भृजि भर्जने। "कर्म्मबीजानि सर्वाणि योगाभ्यासाद्भृणाति यः" इति हलायुधः ।८७। भृणाति दहतीत्यर्थः।

१२। मॄगि वधे। (मॄ—क्र्या० प०) गि—मृणाति, मूर्णः, मूर्णिः। "युद्धे मृणाति शत्रूणामश्वान्" इति हलायुधः ।१०५।

१३। वॄगिञ् वृत्याम्। (वॄ—क्र्या० प०) गि, ञ—वृणाति वृणीते, वूर्णः, वूर्णिः।

१४। शॄगि हिंसने (शॄ—क्र्या० प०) (स्तॄ—क्र्या० प०) आद्यस्तालव्यादिः शेषो दन्त्यादिर्वकारोपधः। तद्रहितोऽपीति केचित्।
१५। स्तॄगि हिंसने गि—शृणाति, शीर्णः, शीर्णिः। स्तृणाति, स्तूर्णः स्तूर्णिः।

स्तॄञगि च्छादने प्रोक्ता ॠकारान्तास्तु षोड़शः।

१६। स्तॄञगि च्छादने। (स्तॄ—क्र्या०उ०) ञ, गि—स्तृणाति स्तृणीते। स्तीर्णः, स्तीर्णिः।

प्रोक्ता ॠकारान्तास्तु षोड़शः।

ॠकारान्ता धातवः षोड़शसंख्यया संख्येयाः। सङ्ख्यासङ्गतिस्तु पूर्ववत्।

## एकारान्तवर्गः ।

देङ् पालनेऽथ धेट् पाने मेङ् प्रतिदान ऐञवे ।
स्यूतौ, व्येञै वृतौ ह्वेञै स्पर्द्धे शब्दे षड़ेपराः ॥

१। देङ् पालने। (दे—भ्वा॰ आ॰) ङ—दयते दीनं दाता।

२। अथ धेट् पाने। (धे—भ्वा॰ प॰) धयति। ट—स्त्रियामीबर्थः। स्तनन्धयी। अथागम्य देवराड़ब्रवीत्। मामयं धास्यति (पास्यति) ततोऽसौ मान्धाता नामतोऽभवदिति विष्णुपुराणम्।

३। मेङ् प्रतिदाने। (मे—भ्वा॰ आ॰) प्रतिदानं परीवर्त्तः। ङ—मयते धान्येन माषं लोकः।

४। ऐ ञ वे स्यूतौ। (वे—भ्वा॰ उ॰) स्यूतिस्तन्तुसन्तानः। ऐ—ऊयते। ञ—वयति, वयते तन्त्रं तन्तुवायः।

५। व्ये ञै वृतौ। (व्ये—भ्वा॰ उ॰) ञ—व्ययति व्ययते। ऐ—वीयात्। वृतिः संवरणम्।

६। ह्वे ञै स्पर्द्धे शब्दे। (ह्वे—भ्वा॰ उ॰) स्पर्द्धः पराभिभवेच्छेति वोपदेवः। ञ—ह्वयति, ह्वयते मल्लो मल्लमभिभवितुमिच्छतीत्यर्थः। ह्वयति जनं लोक आह्वयतीत्यर्थः। ऐ—हूयात्। गोविन्दभट्टस्तु स्पर्द्धाविषये व्यक्तवाक्येऽयमित्याह। "बन्धुप्रियां बन्धुजनो जुहाव" इति कुमारसम्भवम्।१।२६।

### षड़ेपराः।

ए एकारः पर परवर्त्ती येषां ते, एकारान्ता धातव इत्यर्थः, षट् षट्संख्यकाः।

---

## ऐकारान्तवर्गः।

कै शब्दे घै चये खै तु स्थैर्य्ये खननहिंसयोः।

१। कै शब्दे। (कै—भ्वा॰ प॰) कायति। एषामादन्तत्वेन दिवादौ पाठेऽपीष्टसिद्धौ भ्वादावैकारान्तत्वेन पाठो गणकृतमनित्यमिति ज्ञापयति। तेन अयधातोरात्मनेपदानित्यत्वे शपो लुकि च यूोर्लोप इति यलोपे पराशब्दस्य रेफस्य लत्वाभावे ल्लकारे "एष कालः समुत्पन्नो यः पलाति स जीवति" इति

सिद्धम् । वेदेषूच्चारणभेदार्थो भ्वादौ पाठ इति केचित् । "कायति नासत्य-वचनम्" इति नैषधे ।

२ । चै चये । (चै—भ्वा० प०) चादि । चायति । चै ञः चामः । "चायति द्विषतां कुलम्" इति हलायुधः ।११२।

३ । खै तु खर्य्ये खननहिंसयोः । (खै—भ्वा० प०) खायति ।

**गै गाने म्लै क्षमेऽथो जै च्ये वैङ् पालनेऽथ दैप् ।**
**शोधने दै न्यक्करणे द्रै स्वप्ने ध्यै तु चिन्तने ॥**

४ । गै गाने । (गै—भ्वा० प०) गीतं गायति गायनः ।

५ । ग्लै क्षमे । (ग्लै—भ्वा० प०) अन्तःस्थतृतीयोपधः । क्षमो हर्षक्षयः । ग्लायति लोकः शोकात् । अनुपसर्गस्य ञौ "ज्वलह्वल" इत्यादिना वा ह्रस्वः । ग्लपयति ग्लापयति । सोपसर्गस्य तु प्रग्लापयति ।

६ । अथो जै च्ये । (जै—भ्वा० प०) जायति ।

७ । वैङ् पालने । (वै—भ्वा० आ०) दन्त्यवर्गाद्यादिः । ङ—त्रायते । "त्रायस्वाहि" इति त्रायते त्राः विच् पश्चात् त्रा इवाचरेति कौ साध्यम् । केचित्-दादौ त्रा इति पठ्यते इति क्रमदीश्वरः ।

८ । अथ दैप् शोधने । (दै—भ्वा०प०) पित्त्वाद्दासंज्ञाभावे यगादौ दायते इत्यादि । शोधनमिह शुद्धीकरणम् । दायति ताम्रमम्लेन लोकः । अवपूर्वः शुक्लीभावे । श्विन्दते श्वेतते त्रीणि स्युः शुक्लत्वेऽवदायतीति भट्टमल्लः । "योऽव-दायति कीर्त्तिं च" इति हलायुधः ।२४। अवदायति विशुद्धां कीर्त्तिमर्जयतीत्यर्थः ।

९ । दै न्यक्करणे । (दै—भ्वा० प०) अन्तःस्थाद्ययुक्तः । द्यायति दुष्टं लोकः । न्यक्करणं तिरस्कारः ।

१० । द्रै स्वप्ने । (द्रै—भ्वा० प०) द्रायति ।

११ । ध्यै तु चिन्तने । (ध्यै—भ्वा० प०) ध्यायति धीरो विष्णुम् ।

**प्रै तृप्तौ प्यैङ वृद्धौ पै शोषि स्त्यै कान्तिसञ्चये ।**
**रै शब्द ओ वै शोषे श्रै स्वेदे श्रैम् पचने मतः ॥**

१२ । प्रै तृप्तौ । (प्रै—भ्वा० प०) रेफोपधः । प्रायति लाभाल्लोकः प्रीतः स्यादित्यर्थः ।

१३ । प्यैङ वृद्धौ । (प्यै—भ्वा० आ०) अन्तःस्थाद्योपधः । ङ—प्यायते ।

१४। पै शोषे। (पै—भ्वा० प०) पायति धान्यमातपात्।

१५। ष्मै कान्तिसंचये। (ष्मै—भ्वा० प०) ष्मायति चन्द्रो दिवसे।

१६। रै शब्दे। (रै—भ्वा० प०) रेफादिः। रायति।

१७। ओ वै शोषे। (वै—भ्वा० प०) वकारादिः। ओ—वानः। "वाति वातः पुरे यस्य तावन्मात्रेण भीतवत्। उद्वायति यथा स्त्रीणां खेदार्द्रं सुरते वपुः॥" इति हलायुधः।२१४।

१८। श्रै स्वेदे। (श्रै—भ्वा० प०) रेफोपधः। श्रायति रौद्रात्लोकः।

१८। श्रैम् पचने मतः। (श्रै—भ्वा० प०) रेफोपधः। म—श्रपयति। "अन्नं श्रायत्यनुपमरसं शूल्यमुखाश्च मांसम्। राष्ट्रे यस्य श्रपयति जनः सुस्थितो हव्यकव्यम्॥"इति हलायुधः।१८।

## श्यैङ् गतौ षै क्षयेऽथ स्त्यै वेष्टे ध्यै संहतौ ध्वनौ।
## स्त्यै च स्नै पचि सै क्षित्यामैदन्ताः पञ्चविंशतिः॥

१८। श्यैङ् गतौ। (श्यै—भ्वा० आ०) तालव्यादिरन्तःस्थाद्योपधः। ङ—श्यायते। "पथश्चाश्यानकर्द्दमान्" इति शोषार्थे रघुः।४।२४।

२०। षै क्षये। (षै—भ्वा० प०) मूर्द्धन्यादिः। सायति।

२१। अथ स्त्रै वेष्टे। (स्त्रै—भ्वा० प०) प्रकृत्या दन्त्यवर्गशेषोपधः। स्त्रायति वृक्षं लता। अनुपसर्गस्य णौ "ज्वलह्वल"इत्यादिना ह्रस्वो वा। स्त्रपयति स्त्रापयति। सोपसर्गस्य तु प्रस्त्रापयति। "यः स्त्रायति जगत् सर्वं विसतन्तुनिभैर्गुणैः" इति हलायुधः।२१८। स्त्रायति वेष्टते व्याप्नोतीत्यर्थः।

२२। ध्यै संहतौ ध्वनौ। (ध्यै—भ्वा० प०) अन्तःस्थाद्ययुक्तदन्त्यवर्गाद्यमध्यः। षयोगाद्दः, तेन तष्ट्यौ तिष्ट्यासति ताष्ट्यायते। संहतिः समूहः। ष्ट्यायति लोकः, एकत्र समूहायते शब्दायते वेत्यर्थः। दन्त्यविधौ ष्ट्यैष्वष्कष्ठिवां वर्ज्जनान्न दन्त्यः।

२३। स्त्यै च। (स्त्यै—भ्वा० प०) दन्त्यादिरन्तःस्थाद्ययुक्तस्तमध्यः। स्त्यायति तिस्त्यासति। चकारात् संहतिध्वन्योः। "स्त्यानावनद्धघनशोणितशोणपाणिः"इति वेणीसंहारनाटकम्।

२४। स्नै पचि। (स्नै—भ्वा० प०) रेफयुक्तः। स्नायति। पचि पाके।

२५। सै क्षित्याम्। (सै—भ्वा० प०) सायति। क्षितिः क्षयः।

## ऐदन्ताः पञ्चविंशतिः।

ऐकारान्ता धातवः पञ्चविंशतिसंख्यकाः। संख्यासङ्गतिस्तु पूर्ववत्।

---

## ओकारान्तवर्गः।

**छोय् लूनौ ज्योङ् नियमव्रतादेशोपनीतिषु।**
**दोय च्छेदे शोय् निशाने षोय् नाशे पञ्च ओपराः॥**

१। छोय्लूनौ। (छो—दिवा० प०) लूनिश्छेदः। छ्यति धान्यं लोकः।

२। ज्योङ् नियमव्रतादेशोपनीतिषु। (ज्यो—भ्वा० आ०) व्रतस्यादेशो व्रतादेश। ङ—ज्यवते याज्ञिको नियमी स्यादित्यर्थः। ज्यवते पण्डितो जनं व्रतमुपदिशतीत्यर्थः। ज्यवते पुत्रं विप्र उपनयते इत्यर्थ.।

३। दोय च्छेदे। (दो—दिवा० प०) य—"शिरोऽवद्यति विद्विषाम्"इति हलायुधः।२४।

४। शोय निशाने। (शो—दिवा० प०) निशानमित्यल्पीकरणम्। य—श्यति शत्रुं शूरः।"पुराणि दुर्गाणि निशातमायुधम्"इति माघः। तत्र निशातमिति निपूर्वकशोधातोः कर्म्मणि क्त, पक्षे निशितमपि।

५। षोय् नाशे। (षो—दिवा० प०) मूर्द्धन्यादिः। नाश इह नष्टीकरणम्। स्यति यमो जन्तून्।

## पञ्च ओपराः।

ओपरा ओकारान्ता धातवः पञ्च पञ्चसंख्यकाः। इत्यजन्ताः।

---

## कान्तवर्गः।

**अकिक् लक्ष्मण्यकिङ्गत्यां चाक्म वक्रगतेऽर्कक।**
**तापस्तुत्योः कक्क हासे ककङिच्छागर्वचापले॥**

१। अकिक्लक्ष्मणि। (अङ्क—चु० प०) लक्ष्मचिह्नयुक्तकरणम्। इ, क—अङ्कयति वस्त्रं रजकः। नोपधपाठेऽपि ञेर्नित्यत्वात् "हसुङ्नोलोपोऽणौ" इत्यस्याप्राप्तौ यगादौ अङ्क्यते इत्यादिसिद्धावपि इदित्पाठश्चुरादेर्ञेरनित्यत्वज्ञापनार्थः। तेन अङ्कतीत्यपि स्यात्। तथाच वोपदेवः—"सिद्धे नित्यणिजन्तत्वा-

णित्यनुम्त्वे कितामिदित् । णिजनित्यत्वबोधार्थं न दृष्टोऽनुम्विधिः क्वचित्" ॥ इति । अस्यार्थ —किता कानुबन्धधातूनां नित्यणिजन्तत्वात् नित्यञान्तत्वात् नित्यनुम्त्वे नित्यनकारवत्त्वे सिद्धे इदित् इदनुबन्धकरणं णिचो ञेरनित्यत्व-बोधनार्थं, किन्तु अनुम्विधिर्नकाराभाव. क्वचिदपि न दृष्ट इति ।

१ । अकिङ् गत्याञ्च । (अङ्क—भ्वा० आ०) चकाराल्लक्ष्मणि च । इ—अङ्क्यते । ङ—अङ्कते पुण्यतीर्थेषु वृषयुग्मानि शक्तित इति हलायुधः ।१६०। अङ्कते दानार्थं चिह्नितानि करोतीत्यर्थं ।

१ । अक्म वक्रगते । (अक—भ्वा० प०) म—अकयति । अकति सर्प' ।

२ । अर्क क तापस्तुत्योः । (अर्क—चु० प०) एककारप्रकृतिक', पश्चाद्रेफनिमित्त' द्वित्व विभाषया वक्तव्यम् । तेन क—अर्क्कयति अर्कयति । एवं सर्वत्र ।

३ । कक्क हासे । (कक्क—भ्वा० प०) कोपध. । कक्कति ।

४ । कक ङिच्छागर्वचापले । ( कक—भ्वा० आ० ) इच्छेह तृष्णा । गर्वः कौश्चिन्न मन्यते । चापल चपलीभावः । ङ—ककते काक. सतृष्ण-श्चञ्चलो वा स्यादित्यर्थः ।

ककि ङ व्रजने कुक् ङ त्वादाने किष्क कङ् बधे ।
चक अङ् म प्रतीघाततृप्त्योश्चीकक्कि मर्शने ॥

४ । ककि ङ व्रजने । (कङ्क—भ्वा० आ०) इ—कङ्क्यते । ङ—कङ्कते । कङ्कः पक्षिविशेष । ककि लौल्येऽच् इत्यमरटीका ।

५ । कुक् ङ तु आदाने । (कुक्—भ्वा० आ०) ङ—कोकते । कोको व्याघ्रविशेष , कोकते मेषादीनादत्ते इत्यमरटीका ।

६ । किष्क कङ् बधे । ( किष्क—चु० आ० ) मूर्द्धन्योपधः । क, ङ—किष्कयते ।

७ । चक अङ्म प्रतीघाततृप्त्योः । (चक—भ्वा० उ० आ०) प्रतीघातो व्याघातः । अ—चकति चकते खल. साधु ( व्याहन्तीत्यर्थ । ) ङ—चकते जन-स्तृप्यतीत्यर्थः । म—चकयति ।

८ । चीक क्कि मर्शने । (चीक—चु० भ्वा० प०) क्कि—चीकयति चीकति । मर्शनं स्पर्श. ।

चक्क चिक्क चुक्क कर्त्तौ टकि क् बन्धेऽथ टीक टिक्।
ढौक त्रौक तिक्कङ् गत्यां तिक् नास्कन्दे बधे तकि।
दौस्थ्ये तक् सहने हासे तर्कक् दीप्तौ त्वकिङ् गतौ॥

८। चक्क क् अर्त्तौ (चक्क—चु॰ प॰) (चिक्क—चु॰प॰) (चुक्क—चु॰
१०। चिक्क क् अर्त्तौ प॰) त्रय कोपधा' क्रमादाद्यतृतीयपञ्चमस्वर-
११। चुक्क क् अर्त्तौ मध्याश्च। अर्त्ति पीडनम्। क—चक्कयति,
चिक्कयति, चुक्कयति अस्तु शूर.।

१२। टकि क् बन्धे। (टङ्क—चु॰ प॰) इ, क—टङ्कयति।

१३। अथ टीकङ् गत्याम्। (टीक—भ्वा॰ आ॰) (टिक—भ्वा॰ आ॰)
१४। टिकङ् गत्याम्। (ढौक—भ्वा॰ आ॰) (त्रौक—भ्वा॰ आ॰)
१५। ढौकङ् गत्याम्। (तिक—भ्वा॰ आ॰) तृतीयचतुर्थौ चतु-
१६। त्रौकङ् गत्याम्। र्दशस्वरिणौ, चतुर्थो रेफमध्यश्च। ङ—
१७। तिकङ् गत्याम्। अटिटीकत्। अटिटेकत्। अडुढौकत्।
अतुत्रौकत्। अतितेकत्। ङ—टीकते। टेकते। ढौकते "यास्त वने रात्रिचरी डुढौके" इति भट्टि।२।२३। त्रौकते। तेकते।

१७। तिक्नास्कन्दे बधे। (तिक्—स्वा॰ प॰) न—तिक्नोति।

१८। तकि दौस्थ्ये। (तङ्क—भ्वा॰ प॰) इ—तङ्कति। दौस्थ्यं दुःखेन जीवनम्। तङ्कति दीनः दुःखेन जीवतीत्यर्थ.।

१८। तक् सहने हासे। (तक्—भ्वा॰ प॰) तकति।

१९। तर्कक् दीप्तौ। (तर्क—चु॰ प॰) क—तर्कयति। वितर्कोऽप्ययम्। तर्कयत्यन्यगुणं सुधीः।

२०। त्वकिङ् गतौ। (त्वङ्क—भ्वा॰ आ॰) दन्त्यवर्गाद्यादिः। इ—त्वङ्कते। ङ—त्वङ्कते।

द्रेक ध्रेक्कङ् स्वनोत्साहे धक्क नक्क क नाशने।
निष्क कङ्माने फक्काऽसद्व्यवहारे शनैर्गतौ॥

२१। द्रेकङ् स्वनोत्साहे (द्रेक—भ्वा॰ आ॰) (ध्रेक—भ्वा॰ आ॰)
२२। ध्रेकङ् स्वनोत्साहे आद्यो दकारादिः। द्वौ रेफमध्यौ। द्वावर्थौ।

उत्साहो हर्षिरिति चन्द्रः। ओजस्यमिति क्षीरस्वामी। ऋ—अदिद्रेकत्। अदि-भ्रेकत्। ङ—द्रेकते भ्रेकते लोकः, शब्दायते उत्सहते वेत्यर्थः। स्वनेनोत्साह स्वनोत्साह इति केचित्। तस्मते शब्देनोत्सहते इत्यर्थः। "प्राद्रेकत श्वयद्विपम्" इति भट्टिः।१७।८।

२३। धक्क क नाशने } (धक्क—चु० प०) (नक्क—चु० प०) नाशनं नष्टीकरणम्। क—धक्कयति, नक्कयति पापं गङ्गा।
२४। नक्क क नाशने }

२५। निष्कक् ङ माने। (निष्क—चु० आ०) मूर्द्धन्यमध्यः। क, ङ—निष्कयते स्वर्णं वणिक्।

२६। फक्क असद्व्यवहारे शनैर्गतौ। (फक्क—भ्वा० प०) कोपधः। फक्कति खलः कुत्सितं व्यवहरतीत्यर्थः। फक्कति वृद्धो मन्दं गच्छतीत्यर्थः।

बुक्क कि श्वादिशब्देऽथ मस्क मक्कङ् गतौ मकिङ्।
भूषे रेकृ ङ शङ्कायां रक् लक क् स्वाद आपने।

२७। बुक्क कि श्वादिशब्दे। (बुक्क—चु० भ्वा० प०) पञ्चमस्वरी कोपधश्च। चुरादित्वे कथने, भ्वादित्वे कुक्कुरादिकर्त्तृकशब्देऽयमिति रमानाथः। कि—बुक्कयति वचो बहु लोकः, बुक्कति श्वा।

२८। अथ मस्क ङ् गतौ } ( मस्क—भ्वा० आ० ) ( मक्क—भ्वा० आ० )
२९। मक्क ङ् गतौ } आद्यो दन्त्यमध्य इति गदसिंहः। क्विपि संयोगादिलोपे मक्। मूर्द्धन्यमध्य इत्येके। क्विपि संयोगान्तलोपे मट्। शेषः कोपधः। ङ—मस्कते मक्कते।

३०। मकि ङ् भूषे। (मङ्क—भ्वा० आ०) इ—मङ्क्यते। ङ—मङ्कते हारो जगत्। गत्यर्थोऽप्ययमिति रामः।

३१। रेकृ ङ शङ्कायाम्। (रेक—भ्वा० आ०) शङ्का संशयारोपः। ऋ—अरिरेकत्। ङ—रेकते पुरुषत्वं स्थाणौ, स्थाणुर्वा पुरुषो वेति संशयमारोपयतीत्यर्थः। रिरेके।

३२। रक क् स्वाद आपने } (रक—चु० प०) (लक—चु० प०) स्वादो रसोपादानम् ( आपनं प्राप्तिः )। क—राकयति लाकयति मोदकं बालकः।
३३। लक क् स्वाद आपने }

लोकृ क् दीप्तौ लोकृ ङ वीक्षे वस्क वक्कङ् गतौ वकिङ् ।
कौटिल्येऽपि च वृक् ङ त्वादाने वल्क क भाषणे ॥

३४ । लोकृ क् दीप्तौ । (लोक—चु॰ प॰) ऋ—अलुलोकत् । क—लोकयति ।

३४ । लोकृ वीक्षे । (लोक—भ्वा॰ आ॰) ऋ—अलुलोकत् । ङ—लोकते । "विलोकयन्त्यो वपुरापुरक्ष्णां प्रकामविस्तारफलं हरिण्यः" इत्यादौ विलोकनं विलोक पश्चात्तं करोतीति णौ साध्यम् ।

३५ । वस्कङ् गतौ } (वस्क—भ्वा॰ आ॰) (वक्क—भ्वा॰ आ॰) आद्यो
३६ । वक्कङ् गतौ } दन्त्यमध्य इति गदसिंह । क्विपि वक् । मूर्द्धन्यमध्य इत्येके । क्विपि वट् । शेष कोपधः । ङ—वस्कते, वक्कते ।

३७ । वकिङ् कौटिल्येऽपि च । (वङ्क—भ्वा॰ आ॰) कौटिल्यमिह कुटिलीभावः कुटिलीकरणञ्च । इ—वङ्क्यते ङ—वङ्कते काष्ठं कुटिलं स्यादित्यर्थः । वङ्कते काष्ठं जनः कुटिलं करोतीत्यर्थः । अपिशब्दात् गतौ च । चकारः पादपूरणार्थः ।

३८ । वृक् ङ तु आदाने । (वृक—भ्वा॰ आ॰) ङ—वर्कते । (यङि) वरीवृक्यते । वृको व्याघ्रविशेषः, वर्कते मेषादीनादत्ते इति कः ।

३९ । वल्क क भाषणे । (वल्क—चु॰ प॰) अन्तस्थतृतीयोपधः । क—वल्कयति । भाषणं कथनम् ।

शक्यञ शक्‌निरू शक्तौ शकि ङ त्रासशङ्कयोः ।
श्रक् श्लक् श्वकिङ श्रुक् सर्पे शीकृङ् सेके च शीकक ॥
आमर्षे च श्लोकृङ सङ्घाते शुल्क क् च सर्जने ।
वर्जने ष्वल्क क् व भाषे षेकृ, ष्वक्क ङ सर्पणे ।

४० । शक ञ शक्तौ } (शक—दि॰ उ॰) (शक—स्वा॰ प॰) शक्ति-
४० । शक्‌निरू शक्तौ } र्दिवादिपक्षे क्षमा, स्वादिपक्षे सामर्थ्यम् । य, ञ—शक्यति शक्यते दुःखं दीनः । न—शक्नोत्यशक्यमप्याजौ विजेतुं यः इति हलायुधः ।६३। इर—अशकत् अशाकीत् अशकीत् । लिदित्त्वेनास्मान्नित्यं ङ इत्यन्ये । ऊ—शकिष्यति शक्ष्यति । पृथक् पाठादाद्यो न स्वादिः । द्वावे-

वानिमावित्यन्ये । षत्वस्वरानुबन्ध केषाञ्चिदनुरोधात् । द्वावेव सकर्मकौ । तथाच—"शक्योऽस्य मन्युर्भवता विनेतुम्" इति रवौ । रज परिणामभेदो न शक्यते प्रत्याख्यातुमिति तत्त्वकौमुद्यां वाचस्पतिमिश्र । "शक्या मखेनापि मुदोऽमराणाम्" इति नैषधम् ।

४० । शकि ङ त्रासशङ्कयो । ( शङ्क—भ्वा० आ० ) त्रासो भयं, शङ्का संशयारोप । इ—शङ्क्यते व्याघ्राज्जनेन । ङ—शङ्कते पुरुषश्च स्थाणौ, स्थाणुर्वा पुरुषो वेति संशयमारोपयतीत्यर्थः ।

४१ । श्रकिङ् सर्पे (श्रङ्क—भ्वा० आ०) (श्लङ्क—भ्वा० आ०) ( ष्वङ्क—
४२ । श्लकिङ् सर्पे भ्वा० आ० ) ( शुक—भ्वा० प० ) चत्वार. क्रमा-
४३ । ष्वकिङ् सर्पे द्रेफान्त स्थतृतीयवकारपञ्चमस्वरयुक्ताद्या । इ—
४४ । शुक सर्पे श्रङ्क्यते । श्लङ्क्यते । ष्वङ्क्यते । ङ—श्रङ्कते । श्लङ्कते । ष्वङ्कते । शोकति । सर्पो गतिः ।

४५ । शीकृ ङ् सेके च । ( शीक—भ्वा० आ ) ऋ—अशिशीकत् । ङ—शीकते । चकारात् सर्पे च । "शीकन्ते शीकरै सर्वे वायवो दक्षिणो-दधे." इति हलायुधः ।१८३।

४५ । शीक कि आमर्ष च । ( शीक—चु० भ्वा० प० ) कि—शीकयति शीकति । आमर्श. स्पर्श. । तथाच "चन्द्रावतो तरङ्गार्द्रा: शीकयन्ति च यद्वपु" इति हलायुध ।१८३। वायवः स्पृशन्तीत्यर्थ । भट्टमल्लस्तु आमर्षण इति मूर्द्धन्यषमध्यं पठित्वा क्षमार्थमाह । चकारात् सेके च ।

४६ । श्लोकृ ङ सङ्घाते । ( श्लोक—भ्वा० आ० ) सङ्घात इह छन्दोविशिष्ट-वाक्यरचनम् । ऋ—अशुश्लोकत् । ङ—श्लोकते कवि. ।

४७ । शुल्कक् च सर्जने वर्जने । ( शुल्क—चु० प० ) पञ्चमस्वरी अन्तःस्थ-तृतीयोपधः । क—शुल्कयति । चकारात् श्लोकृ ङ च (सर्जनवर्जनार्थ इत्यर्थ) सर्जनमर्जनम् । शुल्क श्लोकृ इत्येतयोरेतावर्थौ केचिन्न मन्यते ।

४८ । ष्वल्कक् च भाषे । ( ष्वल्क—चु० प० ) वकारयुक्ततालव्यादि-रन्त.स्थतृतीयोपधः । क—ष्वल्कयति । चकारात् शुल्कक् च (भाषार्थ इत्यर्थ.) भाषः कथनम् ।

४९ । षेकृ ङ सर्पणे ( षेक—भ्वा० आ० ) ( ष्वक—भ्वा० आ० ) द्वौ
५० । ष्वकृ ङ सर्पणे मूर्द्धन्यादी, शेषो वकारयुक्तादि कोपधः । आद्यस्य

षोपदेशविधौ वर्जनेऽपीह पाठः कस्यचिदनुरोधात्। ञ—असिषेकत्। ङ—सेकते। ष्वङ्गते। षिष्वङ्किषते, षाष्वङ्क्यते। दन्त्यविधावस्य वर्जनान्न दन्त्यः। चान्द्रादयस्तु इम (वकारशून्य) पञ्चमस्वरिण मत्वा षुङ्कते, षुषुङ्किषते, षोषुङ्क्यते इत्याहु ।

**ष्टक स्तक्म प्रतीघाते सीक क्यामृशि सीक्रङ ।**

**सेके स्रकि स्वस्कङ च गत्या स्रेक् सेक्र मित्यपि ॥**

५१। ष्टक् म प्रतीघाते } (ष्टक—भ्वा॰ प॰)। स्तक—भ्वा॰ प॰ ) शेषो
५२। स्तक् म प्रतीघाते } दन्त्यादि । ननु सेक सीक स्रपित्यादिना दन्त्याजन्तसादीनां मूर्द्धन्यादित्वविधानात् कथमयं दन्त्यादिरिति चेन्न तत्रैक स्वपग्रहणेन दन्त्याजन्तसादीनाञ्च क्वचित् दन्त्यादित्वसूचनात्। अन्यथा स्वपेर्दन्त्यवकारान्तसादित्वे नैव सिद्धे तत्र तस्य पृथक्ग्रहणमनर्थकं स्यात्। तेन साम्ब सामन्त्व सान्त्वने इत्यादोनामजन्तसादित्वेऽपि दन्त्यादित्वं सिद्धम्। न च स्वपेर्वकारस्य कथ दन्त्यत्वमिति वाच्यम्? "उदूटौ यत्र विद्येते यो वः प्रत्ययसन्धिजः। अन्तस्थं तं विजानीयात् तदन्यो वर्ग्य उच्यते" ॥ इति स्मरणात्। म—तिष्टकयिषति, तिस्तकयिषति ।

५३। सीक कि आमृशि। (सीक—चु॰भ्वा॰ प॰) कि—सीकयति, सीकति। आमृशि स्पर्शे। प्रमाणन्तु तालव्यादौ द्रष्टव्यम्।

५३। सीक्र ङ सेके। (सीक—भ्वा॰ आ॰ ) ञ—असिसीकत्। ङ—सीकते।

५४। स्रकि ङ गत्याम् } (स्रङ्क—भ्वा॰ आ॰ ) ( स्वस्क—भ्वा॰ आ॰ )
५५। स्वस्क ङ च गत्याम् } द्वौ क्रमाद्रेफवकारयुक्तादी, शेषो दन्त्यसोपधः। इ—स्रङ्कते। ङ—स्रङ्कते, स्वस्कते। चकारात् सीक्र ङ च (गत्यामित्यर्थः)।

५६। स्रेक्र ङ गत्याम् } (स्रेक—भ्वा॰, आ॰ ) ( सेक—भ्वा॰ आ॰ )
५७। सेक्र ङ इत्यपि } ञ—असिस्रेकत्, असिसेकत्। ङ—स्रेकते, सेकते। इतिशब्द पादपूरणार्थ। अपिशब्दात् गत्याम्।

**हिक्क ञ् कूजेऽथ हिक्क क् ङ हिंसे कान्तोनषष्टिका ।**

५८। हिक्कञ् कूजे। ( हिक—भ्वा॰ उ॰ ) कोपधः। ञ—हिक्कति

हिक्कते। कूजोऽव्यक्तशब्दः। हिक्कायामिवेति भट्टमल्लः। हिक्कति लोकः।

५८। अथ हिक्क कङ् हिंसे। (हिक्क—चु० आ०) कोपधः। क, ङ—हिक्कयते।

## कान्तोनषष्टिका।

ऊनषष्टिरेव ऊनषष्टिका। (कान्ता चासौ ऊनषष्टिका चेति विग्रहः। अथवा कान्तानां ऊनषष्टिका) अत्र संख्यायामिको नास्तीति चिन्त्यम्।

—०—

## खान्तवर्गः।

### इखिखौख्युख्युखगतावोखृ शोषालमर्थयोः।

| | |
|---|---|
| १। इख गतौ<br>१। इखि गतौ<br>२। ईखि गतौ<br>३। उखि गतौ<br>३। उख गतौ | (इख—भ्वा० प०) (इङ्ख—भ्वा० प०) (ईङ्ख—भ्वा० प०) (उङ्ख—भ्वा० प०) (उख—भ्वा० प०) द्वावाद्यौ ह्रस्वादी, तृतीयो दीर्घादिः, शेषौ पञ्चमस्वरादी। पुनः पाठादाद्यो नेदनुबन्धः। एखति। इ—इङ्खते। ईङ्खते उङ्खते। ओखति। |

४। ओखृ शोषालमर्थयोः। (ओख—भ्वा० प०) ऋ—मा भवान् ओचिखत्। अत्र हित्वात् प्राक्प्राप्तो ह्रस्व ऋदित्त्वान्न स्यात्। शोष स्नेहरहितीभावः। ओखति पङ्कमातपात्। अलमर्थो भूषणं सामर्थ्यं निवारणञ्च।

### काखृमे कक्ख खक्ख हासे णाखृ गतौ द्राख ध्राखृ तु।
### शोखार्थे नखृ मख मखि रखि रखृ रिखि सर्पणे॥

| | |
|---|---|
| ५। काखृमे हासे<br>६। कक्ख हासे<br>७। खक्ख हासे | (कख—भ्वा०प०) (कक्ख—भ्वा०प०) (खक्ख—भ्वा० प०) द्वावन्त्यौ कोपधौ। शेषः खादिः। म—कखयति। ए—अकखीत्। कक्खति। |

खक्खति।

८। णाखृ गतौ। (णख—भ्वा० प०) प्रणखति।

९। द्राखृ शोषणार्थे (द्राख—भ्वा० प०) (ध्राख—भ्वा० प०)
१०। ध्राखृ तु शोषणार्थे आद्यो दन्त्यवर्गतृतीयादि। द्वौ रेफयुक्तौ। ऋट—अदद्राखत्, अदध्राखत्। शोषणार्थे शोषालमर्थयोरित्यर्थः।

११। नख् सर्पणे
१२। मख सर्पणे
१२। मखि सर्पणे
१३। रखि सर्पणे
१३। रख सर्पणे
१४। रिखि सर्पणे

(नख—भ्वा० प०) (मख—भ्वा० प०) (मङ्ख—भ्वा० प०) (रङ्ख—भ्वा० प ) (रख—भ्वा० प०) (रिङ्ख—भ्वा० प०) द्वितीयतृतीयावोष्ठ्यवर्गपञ्चमादी। प्रणखति। मखति। इ—मङ्खते। इ—रङ्खते। रखति। इ—रिङ्खते।

**राखृ लाखृ शोखृ वल्लिख् श लेखने लिखि लख् लखि।**
**वखि वख् सृपि शाखृ श्लाखृ व्याप्तौ खान्तैकविंशतिः॥**

१५। राखृ शोखृवत् (राख—भ्वा० प०) (लाख—भ्वा० प०)
१६। लाखृ शोखृवत् ऋट—अरराखत्। अललाखत्। शोखृवत् शोषालमर्थयोरित्यर्थः।

१७। लिख श लेखने। (लिख—तु० प०) श—लिखति पुस्तकं लेखकः। अयं विभाषया कुटादिरिति केचित्। तेन "लिखितुं विश्वसृजोऽपि शक्तिहानिः" इति, लिखितव्यं लेखितव्यं लिखनं लेखनमित्यादि सिद्धम्।

१७। लिखि सृपि
१८। लख सृपि
१८। लखि सृपि
१९। वखि सृपि
१९। वख सृपि

(लिङ्ख—भ्वा० प०) (लख—भ्वा० प०) (लङ्ख—भ्वा० प०) (वङ्ख—भ्वा० प०) (वख—भ्वा० प०) इ—लिङ्ख्यते। लखति। इ—लङ्ख्यते। इ—वङ्ख्यते। वखति। सृपि गतौ।

२०। शाखृ व्याप्तौ (शाख—भ्वा० प०) (श्लाख—भ्वा० प०) द्वौ
२१। श्लाखृ व्याप्तौ तालव्यादी। शेषोऽन्तःस्थतृतीययुक्तः। ऋट—अशशाखत्। अशश्लाखत्।

## खान्तैकविंशतिः।

(खान्ताचासावेकविंशतिश्चेति विग्रहः)।

---

## गान्तवर्गः।

### अग्ग वक्रगतेऽगीगि गत्यां कग्गे क्रियासु तु।

१। अग्ग वक्रगते। (अग—भ्वा॰ प॰) म—अगयति। अगति सर्पः।
१। अगि गत्याम् } (अङ्ग—भ्वा॰ प॰) (इङ्ग—भ्वा॰ प॰) शेषस्तृ-
२। इगि गत्याम् } तीयस्वरादिः। इ—अङ्गते। इ—इङ्गते। इङ्गितम्।
३। कग्गे क्रियासु। (कग—भ्वा॰ प॰) म—कगयति। ए—अकगीत्। क्रियासु क्रियामात्रे। कगति लोकः गच्छतीत्याद्यर्थः।

### जुगि त्यागे व्रगि गते त्वगि कम्पे गते तगि।
### स्खलने च तिग्न हिंसास्कन्दयोर्मगि सर्पणे॥

४। जुगि त्यागे। (जुङ्ग—भ्वा॰ प॰) इ—जुङ्गते।
५। व्रगि गते। (व्रङ्ग—भ्वा॰ प॰) इ—व्रङ्गते।
६। त्वगि कम्पे गते। (त्वङ्ग—भ्वा॰ प॰) वकारमध्यः। इ—त्वङ्गते। कम्पस्खलनम्।
७। तगि स्खलने च। (तङ्ग—भ्वा॰ प॰) इ—तङ्गते। चकारात् कम्पगत्योश्च।
८। तिग्न हिंसास्कन्दयोः। (तिग—स्वा॰ प॰) न—तिग्नोति। आस्कन्दः कैश्चिन्न मन्यते।
९। मगि सर्पणे। (मङ्ग—भ्वा॰ प॰) इ—मङ्गते।

### मार्गक् संस्कारे च मार्गक्यन्वेषे युगि वर्जने।

१०। मार्गक् संस्कारे च। (मार्ग—चु॰ प॰) क—मार्गयति। चकारात् सर्पणे च।
१०। मार्गक्यन्वेषे। (मार्ग—चु॰ भ्वा॰ प॰) अन्वेषोऽनुसन्धानम्। कि—मार्गयति मार्गति गुणं गुणी। मार्गन्तां हे देहभावानित्यात्मनेपदं गणकृतानित्यत्वात्। (वरं वरेण्यो नृपतेरमार्गीदिति भट्टिः।१।१२।
११। युगि वर्ज्जने। (युङ्ग—भ्वा॰ प॰) अन्तःस्थाद्यादिः। इ—युङ्गते।

रगमे शङ्के रगक् रक्वत् रग् रिग् लिगि गतौ लिगिक् ।
चित्रे लगि गतौ खञ्जे लगमे सङ्गे लगक् रके ॥

१२। रगमे शङ्के। (रग—भ्वा० प०) म—रगयति। ए—अरगीत्। शङ्कः शङ्का। रगति रोगी कुपथ्येभ्यः।

१२। रगक् रक्वत्। (रग—चु० प०) क—रागयति। रक्वत् स्वादाप्तयोः। रकधातोर्यथा स्वादापने अर्थौ तथास्यापीत्यर्थः।

१२। रगि गतौ
१३। रिगि गतौ
१४। लिगि गतौ
(रङ्ग—भ्वा० प०) (रिङ्ग—भ्वा० प०) (लिङ्ग—भ्वा० प०) इ—रङ्गति। इ—रिङ्गति। इ—लिङ्गति। "लक्ष्मीमालिङ्गति स्नेहात् यः सदा धरणीपतिः" इति हलायुधः।२४१।

१४। लिगिक् चित्रे। (लिङ्ग—चु० प०) इ, क—लिङ्गयति शब्दं स्त्रीपुंनपुंसकैः शाब्दिकः, चित्रं करोतीत्यर्थः। "आलिङ्गयति रत्नांशुजालैश्च मणिकुट्टिमम्" इति हलायुधः।२४१।

१५। लगि गतौ खञ्जे। (लङ्ग—भ्वा० प०) इ—लङ्गति। खञ्जो गतिवैकल्यम्।

१५। लगमे सङ्गे। (लग—भ्वा० प०) म—लगयति। ए—अलगीत्। लगत्यधर ओष्ठे।

१५। लगक् रके। (लग—चु० प०) क—लागयति। रके स्वादाप्तयोः। रकधातुवत् स्वादाप्तिरूपार्थद्वयवाचक इत्यर्थः। रके इति रकक् स्वाद आपाने इत्यस्य ञेरनित्यत्वे भावेऽलिरूपम्।

वगि खञ्जे वुगि त्यागे वल्ग श्रगि श्लगि व्रजे ।

१६। वगि खञ्जे। (वङ्ग—भ्वा० प०) इ—वङ्गति।

१७। वुगि त्यागे। (वुङ्ग—भ्वा० प०) इ—वुङ्गति।

१८। वल्ग व्रजे
१९। श्रगि व्रजे
२०। श्लगि व्रजे
(वल्ग—भ्वा० प०) (श्रङ्ग—भ्वा० प०) (श्लङ्ग—भ्वा० प०) आद्योऽन्तःस्थतृतीयोपधः, शेषौ क्रमाद्रेफान्तःस्थतृतीययुक्ततालव्यादी। वल्गति। अयं प्लुतगताविति भट्टमल्लः। इ—श्रङ्गति। इ—श्लङ्गति।

**षग छग सग स्थग्मे सवृतौ स्वगि सर्पणे ।**

२१ । षग्मे संवृतौ
२२ । छग्मे संवृतौ
२३ । सग्मे संवृतौ
२४ । स्थग्मे सवृतौ
(षग—भ्वा० प० ) ( छग—भ्वा० प० ) ( सग—भ्वा० प० ) ( स्थग—भ्वा० प० ) द्वावाद्यौ मूर्द्धन्यादी, द्वितीयस्तमध्यः षयोगाद्दः, अन्यौ दन्त्यादी, शेषःस्थमध्यः । म—सिषगयिषति, तिष्ठगयिषति, सिसगयिषति, तिस्थगयिषति । ए—असगीत्, अस्तगीत्, अस्थगीत् । असगीदिति षोपदेशाषोपदेशयोरुभयोरुदाहरणम् । द्वितीयो दन्त्यवर्गद्वितीयमध्य इति केचित् । छक इत्यत्र छक इति केषाञ्चिन्मतमित्यर्थः । तिष्ठगयिषति,अतिष्ठगत् ।

२५ । स्वगि सर्पणे । ( स्वङ्ग—भ्वा० प० ) वकारमध्यः । इ—स्वङ्गते ।

**क्रग क्लग्मे संवरणे गान्ताः स्युः सप्तविंशतिः ।**

२६ । क्रग्मे संवरणे
२७ । क्लग्मे सवरणे
( क्रग—भ्वा० प० ) (क्लग—भ्वा० प०) द्वौ क्रमाद्रेफान्तःस्थलतीयमध्यौ । म—क्रगयति, क्लगयति । ए—अक्रगीत्, अक्लगीत् ।

**गान्ताः स्युः सप्तविशतिः ।**

---

## घान्तवर्गः ।

**अर्घ मूल्येऽघि ङ गतौ निन्दारम्भजवेष्वथ ।**
**स्याद् गग्घ घग्घ हसने चघ तिघ् ट्घ घातने ॥**

१ । अर्घ मूल्ये । ( अर्घ—भ्वा० प० ) अर्घति गां गोपः । मूल्य क्रयणम् ।

२ । अघिङ् गतौ निन्दारम्भजवेषु । ( अङ्घ—भ्वा० आ० ) इ—अङ्घते । ङ—अङ्घते । जवो वेगगतिः । अङ्घते वायुर्वेगेन गच्छतीत्यर्थ । ज्वे एव केश्चित् पठ्यते ।

३ । अथ स्याद् गग्घ हसने
४ । घग्घ हसने
( गग्घ—भ्वा० प० ) (घग्घ—भ्वा० प०) अथ शब्द आनन्तर्य्ये । द्वौ कण्ठवर्गतृतीयोपधौ । गग्घति । घग्घति ।

५। चघ्न घातने
६। तिघ्न घातने
७। दघ्न घातने

(चघ—स्वा॰ प॰) (तिघ—स्वा॰ प॰) (दघ—स्वा॰ प॰) न—चघ्नोति, तिघ्नोति, दघ्नोति। दघ घाते इति जौमराः पठन्ति। तदेकवाक्यत्वे कर्त्तव्ये घातनमिति हन्त्यर्थस्य पाचिकचुरादित्वेन हन्तेः स्वार्थञौ रूपं बोध्यं हननमित्यर्थः। किञ्च हिंसन इति पाठेनैवेष्टसिद्धौ घातनपाठो हिंसाप्रेरणार्थः स्यान्नवेति काकदन्तान्वेषणवद्विफलं, त्रयाणामेव कातन्त्राद्यसम्मतत्वात्।

दघि त्यागेऽवने द्राघृ ङ श्रमायामशक्तिषु।

८। दघि त्यागेऽवने। (दङ्घ—भ्वा॰ प॰) इ—दङ्घते। अवनं रक्षणम्।

९। द्राघृ ङ श्रमायामशक्तिषु। (द्राघ—भ्वा॰ आ॰) श्रमः खेदः, आयामो दीर्घकरणं, शक्तिः सामर्थ्यम्। ऋ—अदद्राघत्। ङ—द्राघते जनः, खिद्यतीत्यर्थः। द्राघते वस्त्रं जनो दीर्घं करोतीत्यर्थः। द्राघते धावितुं वाजी, समर्थः स्यादित्यर्थः। "द्राघते वपुरत्यर्थं यद्वियोगि मृगीदृशाम्" इति हलायुधः।१०९।

ङ्ध्राघृ शक्तौ मघिङ कैतवाद्यर्थयोर्मघि।
भूषे रघिक् भासि रघिङ् गमने राघ लाघृङ।
शक्तौ लघिङ्भुग्गत्योर्लघि शोषे लघिक्त्विषि॥

१०। ङ्ध्राघृ शक्तौ। (ध्राघ—भ्वा॰ आ॰) ङ—ध्राघते। ऋ—अदध्राघत्।

११। मघिङ कैतवाद्यर्थयोः। (मङ्घ—भ्वा॰ आ॰) कैतवमिह कितवक्रिया अक्षक्रीड़नादिः। इ—मङ्घते। ङ—मङ्घते अक्षैः कितवः। अद्यर्थो गतिनिन्दारम्भजवाः। कैतवजवयोरेवायमिति केचित्।

११। मघि भूषे। (मङ्घ—भ्वा॰ प॰) इ—मङ्घते।

११। मघि भूषे। (मङ्घ—भ्वा॰ प॰) इ मङ्घते।

१२। रघिक् भासि। (रङ्घ—चु॰ प॰) इ, क—रङ्घयति। भासि दीप्तौ।

१२। रघिङ् गमने। (रङ्घ भ्वा॰ आ॰) इ—रङ्घ्यते। ङ—रङ्घते।

१३। राघृ ङ शक्तौ
१४। लाघृ ङ शक्तौ } (राघ—भ्वा॰ आ॰) (लाघ—भ्वा॰ आ॰) ऋ—अरराघत्। अललाघत्। ङ—राघते। लाघते। शक्तिः सामर्थ्यम्।

१५। लघिङ् अभुग्गत्योः। (लङ्घ—भ्वा॰ आ॰) इ—लङ्घ्यते। ङ—लङ्घते। अभुक् भोजनाभावः। तथाच "ये गुणा लङ्घने प्रोक्तास्ते गुणा लघुभोजने" इति वैद्यकम्। लङ्घने उपवासे इत्यर्थः।

१५। लघि शोषे (लङ्घ—भ्वा॰ प॰) इ—लङ्घ्यते। शोष इहाल्पीकरणम्। "यं व्याधिरतिदीप्ताग्निं कदाचिन्न न लङ्घयति" इति हलायुधः।६७। गतावप्ययं "अन्ये त्वलङ्घिषुः शैलान्" इति भट्टौ।१५।१२।

१५। लघिक् त्विषि। (लङ्घ—चु॰ प॰) इ, क—लङ्घयति। त्विषि दीप्तौ।

## वघि ङ्कृभ्यर्थके शिघ्याघ्राणे श्लाघृ ङ कत्थने।

१६। वघिङ् अभ्यर्थके। (वङ्घ—भ्वा॰ आ॰) इ—वङ्घ्यते। ङ—वङ्घते अभ्यर्थको गतिनिन्दारम्भजवाः। अभ्यर्थानां समूह इति कणि अभ्यर्थकः। जवे एव केचित् पठ्यते।

१७। शिघ्याघ्राणे। (शिङ्घ—भ्वा॰ प॰) इ—शिङ्घ्यते। शिरस्युपशिशिङ्घ च, इन्द्रजितं रावण इति शेषः, इति भट्टिः।१४।५२।

१८। श्लाघृ ङ कत्थने। (श्लाघ—भ्वा॰ आ॰) अन्तःस्थद्वितीययुक्ततालव्यादिः। कत्थनं प्रशंसा। ऋ—अशश्लाघत्। ङ—श्लाघते गुणिनं गुणी। श्लाघमानः परस्त्रीभ्यस्तत्रागाद्राक्षसाधिप इति भट्टिः।८।७२।

## ष्टिघ्न ङास्कन्दि षघ् सघ्न हिंसे घान्तास्तु विंशतिः।

१९। ष्टिघ्न ङास्कन्दि। (ष्टिघ—स्वा॰ आ॰) आस्कन्दत् आस्कन्दनम् (आक्रमणम्) अभियोग इति भट्टमल्लः। न, ङ—स्तिघ्नुते (मलं वक्ती)। तिष्टिघे।

२०। षघ्न हिंसे
२०। सघ्न हिंसे } (षघ—स्वा॰ प॰) (सघ—स्वा॰प॰) शेषो दम्भादिः। न—सघ्नोति। असीषघत्, असीसघत्।

## घान्तास्तु विंशतिः।

—०—

## चान्तवर्गः ।

### अर्चंक् पूजे अर्च्चं चाचि चाचि अच् ञु गतेऽञ्चु च । म्लिष्टोक्तौ चाञ्च क व्यक्तौ वुचि र्य्यं समवायने ॥

१। अर्चंक् पूजे। (अर्च्च—चु० प०) क—अर्च्चयति। गोवर्द्धनस्त्विम-मात्मनेपदिनं मत्वा "विभ्राजसे मकरकेतनमर्च्चयन्ती" इत्यादि स्खलितमित्याह।

१। अर्च्चं च। (अर्च्च—भ्वा० उ०) ञ—अर्च्चति अर्च्चते। चकारात् पूजे। प्राणर्च्चुरर्च्चा जगदर्च्चनीयमिति भट्टी।२।२०। भक्त्यार्च्चयति यो विप्रान् गुरून् देवांस्तथार्च्चति। अर्च्चन्ते चरणौ यस्य मौलिरत्नांशुभिर्नृपा इत्युभयत्र हलायुधः।११६।

२। अचि च। (अञ्च—भ्वा० प०) इ—अञ्च्यते। चकारात् पूजे। अञ्चु गतिपूजनयोरिति पूजार्थो यः स एवायम्। इदित्पाठ पूजाया न लोपा-भावार्थः। उदनुबन्धाभावश्च चुधवसपूजार्थाञ्चेत्यादिना क्वाप्रत्ययस्य निष्ठायाश्च नित्येमविधानात्।

२। अचि ञ् गते } (अञ्च—भ्वा० उ०) (अच्—भ्वा० उ०) इ—
२। अच् ञु गते } अञ्च्यते। ञ—अञ्चति अञ्चते। ञ—अचति अचते। उ—अचित्वा अक्त्वा। न्यञ्चते प्रत्यह मोहो यस्मान्न्यञ्चन्ति चारय इति हलायुधः।१२३।

३। अञ्चु च म्लिष्टोक्तौ च। (अञ्च—भ्वा० प०) अञ्चति प्रकटम् उ—अञ्चित्वा अक्त्वा। अञ्चु चेति चकारात् पूर्वौ च म्लिष्टोक्तौ। म्लिष्टोक्तौ चेति चकारादञ्चु गते च। म्लिष्टोक्तिरव्यक्तशब्दः।

३। अञ्च क व्यक्तौ। (अञ्च—चु० प०) व्यक्तिरिह विशेषण विशिष्टी-करणम् क—अञ्चयति बुद्धिं सुधीः विशिनष्टि इत्यर्थः। अञ्चयन्ति सदा यञ्च गुणाः सर्वातिशायिन इति हलायुध.।१२३।

४। उचिर्यं समवायने। (उच—दि० प०) ऋस्तादि। इर्—औचत् औचीत्। अय पुषादिरिति दुर्ग.। समवायन मेलनम् उच्यति केश स्नानात्।

### ऋच् श नुत्यां कुच ञोधपर्कौटिल्यलेखने।

५। ऋच् श नुत्याम्। (ऋच—तुदा० प०) श—ऋचति। आनर्च्च।

६। कुच ञ् रोधपर्ककौटिल्यलेखने। (कुच—भ्वा० प०) ञ—कोचः

कुच'। रोध क्रियानिरोधः जड़ीभाव इत्यर्थः। अस्मिन्नर्थ एव प्रायो वर्त्तते। यस्मिन् समुदिते राज्ञि जनः सङ्कोचति चितौ इति हलायुधः। १४०। पर्कः सम्पर्कः।

कुच् तारशब्दे कुच शि सङ्कोचे कच् रवे कचि।
कच् ङ वन्धत्विषोः क्रुञ्च गत्यां कुञ्च च वक्रणे।
तीक्ष्ण्ये खच ग् भूतिपूत्योरुत्पत्तौ ग्लुञ्च् द्गतौ॥

६। कुच तारशब्दे। (कुच—भ्वा० प०) तारशब्द उच्चैःशब्द'। कोचति ढक्का। भट्टमल्लस्तु तारे शब्दे च कोचतीति नानार्थे पठति। तन्मते तारचि-क्कणता। कोचति काञ्चीं वणिक् चिक्कणयतीत्यर्थः।

६। कुच शि सङ्कोचे। (कुच—तु० प०) प्रायः सपूर्वस्य प्रयोगः। शि—सङ्कुचति। अकुचीत्। चुकोच।

७। कच रवे। (कच—भ्वा० प०) कचति। रवः शब्दः।

७। कचि ङ बन्धत्विषोः } (कञ्च—भ्वा० आ०) (कच—भ्वा० आ०)
७। कच् ङ बन्धत्विषोः } इ—कञ्चते। ङ—कञ्चते। कचते। त्विट् दीप्ति'। त्वक्त्राचकचे वरमिति भट्टी १४।८४। वरं श्रेष्ठं त्वक्त्रं कवचं आचकचे बबन्ध इत्यर्थः।

८। क्रुञ्च गत्याम्। (क्रुञ्च—भ्वा० प०) रेफयुक्तपञ्चमस्वरी। क्रुञ्चति। क्रञ्चधातौ क्विपि क्रुङ् वक., क्रुङ् क्रौञ्च इत्यमरः।

९। कुञ्च च वक्रणे तीक्ष्ण्ये। (कुञ्च—भ्वा० प०) पञ्चमस्वरी। वक्रण-मिति वक्र इवाचरतीति क्वौ, वक्रं करोतीति णौ च रूपम्। तेन कुटिलीभावः कुटिलीकरणञ्च। तीक्ष्ण्यमल्पीभावोऽल्पीकरणञ्च। कुञ्चति खल कुटिलोऽल्पोवा स्यादित्यर्थः। कुञ्चति लतां वायुः कुटिलामल्पां वा करोतीत्यर्थः। चकारात् क्रुञ्च च क्रुञ्चधातोरपि वक्रणतीक्ष्ण्ये द्वावर्थावित्यर्थः।

१०। खचग् भूतिपूत्योरुत्पत्तौ। (खच—क्र्या० प०) भूतिः सम्पत्तिः, पूतिः पवित्रता तयोरुत्पत्तिः प्रादुर्भावः। भूत्युत्पत्तौ पूत्युत्पत्तौ चेत्यर्थः। ग—खच्नाति राजा समृद्धः स्यादित्यर्थः। शेषार्थः कातन्त्राद्यसम्मत'।

११। ग्लुञ्चु द्गतौ। (ग्लुञ्च—भ्वा० प०) अन्तःस्थलतीययुक्तपञ्चमस्वरी। उ—ग्लुञ्चित्वा ग्लुक्त्वा। इर्—अग्लुचत् अग्लुञ्चीत्।

**ग्रुच ग्लुचिर चौर्य्ये च चञ्चुती चर्च्च केङ्समः।**

१२। ग्रुचिर चौर्य्ये च } (ग्रुच—भ्वा० प०) (ग्लुच—भ्वा० प०)
१३। ग्लुचिर चौर्य्ये च } द्वौ क्रमाद्रेफान्तःस्थतृतीययुक्तपञ्चमस्वरिणौ।
इर्—अग्रुचत् अग्रोचीत्। अग्लुचत् अग्लोचीत्। उ—ग्रोचित्वा ग्रुक्त्वा। ग्लोचित्वा ग्लुक्त्वा। चकारात् गतौ च।

१४। चञ्चुती। (चञ्च—भ्वा० प०) उ—चञ्चित्वा चक्त्वा। इति गतिः। चञ्चद्भुजभ्रमितचण्डगदाभिघातसंचूर्णितोरुयुगलस्य सुयोधनस्येति वेणीसंहारम्।

१५। चर्च्च केङ्सम। (चर्च्च—चु० प०) इङ्समः अध्ययने चर्च्च-धातुः अधीङ्ल अध्ययने इति गणपठितस्य इङ्धातोः समानार्थक इत्यर्थः।

**चर्च्च जर्च्च झर्च्च युक्तौ भर्त्से तनचु ध सङ्कुचि।**

१५। चर्च्च युक्तौ भर्त्से } (चर्च्च—तु०प०) (जर्च्च—तु० प०) (झर्च्च—
१६। जर्च्च युक्तौ भर्त्से } तु० प०) त्रयो रेफोपधाः। श—चर्च्चती
१७। झर्च्च युक्तौ भर्त्से } चर्च्चन्ती। जर्च्चती जर्च्चन्ती। झर्च्चती झर्च्चन्ती। गुणस्थानरहितानां तुदादिपाठफलन्तु अत्रन्तानामादीपोरिति नुणौ विभाषा, वेदेषूच्चारणभेदश्च। भर्त्सस्तर्ज्जनम्।

१८। तनचु ध सङ्कुचि। (तनच—रुधा० प०) उ—तञ्चित्वा तक्त्वा। ध—तनच्मि व्योम विस्तृतम्।

**तनच् त्वञ्चुती त्वच् श वृत्यां पिच्चक् छेदे डु औष्पच।**
**पाके पचौ ङ पचि ङ व्यक्तीकारे पचिक् ततौ॥**

१८। तनचु इतौ } (तनच—भ्वा० प०) (त्वनच—भ्वा० प०) अग्रो
१९। त्वनचु इतौ } वकारयुक्तः। उ—तञ्चित्वा तक्त्वा। त्वञ्चित्वा त्वक्त्वा। इतिर्गतिः।

२०। त्वच् श वृत्याम्। (त्वच—तु० प०) वकारयुक्तो दन्त्यवर्गाद्यादिः। श—त्वचन्ती त्वचती। वृतिः संवरणम्। त्वचति कवचेन वीरः। त्वचति आवृणोतीति त्वक्, त्वचेः क्विप्।

२१। पिच्चक् छेदे। (पिच्च—चु० प०) चद्वयान्तः। क—पिच्चयति। नागसीसकयोगेष्टवप्राणि त्रपुपिच्चटमित्यमरः। पिच्चते कुट्यते इति शकटादिभ्योऽटन्निति क्षीरस्वामी।

२२। डु औष् पच पाके। (पच—भ्वा० उ०) पाको विक्लित्त्यनुकूलव्यापारः। डु—पक्त्रिमम्। ञ—पचति पचते तण्डुलानोदनं लोकः। औ—पक्ता। ष—पचा।

२२। पची ङ व्यक्तीकारे। } (पच—भ्वा० आ०) (पञ्च—भ्वा० आ०)
२२। पचि ङ व्यक्तीकारे। } ई—पक्ता। ङ—पचते। इ—पञ्चयते। ङ—पञ्चते स्वगुणं भिक्षुकः। यो वाग्मी वादिनां मध्ये वाचमुच्चैः प्रपञ्चते इति हलायुधः।१४७।

२ । पचिक् ततौ। (पञ्च—चु० प०) ततिर्विस्तारः। इ, क—पञ्चयति धीरो ग्रन्थार्थम्। प्रपञ्चयन्ति यत्कीर्त्तिं दिङ्मुखेषु महाजना इति हलायुधः।१४७।

## पृच् कि संयमने पृच् धी च सम्पर्के पृचील् ङ च।

२३। पृच् कि संयमने। (पृच—चु० भ्वा० प०) संयमनं बन्धनम्। कि—पर्चयति पर्चति दुष्टं राजा।

२३। पृच् धी च सम्पर्के। (पृच—रुधा० प०) सम्पर्क इह सम्पृक्तीकरणं सम्पृक्तीभावश्च। ध—पृणक्ति धनुषा शरम्। सम्पृणक्ति न पापिभिरिति हलायुधः।२८। ई—पृक्तः। पपर्च। वागर्थाविव सम्पृक्ताविति रघुः। चकारात् पृच कि च (चौरादिकपृच्धातुरपि सम्पर्कार्थक इत्यर्थः।) तथाच—सम्पर्चयति न क्षुद्रैर्न सम्पर्चति वञ्चकैरिति हलायुधः।२८।

२३। पृचील् ङ च। (पृच—अदा० आ०) ई—पृक्तः। ल, ङ—पृक्ते। परीपृच्यते। चकारात् सम्पर्के। सचेह सम्पृक्तीभावः। सम्पृक्ते नाभिशस्तैर्य इति हलायुधः।२८। सम्पृक्ते मधुना चूर्णं भिषगिति तु अन्तर्भूतण्यर्थत्वादिति चतुर्भुज.।

मचि ङ् कल्काय धृत्युच्चाभाःसु मच् ङ च कल्कने।
दम्भे शाठ्ये मुच् मुचिङ् च मुच्क मोक्षे मुच् लृश्पञौ।
मोक्षे म्रुच् म्लुचु ङ्गत्यां म्रुञ्च म्लुञ्च मञ्च मुञ्च च॥

२४। मचिङ्नुच्छ्रायघृत्यर्च्चाभासु। (मञ्च—भ्वा० आ०) इ—मञ्चते। ङ—मञ्चते। उच्छ्राय उच्चीभावः। घृत्यर्थाम्, भादीप्तिः। शयनं मञ्च-पर्यङ्केत्यमरः।

२४। मच् ङ च कल्कने दम्भे शाठ्ये। (मच—भ्वा० आ०) कल्कन-मिति कल्कं करोतीति णौ रूप चूर्णीकरणमित्यर्थः। ङ—मचते तण्डुलं शिला। चकारात् मचि ङ च (मचिधातुरपि कल्कनदम्भशाठ्येष्वर्थेषु वर्त्तते इत्यर्थः।)

२५। मुच ङ च। } (मुच—भ्वा० आ०) (मुञ्च—भ्वा० आ०) द्वौ
२५। मुचि ङ च। } पञ्चमस्वरिणौ। ङ—मोचते। इ—मुञ्चते। ङ—मुञ्चते। पुनः पाठात् पूर्वो नेदित्। यथा—'एक एवेत् पाठबलाद्बाध्यो-ऽनेकेषु धातुषु। बाधे लाघवमिष्टं हि स प्राक्प्रसक्तित इति वोपदेवः। अस्यार्थः—अनेकेषु द्वयोर्बहुषु धातुषु वा, पाठबलात्, एकेन निर्वाहेऽपि सजा-तीयस्य पुनः पाठबलात्, एक एव इत् बाध्य सम्बन्धरहितः कार्य्यः। हि यस्मात् बाधे सम्बन्धाभावे लाघवमिष्टम्। सर्वधातुना सम्बन्धे एकेनैवेष्टसिद्धौ पृथक्पाठो गौरवमिति सम्बन्धाभावे लाघवम्। स बाधः प्रति प्राक्प्रसक्तितः (प्राक्प्रसक्तिर्यस्य स तं प्रति भवतीति शेषः) तेन तस्यानुबन्धस्य पूर्वप्रसक्तेन धातुना सम्बन्धो नास्तीति। यत्र तु एकेन (अनुबन्धेन) निर्वाहो न स्यात् तत्र एकोऽपि (अनुबन्धः) न बाध्यते इति भावः। तेन भ्रमिर्, भभ्रम्य, भ्रमुजण चाले इत्यादौ सर्वेऽनुबन्धाः पूर्वस्य स्युरेव। चकारात् कल्कन दम्भशाठ्येषु।

२५। मुच क मोक्षे। (मुच—चु० प०)—मोचयति। मोक्षस्त्यागः। यश्च प्रमोचयति पापचयञ्च काये इति हलायुधः।

२५। मुच् ल्ट शपजौ मोक्षे। (मुच—तुदा० उ०) मोक्षस्त्यागः। ल्ट—अमुचत्। श, प, ज—मुञ्चति मुञ्चते धनं दाता। औ—मोक्ता। बन्धन-रहितीभावेऽकर्म्मकोऽयम्। आलानात् मुक्तो गजः, अत्र कर्त्तरि क्तः। एवं पापात् मुक्त इत्यादौ पापबन्धनात् मुक्त इत्यर्थः।

२६। म्रुचु इर् गत्याम्। } (म्रुच—भ्वा० प०) (म्लुच—भ्वा० प०)
२७। म्लुचु इर् गत्याम्। } द्वौ क्रमात् द्वितीयतृतीययुक्तौ। उ—म्रोचित्वा म्रुक्त्वा, म्लोचित्वा म्लुक्त्वा। इर्—अम्रुचत् अम्रोचीत्। अम्लुचत् अम्लोचीत्।

२८। म्रुञ्च च
२९। म्लुञ्च च
३०। मञ्च च
३१। मुञ्च च
(म्रुञ्च—भ्वा० प०) (म्लुञ्च—भ्वा० प०) (मञ्च—भ्वा० प०) (मुञ्च—भ्वा० प०) द्वावाद्यौ क्रमाद्रेफान्तःस्थतृतीययुक्तादी। तृतीय आद्यस्वरौ। अन्ये पञ्चमस्वरिण। सर्वे ओष्ठ्यवर्गशेषाद्या नोपधाः। उ—म्रुञ्चित्वा म्रुक्त्वा। म्लुञ्चित्वा म्लुक्त्वा। मञ्चित्वा मक्त्वा। मुञ्चित्वा मुक्त्वा। चकारात् गत्याम्। कातन्त्रादौ द्वितीयो न दृश्यते। रेफयुक्ताद्यस्वरौ म्रुञ्च इत्यधिकोऽपि दृश्यते।

## टु डु याचृञ् याचने रिच् कि सम्पर्कवियोगयोः।

३२। टुडु याचृञ् याचने। (याच—भ्वा० उ०) याचनमात्मने दानार्थं प्रेरणम्। टु—याचथुः। डु—याचित्रिमम्। ऋ—अययाचत्। ञ—याचति याचते नृपं भूमिं विप्रः। ग्रहणार्थे प्रेरणेऽपि—याचति वित्तं गुरवे शिष्यः।

३३। रिच् कि सम्पर्कवियोगयोः। (रिच—चु० भ्वा० प०) कि—रेचयति रेचति। रिङ्क्ते रिपुर्यदा मार्गो धनैर्मन्त्रैश्च रेचति। रेचयन्ति च यन्नारीनयनान्यश्रुवारिभिरिति हलायुधः।९८।

## रिचिर्ञधौ विरेके रुच् ङ ऌ प्रीतिप्रकाशयोः।

३३। रिचिर्ञधौ विरेके। (रिच—रुधा० उ०) विरेकः पौनःपुन्येन पुरीषोत्सर्ग इति चतुर्भुजः। इर—अरिचत् अरैक्षीत्। ञ, ध—रिणक्ति रिङ्क्ते अतिसारकी। औ—रेक्ता। हलायुधेन प्राक्दर्शितम्।

३४। रुच् ङ ऌ प्रीतिप्रकाशयोः। (रुच्—भ्वा० आ०) प्रीतिरिहानुरागविशेष। यत्र यस्यानुरागस्तस्य सम्प्रदानत्वम्। ङ—रोचतेऽन्नं बुभुक्षवे। ऌ—अरुचत्। इयमिष्टगुणाय रोचता रुचिरार्था भवतेऽपि भारतीति भारवि।२१५।

## लोचृक भासि लोचृ ङोक्ते लुञ्छापनयने वचौ।
## वाचि वच् कच सन्देशे वञ्चौ वाचि विचिर्लिंधौञ्।
## पृथक्त्वे व्यचशि व्याजे सञ्च षञ्च वञ्च वञ्चने॥

३५। लोचृक् भासि। (लोच—चु० प०) ऋ—अलुलोचत्। क—

लोचयति। भासि दीप्तौ। तथाच चुरादौ (कातन्त्रे इति शेषः) पट पुट लुट तुजि पिजि लजि भजि लघि त्रसि पिसि कुसि दशि घट घटि वृंहि वर्ह्व वल्ह गुप धूप विच्छ चीव पुथ लोक्र लोचृ णद कुप तर्क वृधु वृतु भासार्था इति प्राञ्चः। भासार्था दीप्त्यर्था इति धातुप्रदीपः। स्वमतेऽपि तर्ककदीप्ताविल्यादिषु स्फुट-निर्देशादूनत्रिंशदेते दीप्त्यर्था एव। किन्तु पुरुषोत्तमशरणदेवौ भाषार्था इति मूर्द्धन्यषकारं मत्वा एतान् वचनार्थानाहतुः।

३५। लोचृ डीचे। (लोच—भ्वा॰ आ॰) ईक्षः पर्य्यालोचन प्रणिधान-मिति यावत्। ऋ—अलुलोचत्। ङ—लोचते कार्य्यं सुधीः। आलोचते सदा नीतिमिति हलायुधः।२४८।

३६। लुञ्चापनयने। (लुञ्च—भ्वा॰ प॰) अपनयनं दूरीकरणम्। सोऽलु-ञ्चीत् कर्णनासिकमिति भट्टिः।१५।५७।

३७। वचौ वाचि। (वच—भ्वा॰ प॰) औ—वक्ता। अयं सेमित्येके। वचिता। न वचत्यनृतं वच इति हलायुधः।८४।

३७। वचक् च सन्देशे। (वच—चु॰ प॰) सन्देशो वचनविशेषः। वाचयत्यखिलां लिपिमिति हलायुध।८४। चकारात् वचौच सन्देशार्थक इत्यर्थः।

३७। वच्लौ वाचि। (वच—अदा॰ प॰) ल—वक्ति। औ वक्ता। नान्य-न्त्वोर्वच' प्रयोग इति जौमराः। अस्मादन्तिविभक्तिर्न प्रयुज्यते इत्यालङ्कारिकाः।

३८। विचिर्लिं धौञ् पृथक्त्वे। (विच—जुहो॰ रुधा॰ उ॰) इर्—अविचत् अवैक्षीत्। लि, ञ—वेवेक्ति वेविक्ते मूर्खात् पण्डितः पृथक् स्यादि-त्यर्थः। विज इति जान्तो यः स एव चान्तोऽपि पठ्यते कस्यचिदनुरोधात्। तेन निजां खेरेणुरित्यस्य वृत्तौ विजग्रहणेनैवास्य ग्रहणात् खेर्गुण। ध, ञ—विनक्ति विङ्क्ते। विविनक्मि दिवः सुरानिति भट्टि।६।३६। पृथक्करो-मीत्यर्थः। औ—वेक्ता।

३९। व्यच शि व्याजे सम्बन्धे। (व्यच—तुदा॰ प॰) व्याजश्छल'। शि—विचति सन्तं खलश्छलयतीत्यर्थः। अविचीत् (अत्र व्यचो जिरञ्जिदसीति जिः) विव्याच।

४०। कङ वञ्च वञ्चने। (वञ्च—चु॰ आ॰) वञ्चनं विसवादः। मिथ्या-कथनमिति वररुचि'। क, ङ—वञ्चयते साधुं नीचः। यो न वञ्चयते किञ्चित् सदा सत्यपरायण इति हलायुध।१७९।

## वञ्चु गत्यां वर्च्चङ् दीप्तौ व्रश्चू श् छेदे व्रचीध् व्रतौ।

४०। वञ्चु गत्याम्। (वञ्च—भ्वा० प०) उ—वञ्चित्वा वक्त्वा।

४१। वर्च्चङ् दीप्तौ। (वर्च्च—भ्वा० आ०) ङ—वर्च्चते। वर्च्चस्तेजः।

४२। व्रश्चू श् छेदे। (व्रश्च—तुदा० प०) दन्त्यसोपधं, चयोगात्तालव्यः। तेन क्विपि शब्राजेति षङि निमित्ताभावे नैमित्तिकस्याप्यभाव इति न्याया-त्तालव्यस्य दन्त्यत्वे सयोगादेः सस्य लोपे सुवृट् इति। तथाच—"न कारजा-वनुस्वारपञ्चमौ झलि धातुषु। सकारजः शकारश्च षाट्टवर्गस्तवर्गजः॥" इति वोपदेवः। अस्यार्थं—धातुषु मध्ये झलि झसि परे अनुस्वारपञ्चमौ नकारजौ ज्ञेयौ, तालव्यशकारश्च दन्त्यसकारजातः, मूर्द्धन्यषकारात् परष्टवर्गोऽपि तवर्ग-जातो ज्ञेय इति। एवं जिघ्राख्याने इत्यादौनाश्च थकारादिप्रकृतित्वे तस्थौ इत्यादि बोध्यम्। ऊ—अव्रश्चीत् अव्राक्षीत्। श—वृश्चति। (वृश्च्यते छिद्यते इति व्रश्चेः सकि वृच इत्यमरटीकायाम्)। ववृश्चु राजघूर्णुश्चेति भट्टिः।१४।७७। हरिराक्षसाः परस्परमिति शेषः।

४३। व्रचीध् व्रतौ। (व्रच—रुधा० प०) ई—वृक्तः। ध—वृणक्ति। वरीवृच्यते। वर्ज्जनार्थोऽयमित्येके।

## श्वच श्वच शचिङ् गत्यां शचङ् वाचि शुचिर्यञौ।
## शौचे विशरणे क्लेदे शुच् शोके षच् ङ सेचने॥

४४। श्वचङ् गत्याम्। } (श्वच—भ्वा० आ०) (श्वञ्च—भ्वा० आ०)
४५। श्वचिङ् गत्याम्। } (शञ्च—भ्वा० आ०) द्वावादौ वकारयुक्तादौ।
४५। शचिङ् गत्याम्। } पुनः पाठादाद्यो नेदनुबन्धः ङियस्तु सर्वे। एक-एवेत् पाठबलादिति नियमात्। किन्त्वत्र मध्यमोऽपीदनुबन्धो भ्रान्तैः पठ्यते तद्वेयम्, अन्यथा आम्नेड़ितानुबन्धत्वादाद्यस्य ङानुबन्धानुपपत्तेः। ङ—श्वचते। इ—श्वञ्चते। शञ्चते। ङ—श्वञ्चते। शञ्चते।

४५। शचङ् वाचि। (शच—भ्वा० आ०) ङ—शचते। पुलोमजा शचीन्द्राणीत्यत्र शच व्यक्तायां वाचि अच्, गौरादित्वादीवित्यमरटीकायाम्।

४६। शुचिर्यञौ शौचे विशरणे क्लेदे। (शुच—दिवा० उ०) शौचं

शुद्धिः। विशरणं भेदः। क्लेद आर्द्रभावः। इर् अशुचत् अशोचीत्। य, ञ—शुच्यति शुच्यते लोकः स्नानात्। शुच्यति गात्रं वाणः। शुच्यति वस्त्रमम्भसा। ई—शुक्तः। शुचिर् पूतीभावे इति प्राञ्च.। रमानाथस्तु एतदनुरोधादेतानर्थान् व्याख्याति।

४६। शुच् शोके। ( शुच—भ्वा० प० ) तालव्यादि। शोचति। शोकः पुत्रादेरदर्शनाद् दुःखानुभवः। किं शोचते ह्यभ्युदये वतास्मानिति भट्टिः।३।१२। प्रियतमा मा शोचते इति महानाटके गणकृता नित्यत्वादात्मनेपदम्।

४७। षच् ङ सेचने। ( षच—भ्वा० आ० ) मूर्द्धन्यादि। ङ—सचते जलं मेघः।

षच् सम्बन्धे षश्च गतौ षिच् पशौ ञ् क्षरणे ष्टुच।
ङ प्रसादे चकारान्ताः पञ्चाशत् समुदीरिताः॥

४७। षच् सम्बन्धे। ( षच्—भ्वा० प० ) सचति सक्तुः।

४८। षश्च गतौ। ( षश्च—भ्वा० प० ) सश्चति।

४९। षिचं पशौ ञ क्षरणे। ( षिच—तुदा० उ० ) प, श, ञ—सिञ्चति सिञ्चते। औ—सेक्ता। सिषिचुरवनिमम्बुवाहा इति भारवि.।

५०। ष्टुच ङ प्रसादे। ( ष्टुच—भ्वा० आ० ) मूर्द्धन्यादिस्तमध्यः। प्रसाद. प्रसन्नीभावः। ङ—स्तोचते जलं शरदि। तोष्टुच्यते। षस्याधोमूर्द्धन्य ण इति केचित् स्तोचते सोष्टुच्यते।

चकारान्ताः पञ्चाशत् समुदीरिताः।

चकारान्ता धातवः पञ्चाशत्संख्यका. कथिताः।

---

## छान्तवर्गः।

आछि आयामेऽथोछि शुञ्छे उछीश् बन्धसमापने।
वर्ज्जनेऽतिक्रमेऽथर्च्छ श् मूर्त्तौ गमनमोहयोः॥

१। आछि आयामे। ( आञ्छ—भ्वा० प० ) इत्यादौ (गणपाठे छकारस्य) द्वित्वाभावः प्रकृतिभ्रमनिरासार्थः। इ—आञ्छ्यते। आयामो दीर्घकरणम्।

आञ्छति कटं शिल्पी। "तावदाञ्छति शत्रूणां नश्यतां धूलिपद्धतिः" इति हलायुध ।२१६।

२। अथोञ्छि शुञ्छे। (उञ्छ—तुदा॰ प॰) एतदाद्यास्त्रयो ऋस्वाद्याः। इ—उञ्छति। श—उञ्छन्ती उञ्छती। उञ्छ उद्धृतशस्यशेषापहरणम्। सुलभं शस्यमुञ्छन्ति यद्देशे व्रतिनो द्विजा इति हलायुधः। उञ्छ. स्फोटनमित्येके।

२। उच्छीश् बन्धसमापने वर्ज्जनेऽतिक्रमे। (उच्छ—तुदा॰ प॰) ई—उष्टः। श—उच्छन्ती उच्छती। चत्वारोऽर्थाः। समापने उच्छति रात्रिः। भरण्यां व्युष्टायामुषसि जनयामास तनयमिति। व्युष्टायां समाप्तायामित्यर्थः।

३। अथ ऋच्छंश् मूर्त्तौ गमनमोहयोः। (ऋच्छ—तुदा॰ प॰) श—ऋच्छन्ती ऋच्छती। मूर्त्तिः कठिनीभावः, मूर्त्तिः काठिन्यकाययोरित्यमरात्। ऋच्छति घृतं कठिनं स्यादित्यर्थः। ऋच्छति वृद्धो गच्छति मुह्यति वेत्यर्थः। मोहस्थाने इन्द्रियप्रलयं पठन्ति प्राञ्चः। ऋच्छति वृद्धस्येन्द्रियं प्रलीयते इत्यर्थ इति रमानाथः।

जर्छं झर्छंश भर्त्सोक्त्योः प्रच्छीश् ज्ञीप्से अथो पिछ।
मिछश् बाधे म्लेछ्कि देश्योक्तौ मुर्च्छा मोह उच्छ्रये॥

४। जर्छंश भर्त्सोक्त्योः। } (जर्छ—तुदा॰ प॰) (झर्छ—तुदा॰ प॰)
५। झर्छंश भर्त्सोक्त्योः। } श—जर्च्छन्ती जर्च्छती। झर्च्छन्ती झर्च्छती। भर्त्सस्तर्ज्जनम्।

६। प्रच्छीश ज्ञीप्से। (प्रछ—तुदा॰ प॰) ज्ञीप्सो ज्ञातुमिच्छा, ज्ञपकम इत्यस्यैव ज्ञानपक्षे निष्पादनात्। औ—अप्राक्षीत्। श—पृच्छति वार्त्तां गुरुं शिष्य.। पप्रच्छ कुशलं राज्ये राज्याश्रममुनि मुनिरिति रघौ।१।५८।

७। अथो पिछ श बाधे। } (पिछ—तुदा॰ प॰) (मिछ—तुदा॰ प॰)
८। मिछ श बाधे। } श—पिच्छन्ती पिच्छती। मिच्छन्ती मिच्छती। बाधो विहतिः।

९। म्लेछ कि देश्योक्तौ। (म्लेछ—चु॰ भ्वा॰ प॰) अन्तःस्थद्वितीय-युक्तादिः। देश्या ग्राम्या उक्तिर्देश्योक्तिरसंस्कृतकथनमित्यर्थः। कि—म्लेच्छयति म्लेच्छति मूढः। अन्तर्वेद्यामसौ विद्वान म्लेच्छति धृतव्रतः। न म्लेच्छ-

यति सर्वज्ञो विवादे वादिभिः सहेति हलायुधः ।१८७। अनेकार्थत्वादव्यक्त-शब्देऽपि। तथाच अथ म्लिष्टमविस्पष्टमित्यमरः। मृच्छ व्यक्तायां वाचीति प्राञ्चः। तत्र रमानाथस्तु "मृच्छति पटुर्व्यक्तं वदतीत्यर्थः। अव्यक्तायामिति पाठे कुत्सितायां वाचीत्यर्थं। "तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट्प्रकीर्त्तिताः॥" इति भाष्यवचनेन नञोऽप्राशस्त्यार्थत्वादित्यप्याह।

१०। मुर्च्छा मोह उच्छ्राये। (मुर्च्छ—भ्वा० प०) पवर्गशेषादिर्क्षस्त्री। तेन क्विपि राच्छ्वोर्लोप इति छलोपे मू' मुरौ मुरः। क्त—मूर्च्छितं मूर्त्तं तेन। प्रमूर्च्छितः प्रमूर्त्तः स' (भावादिढे वा) मोहो ज्ञानरहितीभावः। उच्छ्रायो वृद्धिः। मूर्च्छति रोग.। मुमूर्च्छ सख्यं रामस्य समानव्यसने हराविति रघुः।

## युछ् प्रमादे लाछि लछ लक्षणे विछक त्विषि।

११। युछ् प्रमादे। (युछ—भ्वा० प०) अन्तःस्थप्रथमादिः पञ्चमस्वरी। प्रमादोऽनवधानता। युच्छति पापे साधु'। ओष्ठ्यवर्गाद्यादिरिति रमानाथः। (पुछ इत्यर्थ.) पचादित्वादनि पुच्छो लाङ्गूलम्। ओष्ठ्यवर्गशेषादिरिति त्रिलोचनः। (मुछ इत्यर्थः) मुच्छति।

१२। लाछि लक्षणे। } (लाञ्छ—भ्वा० प०) (लछ—भ्वा० प०) पूर्वौ
१३। लछ लक्षणे। } द्वितीयस्वरौ। ङ—लाञ्छते। लच्छति वृषं चक्रेण गोपः (चिह्नयुक्तं करोतीत्यर्थः) कलङ्काङ्कौ लाञ्छनं च इत्यमर'।

१४। विछक् त्विषि। (विछ—चु०प०) क—विच्छयति। त्विषि दीप्तौ।

## विछश् गतौ वाछि कामे खुर्छ स्फुर्छातु विस्मृतौ।

१४। विछश् गतौ। (विछ—तुदा० प०) विच्छायति विच्छायते। आयान्तत्वादुभयपदमिति वोपदेव.। (सन. पमे धौर्वात्वायात्) पक्षे श—विच्छति, विच्छन्तौ, विच्छतौ। "यत्र विच्छति तद्दूरतो यत्र विच्छायति स्वयम्। विच्छायते ततोऽन्यत्र नृपतीनां सुखाश्रय.॥" इति हलायुधः ।१२०।

१५। वाछि कामे। (वाञ्छ—भ्वा० प०) ङ—वाञ्छते धनं जनेन।

१६। खुर्छा विस्मृतौ। } (खुर्छ—भ्वा० प०) (स्फुर्छ—भ्वा० प०)
१७। स्फुर्छा विस्मृतौ। } द्वौ दन्त्यादी, क्रस्विनौ, क्रमेण वकारौष्ठ्यवर्ग-

द्वितीययुक्तो च। क्विपि खूः खुरौ खुरः। स्फूः स्फुरौ स्फुरः। आ—खूर्च्छितं खूर्णं तेन। प्रखूर्च्छितः प्रखूर्णः स। स्फूर्च्छितं स्फूर्णं तेन। प्रस्फूर्च्छितः प्रस्फूर्णः सः। (भावादिढे वा) खूर्च्छति स्फूर्च्छति कथां मद्यपः।

## हुर्च्छा कौटिल्यके म्लीच्छ लज्जे छान्तोनविंशतिः।

१८। हुर्च्छा कौटिल्यके। (हुर्च्छ—भ्वा० प०) ह्रस्वी। क्विपि हूः हुरौ हुरः। आ—हूर्च्छितं हूर्णं तेन। प्रहूर्च्छितः प्रहूर्णः सः। हूर्च्छति खलः कुटिलः स्यादित्यर्थः। हूर्च्छति चौरः अपसरतीत्यर्थ इति धातुप्रदीपः।

१९। म्लीच्छ लज्जे। (म्लीच्छ—भ्वा० प०) रेफयुक्तादिश्चतुर्थस्वरी। म्लीच्छति वधूः।

### छान्तोनविंशतिः।

संख्यासङ्गतिस्तु पूर्ववदिति।

—०—

## जान्तवर्गः।

अज क्षेपे गतेऽजिक् तु भास्यर्ज्ज त्वर्ज्जनेऽर्ज्जक।
संस्कारेऽञ्जू ध ञि व्यक्तिगतिम्रक्षणे ईजि तु॥
ईज् ङ कुत्से गतावुब्जशार्ज्ज वेऽथोर्ज्जक् जीवने।
बलेऽथर्ज्ज ङ् गतिस्थैर्योर्ज्जनार्ज्जन ऋजिङ् भृजि॥

१। अज क्षेपे गते। (अज—भ्वा० प०) अजति। क्षेपे व्यजनम्। गतौ वातमज।

१। अजिक् तु भासि। (अञ्ज—चु० प०) इ, क—अञ्जयति। भासि दीप्तौ। व्यञ्जयन्ति च गोदानं यद्दर्भे याज्ञिका द्विजा इति हलायुधः।२२८।

२। अर्ज्ज तु अर्ज्जने। (अर्ज्ज—भ्वा० प०) अर्ज्जनमलब्धस्य लाभः। यशश्चार्ज्जति यः स्थिरमिति हलायुधः।१००।

२। अर्ज्जक संस्कारे। (अर्ज्ज—चु० प०) क—अर्ज्जयति किमपि लोकः, संस्कारोतीत्यर्थः। प्रति यत्ने इति प्राञ्चः। अर्ज्जयति धनं परिजन इति रमानाथः। सर्वोऽप्यर्ज्जयति द्रव्यमात्मनः प्रीतिहेतवे इति हलायुधः ।१००।

३। अञ्जू ध जि व्यक्तिगतिम्रक्षणे। (अञ्ज—रुधा० प०) ऊ—अञ्जिष्यति अङ्क्ष्यति। द—अनक्ति। जि—अक्तोऽस्ति। व्यक्तिः स्फुटीकरणम्। शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यतामिति माघः ।१।२६। अभ्यनक्ति तैलेन गात्रं जनः।

४। ईजि तु ङ कुत्से गतौ। (ईञ्ज—भ्वा० आ०) (ईज—भ्वा० आ०)
४। ईज ङ कुत्से गतौ। द्वौ दीर्घादी। इ—ईञ्जते। ङ—ईञ्जते, ईजते। कुत्सः केश्चिन्न मन्यते।

५। उब्ज आर्ज्जवे। (उब्ज—तुदा० प०) ऋस्वादिरोष्ठ्यवकारोपधः। तेन "व्यनचतयि" इति दीर्घो न स्यात्। "स्यादौ नवद्र" इति उब्जिजिषति। ऊर्णूर्जोर्दीर्घपाठसामर्थ्यात् स्वरादेर्न दीर्घ इति केचित्। दन्त्यवकारवत्त्वात् न्यूजतीत्यत्र दीर्घ इत्यप्येके। श—उब्जन्ती उब्जती। आर्ज्जवमवक्रीभावः। उब्जति साधुरवक्रः स्यादित्यर्थः।

६। अथोर्ज्जक् जीवने बले। (ऊर्ज्ज—चु० प०) दीर्घादिः। क—ऊर्ज्जयति जनो जीवति बली स्याद्दित्यर्थः। ऊर्ज्जस्वल स्यादूर्ज्जस्वी य ऊर्ज्जातिशयान्वित इत्यमरः। ऊर्ज्जक् जीवने बले सेमृक्तात् सरोरित्यः पश्चादाप्, उर्ज्जाबलं पराक्रमो वा तदतिशययुक्तस्तत्र द्वे इति तट्टीकाकारः। ऊर्ज्जयन्ति च दानेन सम्मानेन पदातय इति हलायुधः ।२१५।

७। अथर्ज्जङ् गतिस्थैर्य्योर्जनार्जने। (ऋज—भ्वा० आ०) ङ—अर्जते। ऊर्जनं जीवनं बलवत्त्वावस्था। ऋजुः, ऋजेः कुरित्यमरटीकायाम्।

७। ऋजिङ् भृजि। (ऋञ्ज—भ्वा० आ०) ऋस्वादिः। भृजि भर्जने। इ—ऋञ्जते। ङ—ऋञ्जते तण्डुलान् लोकः।

**एजृङ् दीप्तावेजृ कम्पे ओलज्युत्क्षेपणे क्षजिक्।**
**तङ्के क्षजि ध्वजष् मङ्दागत्योः क्षीज् कूज ध्वनिकने ॥**

८। एजृङ् दीप्तौ। (एज—भ्वा० आ०) ऋ—मा भवानेजिजत्। ङ—एजते।

८। एजृ कम्पे। (एज—भ्वा० प०) ऋ—मा भवानेजिजत्। एजति वायुना वृक्षः। एजते राजचिह्नैर्य एजयत्यखिलं जगदित्युभयत्र हलायुधः।२६८।

९। ओलज्युत् क्षेपणे। (ओलञ्ज—भ्वा० प०) अन्तःस्थद्वितीयमध्यः। इ—ओलञ्ज्यते धूलिर्वायुना।

१०। लजिक् तङ्के। (लञ्ज—चु० प०) तङ्को दुःखेन जीवनम्। इ, क—लञ्जयति दीनः।

१०। लजिष् म ङ दागत्योः। } (लञ्ज—भ्वा० आ०) (लज—भ्वा०
१०। लजष् म ङ दागत्योः। } आ०) इ—लञ्ज्यते। ष—लञ्जा। सेमृत्वात् सरोरित्यनेनैवेष्टसिद्धौ षानुबन्धस्त्वरपर्य्यन्तघटादेर्ड इति प्राचीनमतानुवादार्थं। म—अलञ्जि अलाञ्जि लञ्जं लञ्जं लाञ्जं लाञ्जम्। मानुबन्धबलादनुपधाया अपि दीर्घं। स्पमते तु अत्र दीर्घविधिरुपधां नापेक्षते। ङ—लञ्जते। लजते। ष—लजा। म—लजयति। दा दानम्।

११। चीज हिक्कने। } (चीज—भ्वा० प०) (कूज—भ्वा० प०)
१२। कूज हिक्कने। } हिक्कनमव्यक्तशब्दः। सखेदस्यैवाव्यक्तशब्दे चीजेः प्रयोग इति रक्षित। चीजति सखेदो जनः। कूजति कोकिलः।

## कर्ज पीड़े कुज खुजुस्तेये खर्ज व्यथामृजोः।

१३। कर्ज पीडे। (कर्ज—भ्वा० प०) कर्जति (दुष्टं राजा)।

१४। कुजु स्तेये। } (कुज—भ्वा० प०) (खुज—भ्वा० प०) उ—
१५। खुजु स्तेये। } कोजित्वा कुक्त्वा। कुजि अव्यक्तशब्दे इति चान्द्राः। कुञ्जति। कुञ्जः। उ—खोजित्वा खुक्त्वा। स्तेयं चौर्य्यम्।

१६। खर्ज व्यथामृजोः। (खर्ज—भ्वा० प०) खर्जति। मृट् मार्जनम्।

## खज् मन्थे खजि पाङ्गुल्ये गज् मदे गजि च स्वने।

१७। खज् मन्थे। (खज—भ्वा० प०) मन्थो विलोडनम्। खजति जलं मत्स्यः। दर्विः कम्बिः खजाकाचेत्यमरः। खज मन्थे इत्याकच् इति तट्टीकाकारः।

१७। खजि पाङ्गुल्ये। (खञ्ज—भ्वा० प०) इ—खञ्ज्यते। पङ्गुः

खोड़ः, भावप्रधाननिर्द्देशात् पङ्गुत्वमिति यावत्, सोऽस्यास्तीति चूडादित्वाल्ल, पङ्गुलः, तस्य भाव पाङ्गुल्य, खोटनमित्यर्थः। खञ्जति खोडः। भावप्रधान-निर्द्देशो यथा—वमुवर्णे इति कातन्त्रसूत्रम्। उवर्णो वकारत्वं प्राप्नोतीत्यर्थः।

१८। गज मदे। (गज—भ्वा० प०) गजति। (गजः)।

१८। गजि च स्वने (गञ्ज—भ्वा० प०) इ—गञ्जति। चकारात् गज च। गजधातुरपि स्वनार्थः।

## गज गर्जक् च गर्जोर्जा शब्दे गृजि गृजध्वनौ।

१८। गजक् च। } (गज—चु० प०) (गर्ज—चु० प०) क—गाज-

१९। गर्जक् च। } यति। क—गर्जयति। चकारात् स्वने।

१९। गर्जोर्जाशब्दे। (गर्ज—भ्वा० प०) ऊर्जयते ञेरनित्यत्वे सेमन्ता-न्तरोरित्यप्रत्यये ऊर्जा बलं तत्करणकशब्द ऊर्जाशब्द। गर्जति सिंहः।

२०। गृजि ध्वनौ। } (गृञ्ज—भ्वा० प०) (गृज—भ्वा० प०) द्वौ

२०। गृज ध्वनौ। } सप्तमस्वरिणौ। इ—गृञ्जति। गर्जति।

## गुज श्यस्मिन् गुजि गुज कूजने जजि जज् युधि।

२१। गुज श्यस्मिन्। (गुज—तुदा० प०) शि—गुजति, अगुजीत्, जुगोज। अस्मिन् ध्वनौ।

२१। गुजि कूजने। } (गुञ्ज—भ्वा० प०) (गुज—भ्वा०प०) द्वौ पञ्चम-

२१। गुज कूजने। } स्वरिणौ। इ—गुञ्जति। गोजति। कूजन-मव्यक्तशब्दः। गुञ्जति भ्रमरः कुञ्जे।

२२। जजि युधि। } (जञ्ज—भ्वा० प०) (जज—भ्वा० प०) इ—

२२। जज् युधि। } जञ्जति। जजति। युधि योधने।

जर्जश् वाग्भर्त्से योर्गिज्लि इर्जौ पोषे गिजिल् ङ च।
शुञ्जौ तुजिक् भाषद्वार्थे तुजि प्राणे बले तुज।
हिंसे ङु तर्जक् तर्ज भर्त्से त्यजौ हानौ तिजक् शिते॥

२३ । जर्जश् वाग्भर्त्सयोः । (जर्ज—तुदा० प०) रेफोपधः । श— जर्जन्तो जर्जती । भर्त्सं स्तर्जनम् ।

२४ । णिजलि इर्ञौ पोषे । (णिज्—ह्वा० उ०) लि, अ—नेनेक्ति नेनिक्ते । इर—अनिजत् अनैक्षीत् । औ—नेक्ता । यत्पादौ मौलिरत्नांशु-जालैर्नेनेक्ति राजकमिति हलायुधः ।१३०।

२४ । णिजि लङ् च शुद्धौ । (णिञ्ज—अदा० आ०) शुद्धिरिह शुद्धी-करणम् । इ—निञ्जते । ल, ङ—निङ्क्ते । प्रणिङ्क्ते दक्षिणीयानां विप्राणां चरणौ च य इति हलायुधः ।१३०। चकारात् णिजलि इर्ञौ च शुद्धयर्थक इत्यर्थः ।

२५ । तुजिक् भाषहार्थे । (तुञ्ज—चु० प०) पञ्चमस्वरी । इ, क— तुञ्जयति । भा दीप्तिः, षट्टार्थो निकेतनहिंसाबलदानानि ।

२५ । तुजि प्राणे बले । (तुञ्ज—भ्वा० प०) पञ्चमस्वरी । इ— तुञ्जते । प्राणो जीवनम् । हिंसायाञ्चायमिति केचित् ।

२५ । तुज हिंसे । (तुज—भ्वा० प०) तोजति ।

२६ । ङ तर्जक् भर्त्से । } (तर्ज—चु० आ०) (तर्ज—भ्वा० प०) ङ,
२६ । तर्ज भर्त्से । } क—तर्जयते । तर्जति । भर्त्सस्तर्जनम् । ताम-तर्जयदम्बरे इति रघुप्रयोगस्तु तर्जनं तर्जस्तं करोतीति णौ साध्यः ।

२७ । त्यजी हानौ । (त्यज—भ्वा० प०) औ—अत्याक्षीत् । हानिर्वर्ज-नम् । त्यजति दुष्टलोकं सुधीः ।

२८ । तिजक् श्रिते । (तिज—चु० प०) क—तेजयति । श्रितं तीक्ष्णी-करणम् । तेजयन्ति यमाक्रम्य सर्वथा च सतां गिरमिति हलायुध. ।१६। सतां गिरं आक्रम्य उल्लङ्घ्य यं राजान तेजयन्ति तीक्ष्ण कुर्वन्ति जना इति शेषः ।

तिजङ् क्षान्तौ च तञ्च ध सङ्कोचे ध्रजि ध्रज् ध्रजि ।
भ्रज् ध्वजि ध्वज् ध्रिजगता वोनज् ङौ क्रीयि पूजक ।
पूजे पिजिक् भाषहार्थे पिजि लङ् वर्णपूजयोः ॥

२८ । तिजङ् क्षान्तौ च । तिज—भ्वा० आ०) क्षान्तिः सहनम् । ङ—तितिक्षते दुःखं दीनः । चकारात् श्रिते च । तत्र तेजते इति वोपदेवः ।

अत्र तिवादयो न प्रयुज्यन्त इति रमानाथः । तत्तितिञ्चितमिदं मया मुनेरिति भारविः ।१२।६८।

२९ । तञ्चु ध सङ्कोचे । (तञ्ज—रुधा० प० ) ,उ—तञ्चित्वा तक्त्वा । ध—तनज्मि व्योम विस्तृतम् ।

३० । धृजि गतौ । ( धृञ्ज—भ्वा० प० ) ( धृज—भ्वा० प० ) (ध्रञ्ज—भ्वा० प०) (ध्रज—भ्वा० प० ) ( ध्वञ्ज—भ्वा० प० ) ( ध्वज—भ्वा० प० ) ( ध्रिज—भ्वा० प० ) द्वावाद्यौ सप्तमस्वरिणौ । ततो द्वौ रेफयुक्तौ । ततो द्वौ वकारयुक्तौ । शेषो रेफयुक्तस्तृतीयस्वरी । इ—धृञ्जति । धर्जति । इ—ध्रञ्जति । ध्रजति । इ—ध्वञ्जति । ध्वजति । ध्रेजति । केतनं ध्वजमस्त्रियामित्यमरः । ध्वजगतावच् इति, ध्वजयति चिह्नयति ज्ञापयति योधविशेषं, अन्तर्भाविण्यर्थ इति च तट्टीकाकारः ।

३० । धृज गतौ ।

३१ । ध्रजि गतौ ।

३१ । ध्रज गतौ ।

३२ । ध्वजि गतौ ।

३२ । ध्वज गतौ ।

३३ । ध्रिज गतौ ।

३४ । ओ नज् ङौ ह्रियि । ( नज्—भ्वा० आ० ) ओ, ई—नग्नः । ङ—नजते । ह्रियि लज्जायाम् ।

३५ । पूजक् पूजे । (पूज—चु०प०) षष्ठस्वरी । क—पूजयति गुरुं लोकः ।

३६ । पिजिक् भाषट्टार्थे । ( पिञ्ज—चु० प० ) इ, क—पिञ्जयति । भा दीप्ति, षट्टार्थो निकेतनहिंसाबलदानादिः ।

३६ । पिजि लङ् वर्णपूजयोः । ( पिञ्ज—अदा० आ० ) इ—पिञ्जते । ल, ङ—पिङ्क्ते । ( वर्ण. पिङ्गलवर्णीभावः । पिङ्क्ते चक्षुरिति कश्चित् ) ।

## स्यात् पृजिल् ङ च सम्पर्के भज ञौ भागसेवयोः ।

३७ । पृजिल् ङ च सम्पर्के । ( पृञ्ज—अदा० आ० ) सप्तमस्वरी । इ—पृञ्जते । ल, ङ—पृङ्क्ते । चकारात् पिजि लङ् च । एतौ कश्चिन्न मन्यते ।

३८ । भज ञौ भागसेवयोः । ( भज—भ्वा० उ० ) ञ—विभजति विभजते धनं भ्राता । ओ—अभाक्षीत् कृष्णं साधुः ।

## भजक् पाके भजिक् भासि भ्रेजृ ङ् च भ्राज शृङ् टुच ।

३८। भजक् पाके। (भज—चु० प०) क—भाजयति। विश्राणने इति प्राञ्चः। विश्राणनं दानम्। भाजयति भोगं भृत्याय भूपतिः। भाजी पक्वव्यञ्जनविशेषः।

३८। भजिक् भासि। (भञ्ज—चु० प०) इ, क—भञ्जयति। भासि दीप्तौ।

३९। भ्रेजृङ् च। (भ्रेज—भ्वा० आ०) ऋ—अबिभ्रेजत्। ङ—विभ्रेजे। चकारात् भासि।

४०। भ्राज णृङ् टुच। (भ्राज—भ्वा० आ०) रेफयुक्तः। ण—भ्रेजे बभ्राजे। अनुबन्धबलात् संयोगादित्वेऽप्याकारस्याप्येत्वम्। ऋ—अबिभ्रजत् अबभ्राजत्। ङ—भ्राजते। टु—भ्राजथुः। चकारात् भासि।

**भुजोशौ वक्रणे भुज् धौ त्राणे भक्षे भृजी ङ तु।**
**भर्ज्जने भ्रस्ज औश् पाके भञ्जो धौ मोटने मुजि।**
**मुज् मञ्ज् मार्जक् मृजाध्वन्योर्मज्ज् लूष् शुद्धौ मृज् ष्कि तु।**
**भूषि च मस्जो शट्वौ स्यात् स्नाने युजकि संयमे॥**

४१। भुजोशौ वक्रणे। (भुज—तुदा० प०) वक्रणमिति वक्रं करोतीति ञौ रूपम्। ओ—भुग्नः। श—भुजति लतां वायु। औ—भोक्ता।

४१। भुज् धौ त्राणे भक्षे। (भुज—रुधा० प०) ध—भुनक्ति। औ—अभौक्षीत्। त्राणं पालनम्। भक्ष इह्लादनमुपभोगश्च। अस्मात् पालने परस्मैपदमन्यत्रात्मनेपदं, भुजोऽनवने इति ज्ञापकात्। भुनक्ति पृथिवीं राजा पालयतीत्यर्थः। अन्नं भुङ्क्ते जन खादतीत्यर्थः। उपभोगे तु—इह्लो जनो दु खशतानि भुङ्क्ते इति। द्विवं मरुत्वानिव भोक्ष्यते महीमिति रघुः। सुख-मुपभुङ्क्ते, स्त्रियमुपभुङ्क्ते इत्यादि।

४२। भृजी ङ तु भर्जने। (भृज—भ्वा० आ०) भर्जनं पाकविशेष.। ई—भृक्तः। ङ—भर्जते तण्डुलान् जनः। तपसा भर्जते पापमिति हलायुध।८७।

४३। भ्रस्ज औश् पाके। (भ्रस्ज—तुदा० उ०) रेफयुक्तादिर्दन्त्य-सोपधः। क्विपि संयोगादिलोपे भृट्। पाक इह भर्ज्जनम्। ञ, श—

भृज्जति भृज्जते तण्डुलान् लोकः। औ—अभ्राक्षीत्। तेजसारीश्च भृज्जतीति हलायुध'।८७। बभृज्ज निहते तस्मिन् शोको रावणमग्निवदिति भट्टिः।१४।८६।

४४। भन्जो धौ मोटने। (भन्ज—रुधा० प०) ओ—भग्नः। ध—भनक्ति। औ—अभाङ्क्षीत्। मोटनं भञ्जनम्। रामः शम्भुधनुर्बभञ्ज।

४५। मुजिक मृजाध्वन्यो'। (मुञ्ज—चु० प०) (मुज—चु० प०)
४५। मुजक मृजाध्वन्योः। (मन्ज—चु० प०) (मार्ज—चु०प०)
४६। मन्जक मृजाध्वन्योः। द्वावाद्यौ पञ्चमस्वरिणौ, चतुर्थो
४७। मार्जक मृजाध्वन्योः। द्वितीयस्वरौ। इ, क—मुञ्जयति।

क—मोजयति। मञ्जयति। मार्जयति। द्वावाद्यौ भ्वादावेव केचित् पठ्यन्ते। मुञ्जति मोजति। तत्रैव द्वितीयः सप्तमस्वरीति केचित्। मर्जति। मृजा मार्जनम्।

४८। मृज् लूष् शुद्धौ। (मृज—अदा० प०) शुद्धिरिह शुद्धीभावः शुद्धीकरणञ्च। ल—मार्ष्टि तीर्थोदकैर्नित्यमिति हलायुधः।५५। ऊ—अमार्जीद्गुप्ततोमरम्। अमार्क्षीच्चासिपत्रादीनिति भट्टिः। ष—मृजा।

४८। मृजूष् कितु भूषे च। (मृज—चु० भ्वा० प०) ऊ—भ्वादिपक्षे अमार्जीत् अमार्क्षीत्। चुरादिपक्षे तु ऊकारानुबन्धस्य सार्थक्यं नास्ति, अममार्जत्। ष—मृजा। कि—मार्जत्यालेपनैर्द्विजानिति, यो मार्जयति साम्राज्यश्रियश्चापत्यवाच्यतामिति च हलायुधः।५५। चकारात् शुद्धौ च।

४९। मस्जो श ट्वौ स्यात् स्नाने। (मस्ज—तुदा० प०) दन्त्यमध्य'। क्विपि सयोगादि लोपे मक्। ओ—मग्नः। श—मज्जन्ती मज्जती। टु—मज्जथुः। औ—अमाङ्क्षीत्। स्नायतेऽनेनेति स्नानमिह जलान्तःप्रवेशः। मज्जति प्रस्तरो जले।

५०। युज कि संयमे। (युज—चु० भ्वा० प०) अन्त'स्थादि'। कि—योजयति योजति। संयमो बन्धनम्। नियोजयति रक्षकानिति, यो नियोजति सामन्तानिति च हलायुधः।४२।

युजिर्धौञ् च युतौ युज्यौ ङ समाधौ युजक्ङ तु।
निन्दे यजै ञौ देवार्चादानसङ्गकृतौ रुजक्॥

हिंसि रुजो शौ भङ्गे रिज् ङृज्यर्थे रन्ज्य रन्जमौञ्।
रागे रेज् ङृ राज् ऋञ्ग दीप्तौ लाज् लाजि भर्त्सने॥
भर्गेऽथ लस्जो श्यो लज् ङ व्रीड़े लज् लजि भर्त्सने।

५०। युजिर्धौञ् च युतौ। (युज—रुधा० उ०) इर्—अयुजत् अयौ-क्षीत्। ध, ञ—युनक्ति युङ्क्ते घृतेनाश्वं लोकः। श्रौ—योक्ता। चकारात् युज कि च (युतावर्थे प्रयुज्यते इत्यर्थः)। प्रजासु वृत्तिं यमयुङ्क्त वेदितुमिति भारवि' ।१।१।

५०। युज्यौङ समाधौ। (युज—दिवा० आ०) समाधिर्योग्यभावः। य, ङ—स्वयमात्मनि युज्यते इति हलायुध' ।४२। श्रौ—योक्ता।

५०। युजक् ङतु निन्दे। (युज—चु० आ०) क, ङ—योजयते।

५१। यजे ञौ देवार्चादानसङ्गकृतौ। (यज—भ्वा० उ०) ऐ—इज्यात्। ञ—यजति यजते। श्रौ—यष्टा। देवः क्रीडा, देवृङ देवन इत्यनेन निष्पादनात्। यजति जन क्रीडतीत्यर्थः। देवस्यार्चा देवार्चेत्येकार्थत्वे कर्म्मणोऽर्थमध्यपाठादकर्म्मकत्वापत्ति'। यजति विष्णुं सुधीः पूजयतीत्यर्थः। पशुना रुद्रं यजते, पशुं रुद्राय ददातीत्यर्थ इति प्राञ्च'। सङ्गस्य कृतिः सङ्गकृतिः। यजति सन्तं साधु', सता सह सङ्गं करोतीत्यर्थः।

५२। रुजक् हिंसे। (रुज—चु० प०) क—रोजयति।

५२। रुजो शौ भङ्गे। (रुज—तुदा० प०) श्रौ—रुग्णः। श—रुजति रोगो हस्तम्। श्रौ—रोक्ता। न रोजयति यः कश्चित् प्राणिनां करुणान्वितः। तस्य धर्म्मरते रोगा न रुजन्ति प्रजामपीत्य भयत हलायुध' ।१८६।

५३। रिज् ङृज्यर्थे। (रिज—भ्वा० आ०) ङ—रेजते। ऋज्यर्थे भर्जने (ऋजिङ्भृजि इत्युक्तेः)।

५४। रन्ज्य मौञ रागे। } (रन्ज—दिवा० उ०)(रन्ज—भ्वा० उ०)
५४। रन्ज मौञ रागे। } य, ञ—रज्यति रज्यते। म—रजयति मृगान्। मृगरमणादन्यत्र रञ्जयति पुत्त्रं पिता। श्रौ—रङ्क्ता। ञ—रजति रजते। रागो वर्णान्तरोत्पादनमासक्तिश्च। शेषार्थेऽकर्म्मकः। रजति वस्त्रं कुङ्कुमेन रजकः। रङ्क्तासि किं कथय वैरिणि मौर्य्यपुत्त्रे इति मुद्राराक्षसम्।

५५ । रेजृङ दीप्तौ । } (रेज—भ्वा० आ०) (राज—भ्वा० उ०)
५६ । राजृञण दीप्तौ । } ऋ—अरिरेजत् । ङ—रेजते । रिरेजे । ऋ—अरराजत् । ञ—राजति राजते । ण—रेजतुः रराजतुः ।

५७ । लाज् भर्त्सने भर्गे । } (लाज—भ्वा० प०) (लाञ्ज—भ्वा० प०)
५७ । लाजि भर्त्सने भर्गे । } द्वौ द्वितीयस्वरिणौ । लाजति । इ—लाञ्जति । भर्गो भर्जनम् । भर्ग. केश्चिन्न मन्यते ।

५८ । लसजो ओ ङ व्रीडे । } (लसज—भ्वा० आ०) (लज—भ्वा०
५९ । लज ङ व्रीडे । } आ०) आद्योदन्त्यसोपधः । क्विपि संयोगादिलोपे लक् । ई, ओ—लग्नः । ङ—लज्जते । लजते । शेषस्यापि निष्ठायां लग्न इत्यन्ये । क्षमते तु लजितः ।

५९ । लज भर्त्सने । } (लज—भ्वा० प०) (लञ्ज—भ्वा० प०)
५९ । लजि भर्त्सने । } लजति । लेजिरेऽन्ये पराजिता इति भट्टि. ।१४। १०५। इ—लञ्जति ।

लज् कान्त्यर्द्धौ लज लुजिक् भाषष्टार्थे विजिर्लिज्ञौ ।
वेके विजोधो विज ङीशो भीकम्पे ल् व्रज डिव्रज ङ्ली ॥
त्यागे व्रजीकि च व्रजोध् व्रतो च व्रज्गतौ व्रजक् ।
संस्कृतौ च विरेफौ तौ शिञ्जिल् किङ्कस्फुटध्वनौ ॥

५९ । लज् कान्त्यर्द्धौ । (लज—चु० प०) अन्तर्द्धिराच्छादनम् । क—लाजयति चन्द्रं मेघः ।

५९ । लजक् भाषष्टार्थे । } (लञ्ज—चु० प०) (लुञ्ज—चु० प०)
६० । लुजिक् भाषष्टार्थे । } शेषः पञ्चमस्वरी इ, क—लञ्जयति । लुञ्जयति । भा दीप्तिः, षष्टार्थो निकेतनहिंसाबलदानानि ।

६१ । विजिर्लिञ्जौ वेके । (विज—ह्वा० उ०) वेक इति विचिर्लिंधौञ पृथक्त्वे इत्यस्य घञि रूपम् । इर्—अविजत् अवैक्षीत् । लि, ञ—वेवेक्ति वेविक्ते मूर्खात् पण्डितः, पृथक् स्यादित्यर्थः । ओ—वेक्ता ।

६१। विजीधो भीकम्पे। ) (विज—रुधा० प०) (विज—तुदा०
६१। विज ङीश्रो भीकम्पे। ) श्रा०) ई, श्रो—विग्नः। ध—विनक्ति। ङ, श—विजते। ई, श्रो—विग्नः। द्वावर्थौ। भीति कम्पश्चेत्यर्थः।

६२। ल वृज ङि त्यागे। ) (वृन्ज—श्रदा० श्रा०) (वृज्—श्रदा०
६२। वृज् ङली त्यागे। ) श्रा०) द्वौ सप्तमस्वरिणौ। ल, ङ—वृङ्क्ते। इ—वृञ्जते। ङ, ल—वृक्ते। ई—वृक्ता।

६२। वृजो कि च। (वृज—चु० भ्वा० प०) ई—वृक्ता.। कि—वर्जयति, वर्जति। चकारात् त्यागे च।

६२। वृजीध वृतौ च। (वृज—रुधा० प०) ई—वृक्तः। ध—वृणक्ति। वरीवृज्यते। चकारात् त्यागे च। वृणक्ति वृजिनैः सङ्गं वृङ्क्ते च वृषलैः सह। वर्जत्यनार्जवोपेतैर्यो वर्जयति दुर्जनैरिति सर्वत्र हलायुधः।२७।

६३। व्रज गतौ। (व्रज—भ्वा० प०) व्रजति।

६३। व्रजक् संस्कृतौ च। (व्रज—चु० प०) क—व्राजयति। चकारात् गतौ च।

## विरेफौ तौ।

तौ एतौ (भ्वादिचुरादौ व्रजधातू) विरेफौ रेफरहितौ च स्याताम्। (भ्वादिचुरादिगणीय वजधातुद्वयमपि भवतीत्यर्थः)।

६४। वज गतौ। (वज—भ्वा० प०) वजति।

६४। वजक् संस्कृतौ च। (वज—चु० प०) अय मार्गणसंस्कार इति प्राञ्चः। मार्गणस्य शरस्य पत्त्रादिना संस्कारो मार्गणसंस्कारः। क—वाजयति पत्त्रैर्वाणं काण्डकारः। मार्गणसंस्कारयोरित्यपि केचित्।

६५। शिजिल् किङ् अस्फुटध्वनौ। (शिञ्ज—अदा० चु० भ्वा० आ०) तालव्यादिः। अस्फुटध्वनिरिह भूषणकर्त्तृक एव, भूषणानान्तु शिञ्जितमित्यमरात्। इ—शिञ्जते। ल, ङ—शिङ्क्ते। कि, ङ—शिञ्जयते शिञ्जते मञ्जीरः। ताले शिञ्जद्वलयसुभगैर्नर्त्तितः कान्तया मे, इति शवन्तं गणकृतानित्यत्वात्।

## षन्जौ ञि सङ्गे ष्वन्जौ ञि ङालिङ्गे षस्ज सर्पणे।

६६। षन्जौ ञि सङ्गे। (षन्ज—भ्वा० प०) मूर्द्धन्यादिः। औ—असाङ्क्षीत्। ञि—सक्तोऽस्ति। सजति वपुषि वासः।

६७। ष्वन्जौ ञि ङालिङ्गे। (ष्वन्ज—भ्वा० आ०) वकारयुक्तादिः। आलिङ्ग आलिङ्गनम्। औ—स्वङ्क्ता। ञि—स्वक्तोऽस्ति। ङ—स्वजते युवतीं युवा। परिष्वजति पाञ्चाली मध्यमं पाण्डुनन्दनमिति, परस्मैपदं गणकृतानित्यत्वात्।

६८। षस्ज सर्पणे। (षस्ज—भ्वा० प०) दन्त्यसोपधः। क्विपि संयोगादिलोपे सक्। सज्जति। वचोऽपि परुषाक्षर न पदेषु संसज्जते इति शाकुन्तले गणकृतानित्यत्वात्।

## षर्ज्ज सर्ज्जऽर्ज्जने सृज्यौङ् विसर्गेऽथ सृजौ श च।

६९। षर्ज्ज अर्ज्जने। } (षर्ज्ज—भ्वा० प०)(सर्ज्ज—भ्वा० प०) द्वौ
७०। सर्ज्ज अर्ज्जने। } क्रमान्मूर्द्धन्यदन्त्यादी। सिषर्ज्जयिषति। सिसर्ज्जयिषति। सर्ज्जति धन लोकः।

७१। सृज्यौङ् विसर्गे। (सृज्—दिवा० आ०) य, ङ—सृज्यते। औ—स्रष्टा। सरीसृज्यते। विसर्गस्त्यागः। त्यागे व्युत्पन्न पर एव, अन्यत्र करोतीत्यर्थः। यथा—उपासनामेत्य पितुः स्म सृज्यते इति नैषधम्। सपूर्वोऽयमकर्म्मकः। यथा—ससृज्यते सरसिजैररुणांशुभिन्नैरिति रघुः। निशापरिणामवायुः सरसिजैः सह संसृज्यते (सम्बद्धो भवति) इत्यर्थः।

७१। अथ सृजौ श च। (सृज्—तुदा० प०) समुमस्वरौ। औ—अस्राक्षीत्। श—सृजति। चकाराद्विसर्गे।

## ट्वो स्फुर्ज्जा वज्रनिर्घोषे जकारान्ता द्विसप्ततिः।

७२। ट्वो स्फुर्ज्जा वज्रनिर्घोषे। (स्फुर्ज्ज—भ्वा० प०) ओष्ठ्यवर्गद्वितीययुक्तफस्वौ। टु—स्फुर्ज्जथु.। ओ—स्फुर्ग्न.। आ—स्फुर्ज्जितं स्फुर्ग्नं तेन। प्रस्फुर्ज्जितः प्रस्फुर्ग्न.स। वज्रनिर्घोषो वज्रकर्त्तृकशब्द.। स्फुर्ज्जति वज्रम्।

## जकारान्ता द्विसप्ततिः।

(जकारान्ता धातवो द्विसप्ततिसंख्यका।
संख्यासङ्गतिस्तु पूर्ववत्।

—०—

## झान्तवर्गः।

### उद्झश् त्यागे जर्झ झर्झश् भर्त्सोक्त्यो र्झान्तिमास्त्रयः।

१। उद्झश् त्यागे। ( उद्झ—तुदा० प० ) झस्वादिर्दन्त्यवर्गद्वतीयोपध। क्विपि समुत्, समुझाम्। स्यादौ नवद्गोये इति उज्झिझिषति औज्झिझत्। जोपध इत्येके। उजिज्झिषति औजिज्झत्। अ—उज्झन्ती उज्झती।

२। जर्झश भर्त्सोक्त्योः। } ( जर्झ—तुदा० प० ) ( झर्झ—तुदा० प० )
३। झर्झश भर्त्सोक्त्योः। } अ—जर्झन्ती जर्झती। झर्झन्ती झर्झती। भर्त्संस्तर्जनम्।

### झान्तिमास्त्रयः।

( झः अन्तिमो येषां ते, झकारान्ता धातवस्त्रयः )।

---

## टान्तवर्गः।

### अट्टक् तीक्ष्णेऽनादरेऽट्टात्टाद्टङ्ङतिक्रमे बधे।

१। अट्टक् तीक्ष्णेऽनादरे। ( अट्ट—चु० प० ) टद्वयान्तः। अट्टयति। एकटकार इति रामः। तीक्ष्ण्यमल्पीभावः।

१। अट्टङ् अतिक्रमे बधे। } ( अट्ट—भ्वा० आ० ) ( अत्ट—भ्वा०
२। अत्टङ् अतिक्रमे बधे। } आ० ) अद्ट—भ्वा० आ० ) त्रयः
३। अद्टङ् अतिक्रमे बधे। } क्रमात् मूर्द्धन्यवर्गाद्यन्तदन्त्यवर्गाद्य-तृतीयोपधाः। ङ—अटिट्टिषते, अतिट्टिषते, अट्टिटिषते खल राजा।

### अट इट् कट् कटि कटी गत्यामे कट् वृतौ वृषि।

४। अट गत्याम्। } ( अट—भ्वा० प० ) ( इट—भ्वा० प० ) ( कट—
५। इट गत्याम्। } भ्वा० प० ) ( कण्ट—भ्वा० प० ) ( कट—भ्वा०
६। कट गत्याम्। } प० ) पृथक्पाठात् तृतीयो नेदनुबन्धः, तद्व्यव-
६। कटि गत्याम्। } धानात् पूर्वौ च तथा। एवं पृथक्पाठाच्चतुर्थो न
६। कटी गत्याम्। } दीर्घेदनुबन्धः तद्व्यवधानात् पूर्वे च तथा।

अटति। एटति। कटति। इ—कण्टाते। ई—कट्टः।

६ । ए कट वृतौ वृषि । ( कट—भ्वा० प० ) वृतिरावरणं, वृट् वर्षणम् । ए—अकटीत् पटो गात्रम् । कटति मेघः ।

## कीट्क्बन्धवर्णयोः कूट् कङ्ङप्रसादाप्रदोः कुटि । वैकल्ये कुट्शि कौटिल्ये कुट्कुट्टक् ङप्रतापने ॥

७ । कीट्क् बन्धवर्णयो । ( कीट—चु० प० ) क—कीटयति कीटः । वर्णः कैश्चिन्न मन्यते ।

८ । कूट् कङ् अप्रसादाप्रदो । ( कूट—चु० आ० ) अप्रदा दानाभाव । क, ङ—कूटयते खल, स्फुटमप्यर्थं अप्रसन्न करोति, किञ्चिन्न ददाति वेत्यर्थः ।

९ । कुटि वैकल्ये । ( कुण्ट—भ्वा० प० ) इ—कुण्ट्यते । वैकल्यमिह विकलीकरणम् । कुण्टति जनं शोक. ।

९ । कुट शि कौटिल्ये । ( कुट—तुदा० प० ) शि—कुटति, अकुटीत्, चुकोट । कौटिल्यमिह कुटिलीभावः कुटिलीकरणञ्च । सकुटन्ति भयाक्रान्ता शत्रवो यस्य दर्शनादिति हलायुध ।२३४। संकुटन्ति आकुञ्चितदेहा भवन्तीत्यर्थ. ।

९ । कुट कङ प्रतापने । } ( कुट—चु० आ० ) ( कुट्ट—चु० आ० )
१० । कुट्ट कङ प्रतापने । } द्वौ पञ्चमस्वरिणौ । शेषट्द्वयान्तः । क, ङ—कोटयते, कुट्टयते (महोमर्क) प्रतापनं प्रतप्तीकरणम् । एतौ कैश्चिन्न मन्येते ।

## कुट्टक् कुत्साच्छिदोः किट्कट्वत् खिट् च भयभीषयोः ।

१० । कुट्टक् कुत्साच्छिदो । ( कुट्ट—चु० प० ) पञ्चमस्वरी, टद्वयान्त । क—कुट्टयति (दुष्ट मृग वा) ।

११ । किट कट्वत् । ( किट—भ्वा० प० ) केटति । कट्वत् गतावित्यर्थ ।

१२ । खिट् च भयभीषयो । ( खिट—भ्वा० प० ) भीषा स्वतो भयोत्पादना । खेटति जनो व्याघ्रात्, विभेतीत्यर्थ. । खेटति जनं व्याघ्रः, भीषयते इत्यर्थ. । चकारात् किटकट्च भयभीषार्थवाचक इत्यर्थः ।

## खट्टक् वृतौ खोट्गत्याघाते खट्काङ्क्षि गोष्टङ् ।

**सङ्घाते घट्क हिंसे च घटिक्यपि द्युतौ घटष्।**
**ङम चेष्टे घुट्ङ्ऌ परीवर्त्ते घुट्शि प्रतीहतौ।**

१२। खट्टक् वृतौ। (खट्ट—चु० प०) टद्वयान्त। क—खट्टयति। वृतिः संवरणम्।

१४। खोट्ट गत्याघाते। (खोट—भ्वा० प०) ऋ—अचुखोटत्। गत्याघातः खोटनम्। खोटति खञ्ज।

१५। खट काङ्क्षि। (खट—भ्वा० प०) खटति। काङ्क्षि आकाङ्क्षायाम्।

१६। गोष्ट ङ सङ्घाते। (गोष्ट—भ्वा० आ०) सङ्घातो राशीकरणम्। ङ—गोष्टते लोको धान्यम्।

१७। घटक हिंसे च। (घट—चु० प०) चकारात् सङ्घाते च। क—घाटयति कवाटं द्वारि जनः, सयोजयतीत्यर्थः। "विघाटयति चास्फोटे वैरिणां करिणां घटा" इति हलायुधः।२००। आस्फोटे यस्य बाहुशब्दे, विघाटयति पलाय्य एकत्र संहतो भवतीत्यर्थ।

१७। घटिक्यपि द्युतौ। (घण्ट—चु० भ्वा० प०) इ—घण्ट्यते। कि—घण्टयति घण्टति। अपिशब्दात् घटक्च (द्युत्यर्थक) द्युतिर्दीप्तिः। द्युत्यर्थत्वेनैव चुरादित्वे सिद्धे किकरणमर्थान्तरेऽपि पाक्षिकचुरादित्वार्थम्। तथाच—"क्रियावाचित्वमाख्यातुं प्रसिद्धोऽर्थ प्रदर्शित। प्रयोगतोऽन्ये मन्तव्या अनेकार्था हि धातव"॥ इति वोपदेव.। प्रसिद्धार्थं कथयितु प्रसिद्धार्थ प्रदर्शितः किन्तु महाकविप्रयोगं दृष्ट्वा अन्येऽप्यर्था मन्तव्या, हि यस्मात् धातवोऽनेकार्था भवन्तोत्यर्थ। तेन हिंसास्तुत्योः पठितस्यापि शसते कथनार्थत्वेन "न मे ह्रिया शसति किञ्चिदीप्सितम्" इति रघौ कथयतीत्येवार्थः। एवं दीप्तौ पठितस्यापि तर्कयतेर्वितर्कणार्थत्वेन तर्कयत्यन्यगुण सुधीरित्यादि।

१७। घटष्ङम चेष्टे। (घट—भ्वा० आ०) ष—घटा। ङ—घटते पठितुं शिष्यः। म—घटयति। घटतीति घटो ज्ञेयो नाघटन् घटतामियादिति तु घटतेः पचादित्वादन्, ततो घट इवाचरतीति क्वौ साध्यम्।

१८। घुट्ङ्ऌ परीवर्त्ते। (घुट—भ्वा० आ०) परीवर्त्तो गतवतः प्रत्यागमनम्, विनिमयो वा। ङ—घोटते नदी। ऌ—अघुटत्।

१८। घुट्शि प्रतिहतौ। (घुट—तुदा० प०) शि—घुटति, अघुटीत्

शत्रु शूरः। जुघोट। यस्य व्याघोटते दण्डो नाकृतार्थः कृतश्च न। व्याघुटन्ति विपक्षाश्च यस्मन्मुखमुपागता इत्युभयत्र हलायुध ।२४६।

## घट्टक् चाले घट्ट ङ च चिट प्रेषे चटक् बधे।

१८। घट्टक चाले। (घट्ट—चु० प०) टद्वयान्तः। चालश्चलनम्। क—घट्टयति मेघो वायुना।

१९। घट्ट ङ च (घट्ट—भ्वा० आ०) टद्वयान्तः। ङ—घट्टते। चकाराच्चाले। उद्घट्टते न कस्यापि धर्म्मे धर्म्मपरायणः। उद्घट्टयति गोष्ठीषु सर्वेषामेव यो गुणानित्युभयत्र हलायुध ।१६५।

२०। चिट प्रेषे। (चिट—भ्वा० प०) चेटति भृत्यं स्वामी।

२१। चटक् बधे। (चट—चु० प०) क—चाटयति शत्रुं शूरः।

## चट् च भेदे चेष्ट ङीहे चुट्टक् चुट्, चुटि तुच्छने।

२१। चट् च भेदे। (चट—भ्वा० प०) चटति। चकारात् चटक् च (भेदार्थक)।

२२। चेष्ट ङीहे। (चेष्ट—भ्वा० आ०) ईहो व्यापारः। ङ—चेष्टते पठितुं शिष्यः।

२३। चुट्टक् तुच्छने।<br>२४। चुट तुच्छने।<br>२४। चुटि तुच्छने। } (चुट्ट—चु० प०) (चुट—भ्वा० प०) (चुण्ट—भ्वा० प०) त्रयः पञ्चमस्वरिणः, आद्यष्टद्वयान्तः, एकटकार इति रामः। तुच्छनमल्पीभाव.। (पृथक्पाठात् पूर्वोनिदित्) क—चुट्टयति। चोटति नदी ग्रीष्मे। इ—चुण्टते।

## चुटिक् छेदे चुट कुटक् शिच जट् झट संहतौ।

२४। चुटिक् छेदे। (चुण्ट—चु० प०), पञ्चमस्वरी। इ, क—चुण्टयति।

२४। चुटक् शिच। } (चुट—चु० तुदा० प०) (छुट—चु० तुदा० प०)<br>२५। छुटक् शिच। } क—चोटयति, छोटयति। शि—चुटति, अचुटीत्। छुटति, अछुटीत्। चकारात् छेदे।

२६। जट संहतौ।<br>२७। झट संहतौ। } (जट—भ्वा० प०) (झट—भ्वा० प०) जटति, झटति केश, परस्पर संलग्नः स्यादित्यर्थः।

णट् नृत्यहिंसयोर्णट्म नृतौ तट् काहतौ तट।
उच्छ्राये तुट्शि कलहे त्रुट् काङ् त्रुटय शिच्छिदि॥

२८। णट् नृत्यहिंसयो। (णट—भ्वा० प०) प्रणटति। णोपदेशविधौ वर्ज्जनेऽप्यस्य परस्य चेह पाठ' केषाञ्चिदनुरोधात्।

२८। णट्म नृतौ। (णट—भ्वा० प०) म—प्रणटयति। नृताविति नृत्यतेरौणादिकक्रिप्रत्यये रूपम्। अत्र मिकारानुबन्धेनैवेष्टसिद्धौ पूर्वे नृत्यग्रहणमर्थभेदार्थ, तेन पूर्वे नृत्य साभिनयनर्त्तनम्, इह तु नृतिरभिनयरहितनर्त्तनमिति। यथा पूर्वस्य—स्फटिककटकमूर्तिर्नाटयत्येव शैल इति माघः। अस्य तु—नाव्ये न केन नटयिष्यति दीर्घमायुरिति मुरारिः।

२९। तट् काहतौ। (तट—चु० प०) क—ताटयति। (आहतिराहननम्)।

२९। तट उच्छ्राये। (तट—भ्वा० प०) उच्छ्राय उच्चीभावः। तटति पुलिनम्।

३०। तुट शि कलहे। (तुट—तुदा० प०) शि—तुटति, अतुटीत् नीच परस्परं वचसा। तुतोट।

३१। त्रुट काङ छिदि। } (त्रुट—चु० आ०) (त्रुट—दिवा० तुदा०
३१। त्रुट्य शि छिदि। } प०) द्वौ दन्त्यवर्गप्रथमादी। क, ङ—त्रोटयते। य—त्रुट्यति, त्रोटिष्यति। तुदाद्यन्तर्गणस्यैव कुटादित्वमिति दिवादिपक्षे कुटादित्वं नास्ति। शि—त्रुटति, अत्रुटीत्। शेषस्तु विदीर्णीभावेऽपि, यथा—त्रुट्यद्भीमधनुः कठोरनिनद इति महानाटकम्। मयूखनखरत्रुटत्तिमिरकुम्भिकुम्भस्थले इत्युज्वटः। क्वचिल्लूनीभावेऽपि, यथा—आवृणुते यदि वत्सस्त्रुट्यति वासस्तदा जघने इत्युज्वट। त्रुटन्ति सर्वसन्देहास्त्रुट्यन्ति ग्रन्थयो हृदीति हलायुध'।२८। ।

नट णट्वत् नटक्भ्रंशे पटक् च त्विषि पट् गतौ।

३२। नट णट्वत्। (नट—भ्वा० प०) णट्वदिति नट नृत्यहिंसयोः नटम्नृतौ इति द्विविध इत्यर्थः। प्रनटति। म—प्रनटयति।

३२। नटक् भ्रंशे। (नट—चु० प०) क—नाटयति। भ्रंशोऽधःपतनम्। स्पन्दनार्थोऽयमिति रामः।

३२। पटक् च ग्रन्थे। (पट—चु॰ प॰) क—पाटयति। चकारात् नटक् च। ग्रन्थ दीप्तौ।

३३। पट गतौ। (पट—भ्वा॰ प॰) पटति।

## पुट् शि श्लेषे पुटक् चूर्णे भासि पिट् संहतौ ध्वनौ।

३४। पुटशि श्लेषे। (पुट—तुदा॰ प॰) शि—पुटति, अपुटीत्, पुपोट। श्लेष. सम्बद्धीभावः।

३४। पुटक् चूर्णे भासि। (पुट—चु॰प॰) क—पोटयति। भासि दीप्तौ।

३५। पिट् संहतौ ध्वनौ। (पिट—भ्वा॰ प॰) पेटति जनः, किञ्चित् राशीकरोति शब्दायते वा।

## पुट्टक् तीक्ष्ण्ये बुट्कि हिंसे भट् भृतौ भट्म भाषणे।

३६। पुट्टक् तीक्ष्ण्ये। (पुट्ट—चु॰ प॰) पञ्चमस्वरी टद्वयान्तः। एक-टकार इति रामः। पुट्टयति। तीक्ष्ण्यमल्पीभाव.।

३७। बुट्कि हिंसे। (बुट—चु॰ भ्वा॰ प॰) कि—बोटयति, बोटति।

३८। भट् भृतौ। (भट—भ्वा॰ प॰) भृतिरिह पोषणम्, कर्ममूल्य-मिति गोविन्दभट्टः। भटति भृत्यं स्वामी।

३८। भट्म भाषणे। (भट—भ्वा॰ प॰) म—भटयति। भाषणं कथनम्।

## म्लेट् म्रेट मेट् उन्मादे मुटि मर्द्दे कि मुट् चुदि।

३९। म्लेट् उन्मादे। } (म्लेट—भ्वा॰ प॰) (म्रेट—भ्वा॰प॰) (मेट—
४०। म्रेट् उन्मादे। } भ्वा॰ प॰) द्वावाद्यौ क्रमादन्त.स्थतृतीयरेफ-
४१। मेट् उन्मादे। } युक्तौ। ऋ—अमिम्लेटत्, अमिम्रेटत्, अमि-मेटत्। म्लेटति लोक उन्माद्यतीत्यर्थः।

४२। मुटि मर्द्दे। (मुण्ट—भ्वा॰ प॰) पञ्चमस्वरी। इ—मुण्ट्यते। मर्द्दो मर्द्दनम्।

४३। कि मुट् चुदि। (मुट—चु॰ भ्वा॰ प॰) चुदि चूर्णीकरणे। कि—मोटयति तण्डुलं शिला। यस्तु दुर्गश्च मोटतीति हलायुधः।१०४।

## मुट् श्रि त्वाक्षेपे च यौटृ सम्बन्धे रौटृ नादरे ।

४२। मुट् श्रि त्वाक्षेपे च। (मुट—तुदा० प०) पवर्गशेषादिः। श्रि—मुटति, श्रमुटीत्, मुमोट। (आक्षेपस्तिरस्कारः) चकारात् मुदि च। मुटति द्विषतां दर्पं य इति हलायुधः।१०४।

४३। यौटृ सम्बन्धे। (यौट—भ्वा० प०) चतुर्दशस्वरी। ऋ—अयुयौटत्। यौटति काष्ठं तक्षा। (सम्बन्धः संयोजनम्, यौटति संयुक्तं करोतीत्यर्थः)।

४४। रौटृ नादरे। (रौट—भ्वा० प०) चतुर्दशस्वरी। ऋ—अररौटत्। नादरोऽनादरः। रौटति खलं लोकः।

## रेटृञ् याचे रटृच वाचि रुटि स्तेये रुटक् रुषि। द्युतौ रुट् लुट लृङ् दीप्तिप्रतिहत्योर्लुटि क्रुतौ।

४५। रेटृञ याचे। (रेट—भ्वा० उ०) ऋ—अरिरेटत्। ञ—रेटति रेटते। याचो याचनम्।

४६। रटृच वाचि। (रट—भ्वा० प०) रटति। चकारात् रेटृञ च।

४७। रुटि स्तेये। (रुण्ट—भ्वा० प०) इ—रुण्ट्यते धनं चौरेण।

४७। रुटक् रुषिद्युतौ। (रुट—चु० प०) क—रोटयति।

४७। रुट् लृङ दीप्तिप्रतिहत्योः। ⎫ (रुट—भ्वा० आ०) (लुट—भ्वा०
४८। लुटृ लृङ दीप्तिप्रतिहत्योः। ⎭ आ०) लृ—अरुटत्, अलुटत्। ङ—रोटते, लोटते। प्रतिहतिः शोकादिना पतनम्, पुनर्हननं वा।

४८। लुटि क्रुतौ। (लुण्ट—भ्वा० प०) पञ्चमस्वरी। इ—लुण्ट्यते। क्रुतिश्चौर्य्यम्।

## लुट्क भासे लृङ्कृ लुट्य लुट् विलोटविलोड़योः।

४८। लुट्क भासे। (लुट—चु० प०) क—लोटयति। भासो दीप्तिः।

४८। लृङ्कृ लुट्य विलोटविलोडयोः। ⎫ (लुट—दिवा० प०) (लुट—
४८। लुट् विलोटविलोडयोः। ⎭ भ्वा० प०) लृ—अलुटत्।

ऋ—अलूलुटत्, अलुलोटत्। (भ्राज भ्रास भासेत्यु ङो वा ह्रस्व) य—लुट्यति। लोटति। विलोटः सम्यक्ज्ञोभाव। तत्र—लुट्यन् सशोको भुवि रोरुदावानिति भट्टिः।३।१२। विलोडने—लुठ्यत्यट्टालकान् दुर्गान् कपाटानि च लोटतीति हलायुधः।१०७।

## लुण्टक्यवज्ञाचौर्य्ये लट् बाल्योक्त्योर्ङ् लोष्टसंहतौ।

४९। लुण्टकि अवज्ञाचौर्य्ये। (लुण्ट—चु० भ्वा० प०) दन्त्यनप्रकृतिः टयोगान्मूर्द्धन्यः। तेन भ्वादिपक्षे यगादौ नलोपे लुट्यते इत्यादि। कि—लुण्टयति, लुण्टति। (द्वावर्थौ)।

५०। लट् बाल्योक्त्योः। (लट—भ्वा० प०) बालोऽज्ञस्तस्य भावो बाल्यं व्यामोह इति यावत्। लटति लोक, शिशुः स्यात्, किञ्चिद्वदति वेत्यर्थः।

५१। ङ लोष्ट संहतौ। (लोष्ट—भ्वा० आ०) ङ—लोष्टते धान्यं लोकः (राशीकरोतीत्यर्थः)।

## लोट्ऋ न्मादे वेष्ट ङ वट वेष्टे वटि कि वण्टने।

५२। लोट् ऋ उन्मादे। (लोट—भ्वा० प०) ऋ—अलुलोटत्। लोटति लोक उन्माद्यतीत्यर्थः।

५३। वेष्टङ वेष्टे। } (वेष्ट—भ्वा० आ०) (वठ—भ्वा० प०) ङ—
५४। वट वेष्टे। } वेष्टते। वटति वृक्षं लता।

५४। वटि कि वण्टने। (वण्ट—चु० भ्वा० प०) वण्टनं विभागः। इ—वण्ट्यते। कि—वण्टयति, वण्टति। वण्टन्ति हाटकं यस्मात् प्राप्य विप्राः परस्परमिति हलायुध।७८। अथ चुरादौ केश्चिन्न पठ्यते इति दुर्गसिंहादयः।

## वट्मोक्तौ वुटि क च्छित्यां विटाक्रोशे स्वने ऋशौट्।
## गर्वे शटङ्क श्लाघे शट् सादे शौर्य्यौ गतौ रुजि॥

५४। वट् मोक्तौ। (वट—भ्वा० प०) म—वटयति।

५५। वुटिक चित्याम्। (वुण्ट—चु० प०) पञ्चमस्वरी। इ, क—वुण्टयति। चितिर्हिंसा।

५६। विटाक्रोशे स्वने। (विट—भ्वा० प०) वेटति। आक्रोशः केचिन्न मन्यते। स्वनः शब्दः।

५७। ऋ शौट् गर्वे। (शौट—भ्वा० प०) चतुर्दशस्वरी। ऋ—अशुशौटत्। शौटति वीरः।

५८। शट ङ्क श्लाघे। (शट—चु० आ०) ङ, क—शाटयते।

५८। शट् सादे शीर्णौ गतौ रुजि। (शट—भ्वा० प०) सादोऽवसादः, शीर्णिर्विभेदः। शटति लोक', अवसीदति विशृणाति गच्छति रुजति वेत्यर्थ.।

## शिट् षिटानादरे षुट्टक् तीक्ष्णे च षट अंशके।

५८। शिट नादरे। } (शिट—भ्वा० प०) (षिट—भ्वा० प०) द्वौ
६०। षिट नादरे। } क्रमात्तालव्यमूर्द्धन्यादी। शेटति, षेटति खलं लोकः। (यः शौटति सभामध्ये तं शेटति निरीक्ष्य य इत्युभयत्र हलायुधः।२७०।

६१। षुट्टक् तीक्ष्ण्ये च। (षुट्ट—चु० प०) पञ्चमस्वरी, टद्वयान्तः। क—सुट्टयति। दन्त्यादिरयमिति भीमः। तीक्ष्ण्यमल्पीभावः। चकारादनादरे च।

६२। षट अंशके। (षट—भ्वा० प०) अंशकोऽवयवे। सटति पटः अवयवी स्यादित्यर्थः।

## षट्टक् निकेतने हिंसे बले दाने स्फुटक् भिदि।

६३। षट्टक् निकेतने हिंसे बले दाने। (षट्ट—चु० प०) मूर्द्धन्यादिष्टद्वयान्तः। क—सट्टयति लोकः, निवसति हन्ति बली स्यात् ददाति वेत्यर्थः।

६४। स्फुटक् भिदि। (स्फुट—चु० प०) दन्त्यादिरयम्। एतदाद्या अष्ट ओष्ठ्यवर्गद्वितीययुक्ताः। भिदि भेदने। क—स्फोटयति कण्टकः पदम्।

## स्फुटिर्विशरणे स्फुट् श्रि विकासे स्फुट् ङ्च स्फुटिक्।
## मर्कटाद्याङः स्फुटक् हिंसे स्फिटक् ह्वत्याश्च स्फुट्टक॥

**चानादरे स्मिट्कच स्मिट्काच स्नेहे स्फटि स्फट ।**
**शीर्णौ इट् त्विषि हेट् बाधे टान्ता इत्येकसप्ततिः ॥**

६४। स्फुटिर्विशरणे। (स्फुट—भ्वा० प०) इर्—अस्फुटत् अस्फोटीत्। विशरणं भेदनम्। स्फोटति गात्रं वाणः। विसरण इति दन्त्यमध्यपाठे विकसने इत्यर्थः। स्फोटति मल्लीकलिका।

६४। स्फुट शि विकासे। (स्फुट—तुदा० प०) विकास इति कस ज गताविति दन्त्यान्तस्य घञि रूपम्, विपूर्वत्वेनार्थान्तरवाचितया विकसन इत्यर्थः। शि—स्फुटति केतकीकोरकः। अस्फुटीत् पुस्फोट।

६४। स्फुटङ च। (स्फुट—भ्वा० आ०) चकाराद्विकसने। ङ—स्फोटन्ते नवकुड्मलानि कुटजप्रायेषु वृक्षेषु चेति हलायुधः।१२।

६४। स्फुटिक् नर्मणि। (स्फुण्ट—चु० प०) पञ्चमस्वरी। नर्म इह परीहासः। इ, क—स्फुण्टयति सखायं लोकः। अयं कैश्चिन्न मन्यते।

६४। आङः स्फुटक् हिंसे। (आङ्पूर्वक—स्फुट्—चु० प०) आङ् उपसर्गः। क—आस्फोटयति।

६५। स्फिटक् ह्रत्याञ्च। (स्फिट—चु० प०) क—स्फेटयति। वृत्तिः कैश्चिन्न मन्यते। चकाराद्धिंसे च।

६६। स्फुट्टक् चानादरे। (स्फुट्ट—चु० प०) पञ्चमस्वरी, टद्वयान्तः। क—स्फुट्टयति। चकारात् स्फिटक् च।

६७। स्मिट्कच। (स्मिट—चु०प०) ओष्ठ्यवर्गशेषयुक्तः। क—स्मेटयति। चकारात् अनादरे।

६८। स्मिट्क च स्नेहे। (स्मिट—चु० प०) दन्त्यवर्गशेषयुक्तः। क—स्मेटयति। चकारात् स्मिट्क च।

६९। स्फटि शीर्णौ। } (स्फण्ट—भ्वा०।प०) (स्फट—भ्वा० प०) द्वा-
६९। स्फट शीर्णौ। } वाद्यस्वरिणावोष्ठ्यवर्गद्वितीययुक्तौ। पञ्चमस्वरिणाविति भ्रमो हेयः। तथात्वे सजातीयतया स्फुटक् भिदीत्यादीनां सन्निधावेवापठिष्यत्। एवं संख्यापि न सङ्गच्छते, स्फुटिर्विशरणे इत्यनेनैवेष्टसिद्धौ शेषधातोश्च वैयर्थ्यं स्यात्। अतएव रमानाथोऽपि स्फुटिर्विशरणे इत्यत्र उकारशून्यः स्फट इति केचित् पठन्ति। पचादित्वादनि स्फटा फणा इति सुभूति-

रित्यन्तमाह। श्रीर्विभेदनम्। इ—स्फण्टाते। स्फटति गात्रं वायः। पस्फण्ट, पस्फाट, स्फटिकम्।

७०। हट त्विषि। (हट—भ्वा० प०) हटति। त्विषि दीप्तौ। (हटतीति हाटक स्वर्णम्)।

७१। हेट बाधे। (हेट—भ्वा० प०) हेटति। बाधो विहतिः।

## टान्ता इत्येकसप्ततिः।

(टान्ताधातव एकसप्ततिसंख्यकाः)।

---

## ठान्तवर्गः।

**अठिङ्ठ गतेऽथोठोपघाते ङेठ बाधने।**

१। अठिङ् गते। } (अण्ठ—भ्वा० आ०) (अठ—भ्वा० प०) इ—
१। अठ गते। } अण्ठ्यते। ङ—अण्ठते। अठति।

२। अथोठोपघाते। (उठ—भ्वा० प०) ऋस्वादिः। ओठति खलः साधुम्। (उपघातः पीडनम्)।

३। ङेठ बाधने। (एठ—भ्वा० आ०) बाधनं विहतिः। (प्रतिबन्धीकरणमित्यर्थः) ङ—एठते मत्सरं लोकः।

**कुठि खाटनवैकल्यालस्ये काठ् तङ्कने काठि।**
**कि आध्याने काठि ङ च गुठिक् वेष्टे पिठ क्लिशि॥**
**बधे पठ् वाचि वठ् स्थौल्ये मठ् वासमर्द्दयोर्मठि।**
**ङ त्वाध्याने मुठि ङ तु पलाये रठ भाषणे॥**

४। कुठि खोटनवैकल्यालस्ये। (कुण्ठ—भ्वा० प०) पद्ममञ्जरी। इ—कुण्ठ्यते। वैकल्यं विकलीभावः। आलस्यं मन्दीभावः। कुण्ठति खञ्जः शोकार्त्तो हृष्टो वा।

४। कठ तह्ने। (कठ—भ्वा॰प॰) तह्नं दुःखेन जीवनम्। कठति दीनः।

५। कठि कि आध्याने। (कण्ठ—चु॰ भ्वा॰ प॰) इ—कण्ठयते (इद॰ मुदाहरणं भ्वादिपक्षे बोध्यम्।) कि—कण्ठयति, कण्ठति। आध्यानं "स्मृ श्रीत्क्ये" इत्यत्र व्याख्यातम्।

५। कठि ङ च। (कण्ठ—भ्वा॰ आ॰) इ—कण्ठ्यते। ङ—कण्ठते। चकारादाध्याने। रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते इति। (नोत्-कण्ठते परद्रव्ये नोत्कण्ठति परस्त्रियम्। यस्योत्कण्ठयति श्लाघ्ये धर्म्मे एव मनःसदेत्युभयत्र हलायुधः।८९।

६। गुठिक् वेष्टे। (गुण्ठ—चु॰ प॰) क्रस्त्री। इ, क—गुण्ठयति। अजुगुण्ठत्। (अवगुण्ठनम्)।

७। पिठ क्लिशि बधे। (पिठ—भ्वा॰ प॰) ओष्ठ्यवर्गाद्यादिः। पेठति। पिपेठतुः। क्लिशि दुःखानुभवे।

८। पठ वाचि। (पठ—भ्वा॰ प॰) पठति श्लोकं धीरः।

९। वठ स्थौल्ये। (वठ—भ्वा॰ प॰) स्थौल्यमिह सामर्थ्यम्। वठति चौरो योद्धुं समर्थः स्यादित्यर्थः।

१०। मठ वासमर्द्दयोः। (मठ—भ्वा॰ प॰) मठति। वासो निवासः। अर्द्दः कोचिन्न मन्यते।

१०। मठि ङ तु आध्याने। (मण्ठ—भ्वा॰ आ॰) इ—मण्ठ्यते। ङ—मण्ठते आध्यानं "स्मृ श्रीत्क्ये" इत्यत्र व्याख्यातम्।

११। मुठि ङ तु पलाये। (मण्ठ—भ्वा॰ आ॰) पवर्गशेषादिः, पञ्चम-स्वरी। इ—मुण्ठ्यते। ङ—मुण्ठते चौरः।

१२। रठ भाषणे। (रठ—भ्वा॰ प॰) रठति। भाषणं कथनम्।

**रुठोपघाते रुठलृङ् प्रतीघातेऽथ रुठ् लुठि।**
**गत्यालस्ये यश्चोटे तु लुठङ् लुठ रादिवत्॥**

१३। रुठोपघाते। (रुठ—भ्वा॰ प॰) रोठति लोकं शोकः।

१४। रुठ लृङ् प्रतीघाते। (रुठ—भ्वा॰ आ॰) लृ—अरुठत्। ङ—रोठते। प्रतीघातः शोकादिना पतनं, पुनर्हननं वा॥

१३ । अथ वठि गत्यालस्यस्तेयखोटे । }
१४ । लुठि गत्यालस्यस्तेयखोटे । } (वण्ठ—भ्वा० प०) (लुण्ठ—भ्वा० प०) एतौ पञ्चमस्वरिणौ । इ—वण्ठ्यते, लुण्ठ्यते । (यो लुण्ठति गिरिं कश्चिदिति हलायुधः । ४६ । मन्थथार्थं गिरिशिखरं गच्छतीत्यर्थः ) ।

१४ । रु लुठ ङ रादिवत् । }
१४ । लुठ रादिवत् । } (लुठ—भ्वा० आ०) (लुठ—भ्वा० प०) रु—अलुठत् । ङ—लोठते । लोठति । रादिवत्—(एतौ लुठधातू) रादौ रेफादौ ... ... धातू (रुठ रुङ् प्रतीघाते, रुठोपघाते इत्युक्त... ) क्रमात्तयोरर्थे वर्त्तेते । तथा च रुलुठङ प्रतीघाते, लुठोपघाते इत्यर्थः । (क्वचित् कार्य्ये न लोठते इति हलायुधः । ४६ । न प्रतिहतो भवतीत्यर्थः ) ।

लुठ् शि लोटे लुठक् चौर्य्ये वठि ङङेकचरे वठ ।
स्थौल्ये शठ कङ श्लाघे शठ् वधक्लेशकैतवे ।

१४ । लुठ शि लोटे । (लुठ—तुदा० प०) शि—लुठति, अलुठीत् । लुलोठ । लोटः सम्बन्धीभावः । "हारोऽयं हरिणाक्षीणां लुठति स्तनमण्डले" इत्यमरुशतकम् ।

१४ । लुठक् चौर्य्ये । (लुठ—चु० प०) क—लोठयति ।

१५ । वठिङ् एकचरे । (वण्ठ—भ्वा० आ०) एकचर एककर्त्तृकचरणम् । इ—वण्ठ्यते । ङ—वण्ठते चौरश्चोरयितुमेकश्चरतीत्यर्थः ।

१५ । वठ स्थौल्ये । (वठ—भ्वा० प०) स्थौल्यमिह सामर्थ्यम् । वठति दाता, दातुं समर्थः स्यादित्यर्थः ।

१६ । शठ कङ श्लाघे । (शठ—चु० आ०) क, ङ—शाठयते ।

१६ । शठ वधक्लेशकैतवे । (शठ—भ्वा० प०) क्लेशो दुःखानुभवः । कैतवमिह वञ्चनम् । शठति खलः साधुं, वञ्चयते इत्यर्थः ।

शठकालस्ये श्वठ् श्वठिक् च गत्यसंस्कृतसंस्कृते ।

१६ । शठकालस्ये । (शठ—चु० प०) क—शाठयति वृद्धः, क्रियासु मन्दः स्यादित्यर्थः ।

१७। श्वठक् गत्यसंस्कृतसंस्कृते । ⎫ (श्वठ—चु० प०) (श्वण्ठ—चु० प०) द्वौ वकारयुक्तौ। पुनः
१७। श्वठिक् च गत्यसंस्कृतसंस्कृते । ⎭ पाठात् पूर्ब्बो नेदनुबन्धः। तयोऽर्थाः। क—श्वाठयति। इ, क—श्वण्ठयति जनः, गच्छति, किमपि न संस्करोति, सस्करोति वेत्यर्थः। संस्कारगत्योरिति केचित्। चकारात् श्रठक् च। (एतदर्थंवितयवानित्यर्थः)।

## शुठि शुठ् खोटने शुठ् कालस्ये शुठिकि शोषणे ।

१८। शुठि खोटने। ⎫ (शुण्ठ—भ्वा० प०) (शुठ—भ्वा० प०) द्वौ
१८। शुठ खोटने। ⎭ पञ्चमस्वरिणौ। खोटनमिह गतिव्याघातः। इ—शुण्ठ्यते। शोठति पथः ईं तुना।

१८। शुठ्कालस्ये। (शुठ—चु० प०) क—शोठयति द्रुतः क्रियासु, मन्द. स्यादित्यर्थः।

१८। शुठि कि शोषणे। (शुण्ठ—चु० भ्वा० प०) तालव्यादिः पञ्चमस्वरौ। शोषणमिह चुरादिपक्षे शुष्कीकरणम्, भ्वादिपक्षे शुष्कीभावः। कि—शुण्ठयति काष्ठमातपः, शुण्ठति पत्रमातपात्। न च भौवादिकस्यैव प्रेरणौ शुष्कीकरणवाचित्वात् चुरादावस्य पाठो व्यर्थः स्यादिति वाच्यं, चुरादित्वे परस्मैपदं, प्रेरण अन्तत्वे उभयपदमिति भेदात्।

## सठ स्वठ्क श्वठार्थे हठ् कीलबन्धे बलात्कृतौ ।
## प्लुतौ हेठश् खचे हेठृङ् बाधे ठाविंशतिस्त्रिभिः ।

१९। सठ क श्वठार्थे। ⎫ (सठ—चु० प०) (स्वठ—चु० प०) द्वौ
२०। स्वठ क श्वठार्थे। ⎭ क्रमाद्दन्त्यादौ, शेषो वकारयुक्तः। क—साठयति, स्वाठयति। श्वठार्थे गत्यसंस्कृतसंस्कृतेषु।

२१। हठ कीलबन्धे बलात्कृतौ प्लुतौ। (हठ—भ्वा० प०) कीले बन्धः कीलबन्धः। हठति छागं लोकः, कीले बध्नातीत्यर्थः। कातन्त्रादौ बलात्कारमात्रे, हठति परचक्रं बली।

२२। हेठ श खचे। (हेठ—तुदा० प०) श—हेठन्ती हेठती। खचो भूतिपूत्योरुत्पत्तिः।

२२। हेठृड् बाधे। (हेठ—भ्वा० आ०) ऋ—अजीहिठत् अजिहेठत्। ङ—हेठते मत्सरं साधुः। बाधो विहतिः।

## ठाविंशतिस्त्रिभिः।

(ठाः ठान्ता धातवस्त्रिभिः सह विंशतिस्त्रयोविंशतिसंख्यका इत्यर्थः)। अत्र संख्यायामेको नास्तीति चिन्त्यम्।

—०—

## डान्तवर्गः।

अट्टृड अड्डाभियोगेऽड्ढृन् व्यापेऽडुद्यम ईडृ लड ।
स्तुतावीडक् चौलडिक्युत्क्षेपे काड् माद्ने कडि ।
अड् च दर्पे कडिक् भेदे रक्षणे लुडिखडा ङजि ।
स्नेहे मोचे क्रीडृ खेले कुड्भि बाल्येऽदने कुडिङ् ।
दाहेऽथ कुडि वैकल्ये कुडिक् रक्षेऽथ कूड्भि तु ।
धान्ये भक्षे कड्ड कट्ड कार्कश्ये खोडृ खोटने ।

१। अट्ड अभियोगे। } (अट्ड—भ्वा० प०) (अड्ड—भ्वा० प०)
२। अड्ड अभियोगे। } द्वौ क्रमात् दन्त्यमूर्धन्यवर्गद्वतीयोपधौ। अड्डिडिषति। अडिड्डिषति। क्विपि अट्, अड्। अभियोगः समाधानम्। अड्डति पक्षं विद्वान्। अभिसमन्तात् योगोऽभियोग इति गोविन्दभट्टः।

३। अड्ढृन् व्यापे। (अड—स्वा० प०) र—वैदिकः। न—अड्नोति।

३। अड् उद्यमे। (अड—भ्वा० प०) अडति लोकः सुखाय।

४। ईड् लड स्तुतौ। (ईड—अदा० आ०) दीर्घादिः। ल, ङ—ईट्टे।

४। ईड क च। (ईड़—चु० प०) क—ईड़यति। चकारात् स्तुतौ। ईट्टे त्रिपिष्टपस्थाने यद्गुणांश्चास्यग्रजः। स्वयं पुलकितो हर्षादिड़ौजा ईड़-यत्यपीत्युभयत्र इन्द्रायुधः। १५८)।

५। चौलडि क्युत्क्षेपे। (चोलण्ड—चु० भ्वा० प०) अन्तःस्थद्वतीय-मध्यः। इ—चोलण्डयति। कि—चोलण्डयति चोलण्डति तण्डुलान् लोकः। कर्पूरमोलण्डयतीति दर्शनात्।

६। कड्श मदने। (कड—तुदा० प०) श—कडन्ती कडती। प्राञ्चस्तु बिदेषूच्चारणभेदार्थं भ्वादावप्येत पठन्ति। तथाच—"कड मद इति धातुः पठ्यते भृतुदाद्योः, कडति कडति रूपं तुल्यमेव द्वयोः स्यात्। तदुभयगणपाठे किं फलं नेति वाच्यं, स्वरकृत इह भेदः शप्शयोरस्ति यस्मात्" ॥ इति। स्वरकृत इति उदात्तानुदात्तस्वरितविरिश्चसंज्ञकचतुर्विधस्वरकृत इत्यर्थः।

६। कडि ञङ्च दर्पे। (कण्ड—भ्वा० उ०) दर्प इह हर्षः। इ—कण्ड्यते। ञ—कण्डति कण्डते। ङ—कण्डते जनः, हृष्टः स्यादित्यर्थः। अयमात्मनेपदीत्यन्ये, कदाचित् परस्मैपदार्थो ञकारः। अनेकार्थत्वात् तुषापनयनेऽपि। कण्डते तण्डुलान् लोकः। चकारात् कडश्च (हर्षार्थं)।

६। कडिक् भेदे रक्षणे। (कण्ड—चु० प०) इ, क—कण्डयति।

७। ऌ ञिक्ष्विडा ङञि स्नेहे मोचे। (क्ष्विड—भ्वा० आ०) वकारयुक्तः। ऌ—अक्ष्विडत्। आ—क्ष्विडितं क्ष्विण्टं तेन, प्रक्ष्विडितः प्रक्ष्विण्टः सः। ङ—क्ष्वेडते। ञि—क्ष्विण्टोऽस्ति। स्नेहः स्निग्धीभावः। मोचे—क्ष्वेडते तिलस्तैलं, मुञ्चतीत्यर्थः।

८। क्रीड़ृ खेले। (क्रीड—भ्वा० प०) ऋ—अचिक्रीडत्। क्रीड़ति बालः शिशुभिः।

८। कुडशि बाल्येऽदने। (कुड—तुदा० प०) एतदाद्याश्चत्वारः पञ्चमस्वरिणः। बाल्यमिह शिशुव्यापारः। शि—कुडति, अकुडीत् सिकताभिः शिशुः।

८। कुडिङ् दाहे। (कुण्ड—भ्वा० आ०) इ—कुण्ड्यते। ङ—कुण्डते।

८। अथ कुडि वैकल्ये। (कुण्ड—भ्वा० प०) इ—कुण्ड्यते। कुण्डति जनं देवं, विकलं करोतीत्यर्थः।

८। कुडिक् रक्षे। (कुण्ड—चु० प०) इ, क—कुण्डयति।

१०। कूड्शितु घान्ये भक्षे। (कूड—तुदा० प०) षष्ठस्वरी। फलाभावेऽप्यस्य कुटादौ पाठः प्राचामनुरोधात्। प्राञ्चोऽपि डान्तप्रस्तावादिमं कुटादौ पठितवन्तः। शि—कूडन्ती कूडती। घान्यं घनीभावः। कूडति दुग्धं वह्नियोगात्। कूडत्यन्नं लोकः।

११। कण्ड कार्कश्ये। } ( कण्ड—भ्वा० प० ) ( कदुड—भ्वा० प० )
१२। कदुड कार्कश्ये। } द्वौ क्रमाट्टवर्गतवर्गतृतीयोपधौ। क्विपि कण्,
कद्। कण्डति पद्मनाल कर्कशं स्यादित्यर्थः।

१३। खोडृ खोटने। ( खोड—भ्वा० प० ) ऋ—अचुखोडत्। खोडति खञ्जः। ( खोटनं गतिवैकल्यम् )।

## खुडिङ् खञ्जे खुड खुडि खडक् भेदे खडिङ् मथि।

१४। खुडिङ् खञ्जे। ( खुण्ड—भ्वा० आ० ) पञ्चमस्वरी। खञ्जः खोटनम्। इ—खुण्ड्यते। ङ—खुण्डते—खोडः। ( खञ्जः )।

१४। खुडक् भेदे। } ( खुड—चु० प० ) ( खुण्ड—चु० प० ) ( खड—
१४। खुडिक् भेदे। } चु० प० ) द्वावाद्यौ पञ्चमस्वरिणौ। क—खोड-
१५। खडक् भेदे। } यति। इ, क—खुण्डयति। क—खाडयति।
द्वितीय आद्यस्वरीति कातन्त्राद्याः। स्वमते तु द्वितीयस्याद्यस्वरित्वे पूर्व्वोऽपीदनुबन्धः स्यात्। पञ्चमस्वरित्वे तु सजातीयस्य पुनः पाठादाद्यो नेदनुबन्धः। खण्डयतीत्यादिप्रयोगस्तु खडिङ्मथि इत्यस्मात् घञि खण्डं करोतीति ञौ साध्यः।

१५। खडिङ् मथि। ( खण्ड—भ्वा० आ० ) मथि मन्थने। मन्थनमेह भञ्जनम्। इ—खण्ड्यते। ङ—खण्डते दण्डेन भाण्डं शिशुः। ( मानं खण्डयति स्त्रीणां खण्डते द्विषतां शिर इति हलायुधः। २६३ )।

## गडि गण्डे गड्म सेके गुडिक् वेष्टेऽथ गुड्शिच।
## रक्षे शिघुड् च व्याघाते चुडि तीक्ष्ण्ये चुडिक् छिदि।

१६। गडि गण्डे। ( गण्ड—भ्वा० प० ) इ—गण्ड्यते। गण्डे—कपोलविषयक्रियायाम्। तथाच यत्र द्रव्यनिर्द्देशस्तत्र तन्निष्ठक्रियाविशेष उपलक्ष्यते इति मैत्रेयवोपदेवौ। रमानाथस्तु कण्ड कार्कश्ये इत्यस्मात् कार्कश्य इत्यस्यानुवृत्त्या कपोलकर्त्तृककार्कश्येऽयमिति व्याख्याय गण्डति कपोलः पांशुना इत्युदाहृतवान्। केचित्तु गण्ड इति शब्दस्य व्युत्पत्त्यर्थमेवायं धातुर्मन्तव्यो नत्वस्यान्यत्र प्रयोग इत्याहुः।

१६। गड्म सेके। ( गड—भ्वा० प० ) म—गडयति। सेकः क्षरणम्।

गुडति घटात् पानीयम् । डलयोरैकत्वात्तस्यैव प्रायः प्रयोग इति रमानाथः । तन्मते लान्तपक्षेऽपि सानुबन्धः । स्वमते तु लान्तोऽपि वक्ष्यमाणः, स त्वनुबन्ध-शून्य इति विरोधः ।

१७ । गुडिक् वेष्टे । ( गुण्ड—चु० प० ) एतदाद्याः पञ्चमस्वरिणः सप्त । इ, क—गुण्डयति । अनेकार्थत्वाच्चूर्णीकरणेऽपि । गुण्डयति तिलं लोकः ।

१७ । अथ गुड ग्नि च रक्षे । ( गुड—तुदा० प० ) ग्नि—गुडति, अगुडीत्, जुगोड । चकारात् गुडिक् च ( रक्षार्थकः ) ।

१८ । ग्नि घुड् च व्याघाते । ( घुड—तुदा० प० ) ग्नि—घुडति, अघुडीत्, जुघोड । चकारात् गुडग्निच । ( व्याघातार्थकः ) ।

१९ । चुडि तीक्ष्ण्ये । ( चुण्ड—भ्वा० प० ) इ—चुण्ड्यते । तीक्ष्ण्य-मल्पीभावः ।

१९ । चुडिक् छिदि । ( चुण्ड—चु० प० ) इ, क—चुण्डयति ।

## चुड्ड चुदृड क्रतौ हावे चडिक् रोषे चडि ङ्ङपि ।

२० । चुड्ड क्रतौ हावे । } ( चुड्ड—भ्वा० प० ) ( चुदृड—भ्वा० प० )
२१ । चुदृड क्रतौ हावे । } द्वौ क्रमाट्टवर्गतवर्गतृतीयोपधौ । क्विपि चुड्, चुद् । कातन्त्रादौ हावकरणमित्येकोऽर्थः । अमी हावाः क्रियाः शृङ्गार-भावजा इत्यमरः । "भाव एवाल्पसंलक्ष्यविकारो हाव इष्यते" इति साहित्य-दर्पणः । चुड्डति कान्ताथवा कान्तः ।

२२ । चडिक् रोषे । ( चण्ड—चु० प० ) इ, क—चण्डयति ।

२२ । चडिङ् अपि । ( चण्ड—भ्वा० आ० ) इ—चण्ड्यते । ङ—चण्डते । अपिशब्दात् रोषे ।

## जुड्ञ गतौ जुड्ग्नि बन्धे जुडक् नोदे तडक् त्विषि ।

२३ । जुड्ञ गतौ । ( जुड—तुदा० प० ) ञ—जुडति । जोडिता ।

२३ । जुड्ग्नि बन्धे । ( जुड—तुदा० कुटादिः, प० ) ग्नि—जुडति, अजुडीत् जुजोड । "तानुच्छृङ्खलतापन्नान् शृङ्खलेन जुडत्यसौ" इति हला-युधः । ११२ ।

२३ । जुडक् नोदे । ( जुड—चु० प० ) क—जोडयति । नोदः प्रेरणम् ।

२४। तडक् त्विषि। (तड—चु॰ प॰) क—ताडयति। त्विषि दीप्तौ।

## तडिङ्कप्याहतौ तोडृ नादरे तुड्ड तूडृ च।

२४। तडिङ् भप्याहतौ। (तण्ड—भ्वा॰ आ॰) इ—तण्डयते। ङ—तण्डते। अपिशब्दात् तडक् च (आहत्यर्थकः)।

२५। तोडृ नादरे। (तोड—भ्वा॰ प॰) ऋ—अतुतोडत्। नादरोऽनादरः।

२६। तुड्ड च। } (तुड्ड—भ्वा॰ प॰) (तूड—भ्वा॰ प॰) आद्यः
२७। तूडृ च। } पञ्चमस्वरी। डद्वयान्तः। तुड्डति। फलाभावान्न ऋदनुबन्धः। शेषः षष्ठस्वरी। ऋ—अतुतूडत्। चकारादनादरे।

## तुडृ तुडिङ् वधे तुड्शि भेदे थुडशि संवृतौ।

२८। तुडृ वधे। } (तुड—भ्वा॰ प॰) (तुण्ड—भ्वा॰ आ॰) द्वौ
२८। तुडिङ् वधे। } पञ्चमस्वरिणौ। पूर्व्वस्य ऋदनुबन्धसाफल्यार्थमिकारः परस्यैव, तद्व्यवधानात् ङकारोऽपि तथा। ऋ—अतुतोडत्। इ—तुण्डयते। ङ—तुण्डते। वधः पूर्व्वधातुपक्षे द्विधाकरणमिति गोविन्दभट्टः। तोडति मल्लो मल्लाङ्गं भनक्तीत्यर्थः। शेषधातुपक्षे वधो निपीड़नमिति रमानाथः। तुण्डते पान्थं पिकः।

२८। तुड्शि भेदे। (तुड—तुदा॰ प॰) शि—तुडति, अतुडीत्, तुतोड। उपहनने इति कश्चित्।

२८। थुडशि संवृतौ। (थुड—तुदा॰ प॰) शि—थड़ति, अथुडीत्, तुथोड।

## द्रुड् द्रुड्शि मज्जने द्राड ध्राडृङ् शीर्णौ शि नुड्वधे।

३०। द्रुड् मज्जने। } (द्रुड—भ्वा॰ प॰) (द्रुड—तुदा॰ प॰) द्वौ
३०। द्रुड्शि मज्जने। } रेफयुक्तौ। मज्जनं जलान्तःप्रवेशः। द्रोडति प्रस्तरो जले। दुद्रोडिषति। दुद्रुडिषति। शि—द्रुडति, अद्रुडीत्, दुद्रोड। एतौ कश्चिन्न मन्यते। क्रमदीश्वरस्तु कुटादिमेव मन्यते। (पृथक् पाठात् पूर्व्वो न श्यनुबन्धः)।

३१। द्राडृङ् शीर्णौ। } द्राड—भ्वा॰ आ॰) (ध्राड—भ्वा॰ आ॰)
३२। ध्राडृङ् शीर्णौ। } द्वौ रेफयुक्तौ। ऋ—अदद्राडत्, अदध्राडत्। ङ—द्राडते। ध्राडते। शीर्णिर्विभेदः।

३३। ञि नुड् वधे। (नुड—तुदा॰ प॰) ञि—नुडति, अनुडीत्, नुनोड।

नडक् भ्रंशे पडिङ् गत्यां पड् पिडिक् संहतौ पिडिङ्।
तत्र पीडृक् वाधगाहे पुडि मर्द्दे पृडश् मुदि।

३४। नडक् भ्रंशे। (नड—चु॰ प॰) क—नाडयति। भ्रंशोऽधःपतनम्।

३४। पडिङ् गत्याम्। (पण्ड—भ्वा॰ आ॰) इ—पण्ड्यते। ङ—पण्डते।

३५। पडिक् संहतौ। } (पण्ड—चु॰ प॰) (पिण्ड—चु॰ प॰) इ,
३६। पिडिक् संहतौ। } क—पण्डयति, पिण्डयति। संहतिः राशीकरणम्।

३६। पिडिङ् तत्र। (पिण्ड—भ्वा॰ आ॰) इ—पिण्ड्यते। ङ—पिण्डते। तत्र—संहतौ।

३७। पीडृक् वाधगाहे। (पीड—चु॰ प॰) वाधो विहतिः, गाहो विलोडनम्। ऋ—अपीपिडत्,' अपिपीडत्। (भ्राज भ्रासेति वा ह्रस्वः) क—पीडयति शत्रुं लोकः। पीडयति स्तनं कामी।

३८। पुडि मर्द्दे। ¦(पुण्ड—भ्वा॰ प॰) पञ्चमस्वरी। इ—पुण्ड्यते। मर्द्दश्चूर्णीकरणम्।

३९। पृडश् मुदि। (पृड—तुदा॰ प॰) मुदि हृष्टीकरणे। श—पृडति दीनं दाता। पडिता।

ञि बुड् त्सर्गसंवृत्योर्भडिङ् वाचि भडिक् शिवे।

४०। ञि बुड् उत्सर्गसंवृत्योः। (बुड—तुदा॰ प॰) ञि—बुडति, अबुडीत्, बुबोड।

४१। भडिङ् वाचि। (भण्ड—भ्वा॰ आ॰) परिभाषणे इति गोविन्दभट्टः। परिहासे इति चतुर्भुजः। इ—भण्ड्यते। ङ—भण्डते सिद्धं लोकः।

४१। भडिक् श्रिवे। (भण्ड—चु॰ प॰) श्रिवं कल्याणक्रिया वेदेष्वेव। प्रतारणे प्रसिद्धोऽयम्। इ, क—भण्डयति प्रतारको लुब्ध धनदानाङ्गीकारेण।

**भ्रुड्शि सन्नतिसंहत्यो र्भुडि ङ स्यात् भृतौ वृतौ।**

४२। भ्रुड्शि संवृतिसंहत्योः। (भ्रुड—तुदा॰ प॰) रेफयुक्तः। शि—भ्रुडति, अभ्रुडीत्, बुभ्रोड। अयं कैश्चिन्न मन्यते।

४३। भुडि ङ स्यात् भृतौ वृतौ। (भुण्ड—भ्वा॰ आ॰) पञ्चमस्वरी। इ—भुण्ड्यते। ङ—भुण्डते। भृतिरिह भरणम्। वृतिरन्यैर्न मन्यते।

**म्लेड म्रेड् मेडृ उन्मादे मृड्गश् मोदे मडिक् चकि।**

**मडि भूषे मडि ङ विभागे वेष्टे मुडि ष्छिदि।**

**मर्द्दे मुडि ङ मग्नेऽथ यौड रौडृ तु टान्तवत्।**

४४। म्लेडृ उन्मादे।
४५। म्रेडृ उन्मादे।
४६। मेडृ उन्मादे।
(म्लेड—भ्वा॰ प॰) (म्रेड—भ्वा॰ प॰) (मेड—भ्वा॰ प॰) द्वावाद्यौ क्रमादन्तःस्थतृतीयरेफयुक्तौ। ऋ—अमिम्लेडत्, अमिम्रेडत्, अमिमेडत्। म्लेडति, म्रेडति, मेडति उन्माद्यतीत्यर्थः।

४७। मृड्गश् मोदे। (मृड—क्र्या॰ तुदा॰ प॰) मोद इह हृष्टीभावो हृष्टीकरणञ्च। ग—मृड्नाति सरस्वत्या च यः सदेति हलायुधः। २७१। श—मृडति दीनं दाता। "अमृडित्वा सहस्राचम्" इति भट्टिः। ७। ८६। मर्डिता।

४८। मडिक् च। (मण्ड—चु॰ प॰) इ, क—मण्डयति। चकारान्मोदे।

४८। कि मडि भूषे। (मण्ड—चु॰ भ्वा॰ प॰) कि—मण्डयति, मण्डति हारो जनम्। इ—मण्ड्यते।

४८। मडि ङ विभागे वेष्टे। (मण्ड—भ्वा॰ आ॰) इ—मण्ड्यते। ङ—मण्डते।

४८। मुडि छिदि मर्द्दे। (मुण्ड—भ्वा॰ प॰) पञ्चमस्वरी। इ—मुण्ड्यते। छेद इह लोमच्छेद एव। मुण्डति मुण्डं नापितः लोमरहितं करोतीत्यर्थः।

४८। मुडि ङ मग्ने। (मुण्ड—भ्वा॰ आ॰) पवर्गशेषादिः, पञ्चमस्वरी। मग्नमिति मस्जधातोर्भावेक्त रूपं मज्जनमित्यर्थः। इ—मुण्ड्यते। ङ—

मुण्डते प्रस्तरो जले। चतुर्भुजस्तु मार्ज्जने इति पठित्वा मार्ज्जनं शुचिरिति व्याख्याय "मुण्डते जलेन गात्रं लोकः" इत्युदाहृतवान्।

५०। अथ यौडृ टान्तवत्। | ( यौड—भ्वा० प० ) ( रौड—भ्वा० प० )

५१। रौडृ टान्तवत्। | द्वौ चतुर्दशस्वरिणौ। ऋ—अयुयौडत्, अरु-रौडत्। टान्तवदिति यौडृ सम्बन्धे, रौडृ नादरे इत्यर्थः।

## रोडृ रौडृत् लड् विलासे लड्मोन्मन्थनजिह्वयोः।

५२। रोडृ रौडृत्। ( रोड—भ्वा० प० ) त्रयोदशस्वरौ। ऋ—अरु-रोडत्। रौडृत् अनादरे इत्यर्थः।

५३। लड् विलासे। ( लड—भ्वा० प० ) लडति बाला।

५३। लड् मोन्मन्थनजिह्वयोः। ( लड—भ्वा० घटादिः, प० ) म—लडयति। उन्मन्थनं पीडितीभाव उत्क्षिप्तीभावश्च। लडति लता वायुना, पीडिता उत्क्षिप्ता वा स्यादित्यर्थः। जिह्वा जिह्वाविषयकक्रिया। लडति जिह्वा स्पन्दते इत्यर्थः। ज्वलयति त्वचमुल्ललयत्यसूनिति श्रीहर्षः, पीडयतीत्यर्थः। ४। १०६। कवाटघ्नीमिन्दुः किरणलहरीमुल्ललयतीति मुरारिः। उत्क्षिपतीत्यर्थः। उभयत्र डलयोरैकत्वाल्लत्वम्। केचित्तु जिह्वोन्मन्थने इति पठित्वा जिह्वाया उन्मन्थनमुत्क्षेपणमिति व्याख्याय लडयति जिह्वां सर्प इत्येवोदाहरन्ति। तावत् खरःप्रखरमुल्ललयाञ्चकार इति माघः। ५। ७।

## लड् कोपसेवे लड कड् वीप्से लडि क्वि भाषणे।

५३। लड् कोपसेवे। ( लड—चु० प० ) उपसेव इहात्यन्तपालनम्। क—लालयेत् पञ्च वर्षाणि, पुत्रमिति शेषः। अत्र डलयोरैकत्वाल्लत्वम्। कम्पनायामस्य प्रायःप्रयोग इति रमानाथः। "लाड़यति लतां वायुः।"

५३। लड कड् वीप्से। ( लड—चु० आ० ) क, ङ—लाडयते। लान्त एवायमिति केचित्। विशेषेणाप्तुमिच्छा वीप्सा।

५३। लडि क्वि भाषणे। ( लण्ड—चु० भ्वा० प० ) इ—लण्ड्यते। क्वि—लण्डयति, लण्डति। भाषणं कथनम्। अयं केश्चिन्न मन्यते।

## भ्यो लडि क्यत्क्षेपणे लुड् मन्थे लुडश्चि सङ्गतौ।

श्लेषे लोड् लौडृ उन्मादे लुण्डक् चौर्य्ये विडाक्रुशि।

५३। ओ लडि क्षुत्क्षेपणे। (लण्ड—चु० भ्वा० प०) ओ—लण्डितः। अनुबन्धवत्त्वादिम् व्यवधानेऽपि निष्ठातस्य नः। अस्मान्निष्ठाया इम् नास्तीत्येके, लण्ण इति। इ—लण्डयते। कि—लण्डयति लण्डति तण्डुलान् लोकः।

५४। लुड मन्थे। (लुड—भ्वा० प०) लोडति। मन्थो विलोड़नम्।

५४। लुड शि संवृतौ श्लेषे। (लुड—तुदा० प०) शि—लुडति, अलुडीत्, लुलोड।

५५। लोडृ उन्मादे। (लोड—भ्वा० प०) (लौड—भ्वा० प०)

५६। लौडृ उन्मादे। शेषमतुर्दंशस्वरी। ऋ—अलुलोडत्। अलुलौडत्।

५७। लुण्डक् चौर्य्ये। (लुण्ड—चु० प०) पञ्चमस्वरी। क—लुण्डयति।

५८। विडाक्रुशि। (विड—भ्वा० प०) आक्रुशि आक्रोशने। वेडति शत्रुं बली।

वडिक् विभागे वडिङ वेष्टे च व्रीड् यजि त्रिपि।

लज्जे वाडृङ आप्लावे व्रुड्शि भ्रुडार्थमज्जयोः।

५८। वडिक् विभागे। (वण्ड—चु० प०) इ, क—वण्डयति। अयं केश्चिन्न मन्यते।

५८। वडिङ वेष्टे च। (वण्ड—भ्वा० आ०) इ—वण्डयते। ङ—वण्डते। चकारात् विभागे च।

६०। व्रीड् यजि त्रिपि लज्जे। (व्रीड—दिवा० प०) रेफयुक्तः। य—व्रीड्यति वार्य्या वीर। व्रीड्यति वधूः। ञि—व्रीड़ितोऽस्ति।

६१। वाडृङ आप्लावे। (वाड—भ्वा० आ०) ऋ—अववाडत्। ङ—वाडते लोकः। आप्लावं स्नानम्। उन्मज्जनमित्येके।

६२। व्रुड शि भ्रुडार्थमज्जयोः। (व्रुड—तुदा० प०) रेफयुक्तः। शि—व्रुडति, अव्रुडीत्, वुव्रोड। भ्रुडार्थः (भ्रुडधातोरर्थः) संवृतिसंहती, मज्जो मज्जनम्।

शाडृङ् श्लाघे शौड गर्व्वे शडिङ् सङ्घरुजोः स्थुड।

स्फुड्शि वृत्यां स्फुडिङ्फुल्ले स्फुडिक् नर्म्मणि हुड्शितु।

## मग्ने हुडिङ् च सङ्घे हुड्, हूड क्रूड क्रुडृङ् गतौ।

६३। ग्राडृङ् श्लाघे। (ग्राड—भ्वा० आ०) ऋ—अजग्राडत्। ङ—ग्राडते गुणिनं गुणी।

६४। ग्रौड़ृ गर्व्वे। (ग्रौड—भ्वा० प०) चतुर्दशस्वरी। ऋ—अजुग्रौडत्।

६५। ग्रडिङ् सङ्घरुजोः। (ग्रण्ड—भ्वा० आ०) तालव्यादि। इ—ग्रण्ड्यते। ङ—ग्रण्डते काण्डो वीरं, रुजतीत्यर्थः।

६६। स्थुड शि वृत्याम्। } (स्थुड—तुदा० प०) (स्फुड—तुदा० प०)

६७। स्फुड शि वृत्याम्। } शि—स्थुडति, अस्थुडीत्, तुस्थोड। स्फुडति, अस्फुडीत्, पुस्फोड। वृत्या संवरणे।

६७। स्फुडिङ फुल्ले। (स्फुण्ड—भ्वा० आ०) फुल्लं विकसनम्। इ—स्फुण्ड्यते। ङ—स्फुण्डते कुन्दकोरकः। पुस्फुण्डे।

६७। स्फुडिक् नर्म्मणि। (स्फुण्ड—चु० प०) पञ्चमस्वरी। नर्म्म परिहासः। इ, क—स्फुण्डयति सखाय लोकः। पुस्फुण्डयिषति। अयमाद्यस्वरीति कातन्त्राद्याः। पञ्चमस्वरोऽनार्ष इति गोविन्दभट्टः।

६८। हुड् शि तु मग्ने। (हुड—तुदा० प०) शि—हुड्ति, अहुडीत्, जुहोड। मग्नं मज्जनम्।

६८। हुडिङ् च सङ्घे। (हुण्ड—भ्वा० आ०) पञ्चमस्वरी। इ—हुण्ड्यते। ङ—हुण्डते धन लोक, राशीकरोतीत्यर्थः। चकारात् हुडशि च (सङ्घार्थकः)।

६८। हुडृङ् गतौ। } (हुड—भ्वा० आ०) (हूड—भ्वा० आ०) (क्रूड—

६९। हूडृङ् गतौ। } भ्वा० आ०) (क्रुड—भ्वा० आ०) मध्यमौ

७०। क्रूडृङ् गतौ। } षष्ठस्वरिणौ, शेषौ द्वौ रेफयुक्तौ। ऋ—अजु-

७१। क्रुडृङ् गतौ। } होडत्, अजुहूडत्, अजुक्रूडत्, अजुक्रोडत्। ङ—होडते, हूडते, क्रूडते, क्रोडते।

## हौड क्रौडृङ् च ह्रिडिङ होडृङ् ऊपिङ हेड्ृ च।

## अनादरे हिड् म वेष्टे डान्ताः षट्सप्ततिर्मताः।

७२। ह्लीडृङ् च। } (ह्लीड—भ्वा० आ०) (व्रीड—भ्वा० आ०) ह्लौ
७३। व्रीडृङ् च। } चतुर्दशस्वरिणौ, शेषो रेफयुक्तः। ऋ—अजुह्लीडत्। अजुव्रीडत्। ङ—ह्लीडते। व्रीडते। चकारात् गतौ।

७४। ह्लिडिङ्डपि। } (ह्लिण्ड—भ्वा० आ०) (ह्लोड—भ्वा० आ०)
७५। ह्लोड़ङ्डपि। } ङ—ह्लिण्डते। ङ—ह्लिण्डते। ऋ—अजुह्लोडत्। ङ—ह्लोडते, जुह्लोडे। अपिशब्दात् गतौ। "ह्लिण्डन्ते च यथा रात्रौ" इति हलायुधः। (१११)।

७६। ङ हेडृ च अनादरे। (हेड—भ्वा० आ०) ङ—हेडते, जिहेडे। ऋ—अजिहेडत्। चकारात् ह्लिडिङ् ह्लोडृङ् च (अनादर इत्यर्थः)। "हेडते शीलसम्पन्नो बान्धवानपि तानसौ।" इति हलायुधः (१११)।

७६। हेड्म वेष्टे। (हेड—भ्वा० प०) हेडति। म—ह्लिडयति। अहिडि अहीडि। हिडं हिडं, हीडं हीडम्। एकारस्य ह्रस्वविधाने कण्ठ्यत्वेन समानोऽप्यकारो न स्यात्, एचोयुत् स्वमिति नियमादिकार एव स्यात्। इकारस्य दीर्घविधौतु ईकार एव, एकारस्यांशिककण्ठ्यत्वेन विरुद्धत्वात्। केचित्तु दीर्घपक्षे गुणं विधाय (गुणविधानेनैव दीर्घपक्षावस्थानादित्यर्थः) अहिड़ि अहेड़ीत्यादि मन्यन्ते।

## डान्ताः षट्सप्ततिर्मताः।

(डकारान्ता धातवः षट्सप्ततिसंख्यका ज्ञाताः)

—०—

## ढान्तवर्गः।

### ढुण्ढान्वेषण इत्येको ढकारान्तः प्रकीर्त्तितः।

१। ढुण्ढान्वेषणे। (ढुण्ढ—भ्वा० प०) ढाद्यन्तः पञ्चमस्वरी दन्त्यनोपधः, ढयोगान्मूर्द्धन्यस्तेन ढुण्यत इत्यादि। ढुण्ढति धनं लोकः।

### इत्येको ढकारान्तः प्रकीर्त्तितः।

——

## णान्तवर्गः ।

### अण् रवेऽण् यङ् प्राण ऋण् दुञ् गतावोणृपसारणे ।

१। अण् रवे। (अण—भ्वा० प०) अणति। रवः शब्दः।

१। अण् यङ् प्राणे। (अण—दिवा० आ०) य, ङ—अण्यते जनो जीवतीत्यर्थः।

२। ऋण् दुञ् गतौ। (ऋण—तना० उ०) द, ञ—ऋणोति, अर्णोति, ऋणुते अर्णुते। उ—अर्णित्वा ऋत्वा। (इट्पक्षे सेमत्तुधक्तुषक्लिशेति कित्त्व-निषेधे गुणः, इटोऽभावपक्षे वनतनेति अम्लोपः)।

३। ओणृ अपसारणे। (ओण—भ्वा० प०) ऋ—मा भवान् ओणिणत्। ज्ञापकज्ञापिता विधयो अनित्यमनुसरन्तीति न्यायादस्य ऋदनुबन्धो ज्ञापयति, ञराङि परे धातूनामादौ ह्रस्वः पश्चाद्द्वित्वमिति। आदौ द्वित्वे दीर्घोपधाया असम्भवादेव ह्रस्वाभावे ऋदनुबन्धो व्यर्थः स्यात्। अटगतावित्यादीनान्तु मा भवान् अटिटदित्यादि बोध्यम्। अपसारणमपनयनम्। ओणति धनं चौरः।

### कणृ आर्त्तस्वरे कण्म गतौ कण्क निमीलने ।

४। कणृ आर्त्तस्वरे। (कण—भ्वा० प०) ऋ—अचीकणत् अचकाणत्। (भ्राजभासभासेति वा ह्रस्वः)। कणति भीतः।

४। कण्म गतौ। (कण—भ्वा० प०) म—कणयति।

४। कण्क निमीलने। (कण—चु० प०) निमीलन पक्ष्मभिश्चक्षुष आवरणम्। क—काणयति चक्षुः, पक्ष्मभिरावृतंस्यादित्यर्थः।

### कुण् शोपकरणे क्वण् च शब्दे कूण् काङ सङ्कुचि ।

५। कुण् शोपकरणे। (कुण—तुदा० प०) उपकरणं दानादिना पोषणम्। श—कुणति दीनं दयालुः। कोणिता।

६। क्वण् च शब्दे। (क्वण—भ्वा० प०) चकारयुक्तः। क्वणति वीणा। चकारात् कुण्श च (शब्दार्थकः) (अस्त्राणिकुशुरतोत्साहाः। यातुधाना इति शेष इति भट्टिः। ८। ११)।

७। कूण् काङ सङ्कुचि। (कूण—चु० आ०) षष्ठस्वरी। क, ङ—कूणयते चक्षुः, सङ्कुचितं स्यादित्यर्थः। पक्ष्मसङ्कोचने।

क्षणु चिणु दुञ् वधे घणु घृणु दुञ् दीप्तौ घृणि घिणि घुणि ङ् ।
ग्रहणे घुणाङ् घुणश घूर्णञ्श भ्रमणे चण ।
शब्दे चणमि गतौ हिंसे चणम दाने शि चुण छिदि ।

८। क्षण दुञ वधे। ) ( क्षण—तना० उ० ) ( क्षिण—तना० उ० )
९। क्षिण दुञ वधे। ) द, ञ—क्षणोति क्षणुते। क्षिणोति क्षिणुते।
उ—क्षणित्वा, क्षत्वा। क्षेणित्वा क्षित्वा।

१०। घण दुञ दीप्तौ। ) ( घण—तना० उ० ) ( घृण—तना० उ० )
११। घृण दुञ दीप्तौ। ) द, ञ—घणोति घणुते। घृणोति, घर्णोति,
घृणुते, घर्णुते। ( नोप्युङोणुर्वाल्ल्वृत इत्यनेन वैकल्पिकगुणनिषेधः )। उ—
घणित्वा घत्वा। घर्णित्वा घृत्वा।

११। घृणिङ ग्रहणे। ) ( घृण—भ्वा० आ० ) ( घिण—भ्वा० आ० )
१२। घिणिङ ग्रहणे। ) (घुण—भ्वा० आ०) त्रयः क्रमात् सप्तमद्वतीय-
१३। घुणिङ ग्रहणे। ) पञ्चमस्वरिणः। इ—घृण्णते, घिण्णते, घुण्णते।
ङ—घृणते, घिणते, घुणते। जरीघृण्णते, जेघिण्णते, जोघुण्णते।

१३। घुणङ भ्रमणे। ) ( घुण—भ्वा० आ० ) ( घुण—तुदा० प० )
१३। घुणश भ्रमणे। ) ( घूर्ण—तुदा० उ० ) ङ—घोणते। श—
१४। घूर्णञ श भ्रमणे। ) घुणति, घोणिता। ञ—घूर्णति घूर्णते।
जुघूर्ण चक्रम्। श—घूर्णन्ती घूर्णती। अत्र भ्रान्तैर्मध्यमः कुटादौ पठ्यते,
तद्वेयमन्येषामसम्मतत्वात्, तथात्वे परस्थितानुबन्धस्य पूर्वेण सम्बन्धापत्तेश्च।

१५। चण शब्दे। ( चण—भ्वा० प० ) चणति।
१५। चण मि गतौ हिंसे। (चण—भ्वा० प०) मि—चणयति, चाणयति।
१५। चणम दाने। ( चण—भ्वा० प० ) चणयति।
१६। शि चुण छिदि। ( चुण—तुदा० प० ) शि—चुणति, अचुणीत्,
चुचोण।

चूर्णक् पेषे चूण तूणक् सङ्कोचेक् तूणङ् पूरणे ।

१७। चूर्णक् पेषे। (चूर्ण—चु० प०) एतदाद्याश्चत्वारः षष्ठस्वरिणः
पेषश्चूर्णीकरणम्। क—चूर्णयति तण्डुलान् शिला।

१८। चूणक् सङ्कोचे। ⎫ (चूण—चु० प०) (तूण—चु० प०) द्वौ
१९। तूणक् सङ्कोचे। ⎭ क्रमात्तालव्यदन्त्यवर्गाद्यादी। क—चूणयति, तूणयति चक्षुः, सङ्कुचितं स्यादित्यर्थः।

१९। क तूणङ पूरणे। (तूण—चु० आ०) क, ङ—तूणयते।

## तृण् तृञ् भक्षे तुण् श जैह्म्ये द्रुण् श जैह्म्ये वधे गतौ।

२०। तृण् तृञ् भक्षे। (तृण्—तना० उ०) द, ञ—तृणोति, तर्णोति, तृणुते, तर्णुते। उ—तर्णित्वा तृत्वा।

२१। तुण् श जैह्म्ये। (तुण—तुदा० प०) जैह्म्यमिह कुटिलीकरणम्। श—तुणति तृणं वायुः। तोणिता।

२२। द्रुण् श जैह्म्ये वधे गतौ। (द्रुण—तुदा० प०) दन्त्यवर्ग तृतीयादिः। श—द्रुणति। दुद्रोणिषति। जैह्म्यं कुटिलीकरणम्। "द्रुणति प्रहृतो यस्य दिङ्मुखेषु रिपुव्रज" इति हलायुधः। २४०। द्रुणति गच्छति पलायते इत्यर्थः।

## धण ध्वण भ्रण ध्वाने पणङ् व्यवहृतौ स्तुतौ।

२३। धण ध्वाने। ⎫ (धण—भ्वा० प०) (ध्वण—भ्वा० प०)
२४। ध्वण ध्वाने। ⎬ (भ्रण—भ्वा० प०) शेषौ वकाररेफयुक्तौ
२५। भ्रण ध्वाने। ⎭ क्रमात्। धणति, ध्वणति, भ्रणति मृदङ्गः।

२६। पणङ् व्यवहृतौ स्तुतौ। (पण—भ्वा० आ०) व्यवहारे, ङ—पणते पणायति पणायते। आयान्तत्वादुभयपदमिति वोपदेवः। "प्राणानामपणिष्टासौ" इति भट्टिः। ८। १२१। अत्र कर्म्मणि षष्ठी। (पणिर्व्यवहारे इति षष्ठ्यर्थं परसूत्रम्। तत्र व्यवहारे क्रयविक्रयलक्षणे द्यूतक्रियायाञ्चेति तट्टीकायां भरतः।) स्तुतौ तु पणायति पणायते विष्णुं धीरः। अरे तु द्वयोरर्थयोरेव आयस्याप्राप्तिपक्षे आत्मनेपदमेव। अपणिष्ट, पेणे, पणिता, पणिषीष्ट, पणिष्यते, अपणिष्यत। ("न चोपलेभे वणिजां पणाया" इति भट्टिः। ३। २७)।

## पेषृ पेषे गतौ श्लेषे पुणश् धर्म्मे पृणश् तृपि।

२७। पेषृ पेषे गतौ श्लेषे। (पेष—भ्वा० प०) ऋ—अपिपेषत्। पिपेषतुः। पेषश्चूर्णीकरणम्।

२८। पुणश् धर्म्मे। (पुण—तुदा० प०) शुभक्रियायामित्यर्थे। श—पुणति शुभं लोकः। पोणिता।

२९। मृण श् हपि। (मृण—तुदा० प०) हपि हसीकरणे। श—धर्म्मं मृणति यो द्विजः। मर्णिता।

## पूणक् सङ्घाते फण ण निस्नेहे फण् मिण गतौ।

३०। पूणक् सङ्घाते। (पूण—चु० प०) षष्ठस्वरी। क—पूणयति धान्यं लोकः, राशीकरोतीत्यर्थः। अयं कैश्चिन्न मन्यते।

३१। फण ण निस्नेहे। (फण—भ्वा० प०) ण—फेणतुः, पफणतुः। निस्नेहोऽनायासेनोत्पत्तिः। फणति वाञ्छितं श्रीमताम्, अनायासेनोत्पद्यते इत्यर्थः। अस्यैव अग्न्तस्य निष्ठायां फाण्टम्। "अनायासकृतं फाण्टम्" इत्यमरः।

३१। फण मिण गतौ। (फण—भ्वा० प०) मि—फणयति, फाणयति। ण—फेणतुः, पफणतुः।

## ब्रण्वण् भ्रण् शब्दे ऋभण् चभ्रूण् कङ्क्षाशाविशङ्कयोः।

| | |
|---|---|
| ३२। ब्रण शब्दे। | (ब्रण—भ्वा० प०) (वण—भ्वा० प०) |
| ३३। वण शब्दे। | (भ्रण—भ्वा० प०) आद्यन्तौ रेफयुक्तौ। |
| ३४। भ्रण शब्दे। | ब्रणति, वणति, भ्रणति। |

३५। ऋ भण् च। (भण—भ्वा० प०) ऋ—अबीभणत्, अबभाणत्। चकारात् शब्दे। स चेह व्यक्तवाक्यम्। "श्रीजयदेवे कृतहरिसेवे भणति परमरमणीयम्"।

३६। भ्रूण् कङ् आशाविशङ्कयोः। (भ्रूण—चु० आ०) रेफयुक्तः षष्ठस्वरी। ण, ङ—भ्रूणयते भद्रं लोकः, प्रत्याशाविषयं करोतीत्यर्थः। (भ्रूणः, "भ्रूण आशंसायां चुरादेर्घञ्" इति अमरटीका)। भ्रूणते स्त्री वा पुमान् वेत्याशङ्कतेऽसावित्यर्थो वा।

## मण् कूजेश् मुण् प्रतिज्ञाने मृणश् हिंसे रणम् गतौ।

३७। मण कूजे। (मण—भ्वा० प०) मणति। कूजे अव्यक्तशब्दे।

३८। श मुण प्रतिज्ञाने। (मुण—तुदा० प०) श—मुणति व्रतं लोकः, प्रतिजानीते इत्यर्थः। मोणिता।

३९। क्षणम् हिंसे। (क्षण—तुदा॰ प॰) पवर्गशेषादिः। म—क्षणति। मर्षिता। युद्धे—"क्षणति वारणान्" इति हलायुधः। (१०५)।

४०। रणम् गतौ। (रण—भ्वा॰ प॰) म—रणयति।

**रण् व्रण् रुत्यॄ वण् च वृण् दुञ् भक्षे वेणृञ् निशामने।**

**वादित्रादान-गमन-ज्ञान-चिन्तासु वर्णक।**

**वर्णे शोणृगतेऽस्मिन् शण् श्रण् म दाने श्रणक् तथा।**

४०। रण् रुति। } (रण—भ्वा॰ प॰) (व्रण—भ्वा॰ प॰) पूर्वो-
४१। व्रण रुति। } रेफादिः शेषो रेफयुक्तवकारादिः। रणति। व्रणति। रुति शब्दे।

४२। ऋ वण् च। (वण—भ्वा॰ प॰) ऋ—अवीवणत्, अववाणत्। चकारात् रुति।

४३। वृण् दुञ् भक्षे। (वृण—तना॰ उ॰) द, ञ—वृणोति, वर्णोति, वृणुते, वर्णुते। उ—वर्णित्वा, वृत्वा।

४४। वेणृञ् निशामने वादित्रादानगमनज्ञानचिन्तासु। (वेण—भ्वा॰ उ॰) ऋ—अविवेणत्। ञ—वेणति, वेणते। विवेणे। निशामनं चाक्षुषज्ञानम्। वादित्रं मुरजादि, तस्यादानं ग्रहणं वादित्रादानम्। केचित्तु वादित्रं वादित्रविषया क्रिया इत्येकोऽर्थं इत्याहुः।

४५। वर्णक वर्णे। (वर्ण—चु॰ प॰) वर्णयति। अयं केश्चिन्न मन्यते (वर्णत्क इत्यदन्तचुरादिनैव सिद्धेः)।

४६। शोणृ गतेऽस्मिन्। (शोण—भ्वा॰ प॰) ऋ—अशुशोणत्। अस्मिन् वर्णे। वर्णश्चेह रक्तवर्णीभावः। शोणति सूर्य्यः सन्ध्यायाम्।

४७। शणम दाने। } (शण—भ्वा॰ प॰) (श्रण—भ्वा॰ प॰) शेषो
४८। श्रणम दाने। } रेफयुक्तः। म—शणयति, श्रणयति। "विश्रणन्ति च तेऽप्यस्मै सत्यवाचः सदाशिषः" इति हलायुधः। (१७०)।

४८। श्रणक् तथा। (श्रण—चु॰ प॰) रेफयुक्तः। क—श्राणयति। तथा दाने। क्षमतेऽस्य अरुङि ह्रस्वविकल्पेऽप्यष्टमस्वरानुबन्धाभावः केषाञ्चि-

दनुरोधात्। "विश्राणयति यः श्रीमान् विप्रेभ्यो विपुलं वसु" इति हलायुधः। (१७०)।

**श्रोण श्लोणृतु सङ्घाते णान्ताः पञ्चाशदीरिताः।**

४९। श्रोणृ सङ्घाते। | (श्रोण—भ्वा० प०) (श्लोण—भ्वा० प०) द्वौ
५०। श्लोणृ सङ्घाते। | तालव्यादी, क्रमाद्रेफान्तःस्थतृतीययुक्तौ च।

लङ—अशुश्रोणत्, अशुश्लोणत्। सङ्घातो राशीकरणम्।

**णान्ताः पञ्चाशदीरिताः।**

(पञ्चाशत्संख्यका णकारान्ता धातवः कथिताः)।

—०—

## तान्तवर्गः।

**अत् सातत्यगतेऽतीति बन्धे ऋत् स्पर्द्धनैश्वर्ययोः।**
**घृणागत्योः कृतीध् वेष्टे कृती शप च्छिदि कृतक्।**
**संशब्दे कित् संशयेच्छावासारोग्ये र्लि कित् मतौ।**

१। अत् सातत्यगतौ। (अत—भ्वा० प०) सातत्यगतं नैरन्तर्य्येण भ्रमणं प्रापणञ्च। अतति वायुः। अतति सूर्य्यो गगनं, सततं प्राप्नोतीत्यर्थः।

१। अति बन्धे। | (अन्त—भ्वा० प०) (इन्त—भ्वा० प०) द्वौ
२। इति बन्धे। | दीर्घादिः। इ—अन्त्यते। इन्त्यते।

३। ऋत् स्पर्द्धनैश्वर्ययोः घृणागत्योः। (ऋत्—भ्वा० प०) घृणा दया। ऋतीयते जनः, स्पर्द्धते, ईश्वरो भवति, कश्चिद्दयते, गच्छति वेत्यर्थः। मते तु ईयङोऽप्राप्तिपक्षे परस्मैपदमेव। आर्त्तीत् आनर्त्त इत्यादि।

४। कृतीध् वेष्टे। (कृत—रुधा० प०) ई—कृत्तः। ध—कृणत्ति। चकर्त्त।

४। कृती श प च्छिदि। (कृत—तुदा० प०) ई—कृत्तः। श, प—कृन्तति। चकर्त्त। नृत्कृत्चृदित्यादिना वेमत्वादेव निष्ठाया अनिमत्वे सिद्धे अस्य पूर्वस्य च ईदनुबन्धो नेम् डीङ्खीत्यस्य व्यभिचारसूचनार्थः। तेन धावुक्ष अवे मृजीत्यादीनां "धाविताः पान्यसार्था" इत्यादि सिद्धमिति रमानाथः।

मनितं कुतितमित्यादि सिद्धमिति क्रमदीश्वरः। केचित्तु धावनं धावः सोऽस्य जातो धावित इत्यादि समाधाय इंदित्करणमाश्चर्य यङ्लुकि निष्ठायां इम्निषेधार्थं, तेन चरीकृत्तमित्याहुः। "विरहिनिकृन्तनकुन्तमुखाकृतिकेतकि-दन्तुरिताशे" इति जयदेवोक्तं निकृन्तनं करोतीति णन्तात् औ नन्द्यादित्वा-दनप्रत्यये साध्यम्। "यं कृणत्ति गुणग्रामः कृन्तत्यरिश्रियांसि य" इत्युभयत्र हलायुधः। (१२२)।

५। कृतक संशब्दे। (कृत—चु० प०) दीर्घी। क—"कीर्त्तयन्ति च गोष्ठीषु यद्गुणानप्सरोगणाः" इति हलायुधः। १२२। कीर्त्तादेशस्य नित्यत्वेऽपि कृत-पाठः कीर्त्तादेशस्य क्वचित् व्यभिचारसूचनार्थः, तेन अचीकृतदित्यादि सिद्धम्। (अचिकीर्त्तदित्यपि, तेन "अपप्रथद्गुणान् भ्रातुरचिकीर्त्तच्च विक्रमम्" इति भट्टिः। १५। ७२)।

६। कित् संशयेच्छावासारोग्ये। (कित्—भ्वा० प०) विचिकित्सति मनः, संशेते इत्यर्थः। आरोग्ये—चिकित्सत्यातुरं वैद्यः। इच्छानिवासयोस्तु केतति इति वोपदेवः। तत्र तिवादयो न प्रयुज्यन्ते इति रमानाथः। "इति न वनिता मैत्रीं हन्तुं मनो विचिकित्सते" इति तु अन्तर्भूतण्यर्थतया कर्म्म-कर्त्तरि सनश्रन्थग्रन्थेत्यादिना यको निषेधे सिद्धम्।

६। लिंकित् मतौ। (कित्—ह्वा० प०) र—वैदिकः। लि—चिकेत्ति।

## चतेञ् याचे चिती ज्ञाने चितकङ् च चितिक् स्मृतौ।

७। चतेञ् याचे। (चत—भ्वा० उ०) ए—अचतीत्। ञ—चतति चतते।

८। चिती ज्ञाने। (चित—भ्वा० प०) ई—चित्त। ज्ञानमिह जागरणं ज्ञानञ्च। "अविद्यानिद्रयाक्रान्ते जगत्येकः स चेतति" इति हलायुधः। १२६। "चिचेत रामस्तत्कृच्छ्रम्" इति भट्टिः। १४। ६२। (कृच्छ्रं नागपाशबन्धन-रूपं, चिचेत ज्ञातवान्)।

८। चितक ङ् च। (चित—चु० आ०) क, ङ—चेतयते। चकारात् ज्ञाने। "तवोपशायिका यावद्राक्षस्यश्चेतयन्ति न" इति भट्टौ। (८। १२३) गणकृतानित्यत्वादात्मनेपदम्। चेतनं चेतस्तं करोतीति औ वा साध्यम्। (कादम्बरीरसभरेण समस्त एव मत्तो न किञ्चिदपि चेतयते जनोऽयमिति कादम्बर्यां उत्तरखण्डप्रारम्भे मन्यकृदुक्तिः)।

८। चितिक् स्मृतौ। (चिन्त—भ्वा० प०) इ, क—चिन्तयति विष्णुं सुधीः।

**चृत् कि सन्दीपने चृत् श हिंसे ग्रन्थे चुत च्युतिर्।**

**क्षरणे जुत् ज्युतृङ् द्युत्यां ज्युतिश्चाथ द्युत्लृङ्ङपि।**

९। चृत् कि सन्दीपने। (चृत्—चु० भ्वा० प०) कि—चर्त्तयति, चर्त्तति।

९। चृत् श हिंसे ग्रन्थे। (चृत्—तुदा० प०) श—चृतति। चर्त्तिता। ग्रन्थो ग्रन्थनम्।

१०। चुतिर क्षरणे। (चुत—भ्वा० प०) (च्युत—भ्वा० प०) शेषो-

११। च्युतिर क्षरणे। ऽन्तःस्थादियुक्तः। इर्—अचुतत्, अचोतीत्। अच्युतत्, अच्योतीत्। क्षर इह आसेचनम्। चोतति, च्योतति घृतमग्नौ यज्वा।

१२। जुतृङ् द्युत्याम्। (जुत—भ्वा० आ०) (ज्युत—भ्वा० आ०)

१३। ज्युतृङ् द्युत्याम्। शेषाद्यास्तयोऽन्तःस्थादि युक्ताः। ऋ—अजु-जोतत्, अजुज्योतत्। ङ—जोतते, ज्योतते चन्द्रः।

१३। ज्युतिच। (ज्युत—भ्वा० प०) इर्—अज्युतत्, अज्योतीत्। चकारात् द्युत्याम्।

१४। अथ द्युत् लृ ङ्ङपि। (द्युत—भ्वा० आ०) लृ—अद्युतत्। ङ—द्योतते। दिद्युते। अपि शब्दात् द्युत्याम्।

**नृतय नर्त्ते पतय ऐश्वर्ये पत्लृज् गत्याञ्च पुस्तक।**

**बन्धे बुस्तक् च नादृत्यादृत्योर्मुस्त क संहतौ।**

१५। नृतय नर्त्ते। (नृत—दिवा० प०) य—नृत्यति नर्त्तकः।

१६। पतय ऐश्वर्ये। (पत—दिवा० आ०) य, ङ—पत्यते। ऐश्वर्यमी-श्वरीभावः।

१६। पत् लृज गत्याञ्च। (पत—भ्वा० प०) लृ—अपतत्। ज—पातः पतः (टुनोभूज्वलाद्येति विभाषया णप्रत्ययः।) गतिरिह पतनम्। पतति पत्रं वृक्षात्। चकारादैश्ये च।

१७। पुस्तक बन्धे। (पुस्त—चु० प०) एतदाद्यास्त्रयः पञ्चमस्वरिणो दन्त्यसोपधाः। क—पुस्तयति।

१८। कुस्तक् च माहत्याहत्योः। (कुस्त—चु० प०) माहतिरनादरः। क—कुस्तयति खलं लोकः। कुस्तयति धीरं सुधीः। चकारात् पुस्तक च (माहत्याहत्यर्थकः)।

१९। सुस्त क सहती। (सुस्त—चु० प०) पवर्गशेषादिः। क—सुस्तयति।

**यत् क खेदोपस्करयोर्निरः प्रत्यर्पणे यतीङ्।**

**यत्ने युतङ दीप्तौ वृत् कच वृत् ङुवृत्लृ वर्त्तने।**

२०। यत्क खेदोपस्करयोः। (यत्—चु० प०) खेद इह ताड़नम्। क—यातयति पुत्रं पिता, ताड़यतीत्यर्थः। यातयति गृहं गृहिणी, उपस्करोतीत्यर्थः।

निरः प्रत्यर्पणे। (निरुपसर्गात् यातिधातुः प्रत्यर्पणेऽर्थे प्रयुज्यते इत्यर्थः)। प्रत्यर्पणं परिवर्त्तः। "निर्यातयति धान्येन माषं लोकः," धान्यं गृहीत्वा माषं ददातीत्यर्थः।

२०। यतीङ यत्ने। (यत—भ्वा० आ०) ई—यत्तः। ङ—यतते पठितुं शिष्यः।

२१। युतङ दीप्तौ। (युत—भ्वा० आ०) अ—अयुयोतत्। ङ—योतते।

२२। वृतक च। (वृत—चु० प०) क—वर्त्तयति। चकारात् दीप्तौ।

२२। वृत ङुवृत्लृ वर्त्तने। (वृत—भ्वा० आ०) ङ—वर्त्तते। उ—वर्त्तित्वा वृत्त्वा। व—वर्त्स्यति, विवृत्सति। (वृद्भ्योनेम् पे स्यसनोर्वात्वमे इत्युक्तेः। मे—वर्त्तिष्यते। मादन्यत्र विवर्त्तिषा विवृत्सा)। लृ—अवृतत्।

**वृत् वावृत्युङ सम्भक्तौ वरणे वस्तकङ् बधे।**

२२। वृत् युङ सम्भक्तौ वरणे। } (वृत्—दिवा० आ०) (वावृत्—

२३। वावृत् युङ सम्भक्तौ वरणे। } दिवा० आ०) य, ङ—वृत्यते, वावृत्यते। ङ—वर्त्तित्वा, वृत्त्वा, वावर्त्तित्वा, वावृत्त्वा। सम्भक्तिः सेवनम्।

२४। वस्त कङ् बधे। (वस्त—चु० आ०) दन्त्यसोपधः। क, ङ—वस्तयते। गतिहिंसायाचनेष्विति केचित्।

**लृभ्वितङ् मौक्ते स्नुत्स्रुगतिर् स्यात् चरे मस्तपस्तिलुर्।**

**स्वप्ने ध्वर्त्तस्वर्त्तक् गत्यां तङ्के तास्ति मदेकतः।**

२५। लृक्षिताङ् मोक्षेय। (क्षित—भ्वा० आ०) वकारयुक्तः। लृ—अक्षितत्। आ—क्षितितं क्षित्तं तेन, प्रक्षितितः प्रक्षित्तः सः। ङ—क्षेतते प्रासादः। "अजस्रमम्बुभिः मयूखैर्वा धौतमिवाधिकम्। यदुच्चयः क्षेतते दिक्षु" इति हलायुधः। (२२६)।

२६। श्चुतिर स्यात् चरे। } (श्चुत—भ्वा० प०) (श्चुग्त—भ्वा० प०)

२७। श्चुग्तिर,स्यात् चरे। } द्वौ तालव्यवर्गाद्ययुक्ततालव्यादी, शेषोऽन्तःस्थादियुक्तश्च। नकारजावनुस्वारपञ्चमावित्यादिनियमेऽप्यनयोस्तालव्यादित्वं, तद्वचनस्य व्यभिचारसूचनार्थम्। तेन चुलुम्पलोपे इत्यादीनामोष्ठ्यवर्गशेषोपधत्वं सङ्गच्छते। तेन क्विपि संयोगान्तलोपे चुलुम् इत्यादि सिद्धम्। किन्तु द्वौ दन्त्यादी इति धातुप्रदीपक्रमदीश्वरौ। तन्मते घृतं श्चोततीति घृतश्चुग्त्, तमाचष्टे इति णौ ओमंश्वेति डित्त्वाट्टिलोपे हसात्लोप इति यलोपे घृतश्चयतीति पुनः क्विपि णेर्लोपे घृतस्क् इति स्थिते संयोगादेः सस्य लोपे घृतक् इति। इर्—अश्चुतत् अश्चोतीत्, अश्चुग्तत् अश्चग्तीत्। चर इह आसेचनं चरणञ्च। "रक्तमश्चोतिषुः लुषाः" इति भट्टिः। १५। ५१। (कपयः लुषाः खण्डिताः सन्तो रक्तं चरन्तिस्म इत्यर्थः)। इदं,कवचमश्चोतीदिति। "निश्चोतन्ते सुतनु कवरीविन्दवो यावदेते" इति मालत्यां गणकृतानित्यत्वात्।

२८। शस्ति लुर स्वप्ने। } (शन्स्त—अदा० प०) (षन्स्त—अदा०

२९। षस्ति लुर स्वप्ने। } प०) द्वौ क्रमात्तालव्यमूर्द्धन्यादी, दन्त्यसोपधौ च। इ—शंस्यते, संस्यते। समध्यपाठेऽपि नस्योपान्त्यत्वाभावादेव लोपासम्भवे इदनुबन्धो वेदेषूच्चारणभेदार्थः। लु—शंस्ति संस्ति। र—वैदिकः।

३०। ष्वर्त्तक् गत्यां तङ्के। } (ष्वर्त्त—चु० प०) (स्वर्त्त—चु० प०)

३१। स्वर्त्तक् गत्यां तङ्के। } द्वौ क्रमात् वकारयुक्तमूर्द्धन्यदन्त्यादी। तङ्को दुःखेन जीवनम्। क—स्वर्त्तयति जनो, गच्छति, दुःखेन जीवति वेत्यर्थः। सिष्वर्त्तयिषति, सिस्वर्त्तयिषति।

## तास्त्रिंशदेकतः।

एकत एकेन सहेत्यर्थः।

(तास्तकारान्ता धातव एकत्रिंशत्संख्यका इत्यर्थः)।

---

## थान्तवर्गः ।

**क्नथेज् निष्पचने क्रथ्क प्रतिहर्षेऽथ कि क्रथ ।**
**क्रथ क्लथ क्नथ्म बधे कुथि क्लेशे च कुथ् य तु ।**
**पूतित्वे कत्थङ स्लाघे कुन्थ क्रुन्थग् श्लिषि क्लिशि ।**

१ । क्नथेज् निष्पचने । ( क्नथ—भ्वा॰ प॰ ) नकारयुक्तः । ए—अक्नथीत् । ञ—क्नाथः, क्नथः । क्नथयति वैद्य औषधं, निष्पचतीत्यर्थः ।

२ । क्रथ्क प्रतिहर्षे । ( क्रथ—चु॰ प॰ ) रेफयुक्तः । प्रतिहर्षः पुनः पुनः हृष्टीकरणम् । क—क्राथयति शिशुं लोकः, पुनः पुनः हर्षयतीत्यर्थः ।

२ । अथ कि क्रथ बधे ।
१ । क्रथम बधे ।
३ । क्लथम बधे ।
४ । क्नथम बधे ।

( क्रथ—चु॰ भ्वा॰ प॰ ) ( क्रथ—भ्वा॰ प॰ ) ( क्लथ—भ्वा॰ प॰ ) ( क्नथ—भ्वा॰ प॰ ) द्वावाद्यौ रेफयुक्तौ । पुनः पाठात् पूर्व्वौ न मित् । शेषौ क्रमादन्तःस्थतृतीयदन्त्यवर्गशेषयुक्तौ । कि—क्राथयति क्रथयति । म—क्रथयति, क्लथयति, क्नथयति ।

५ । कुथि क्लेशे च । ( कुन्थ—भ्वा॰ प॰ ) पञ्चमस्वरी । इ—कुन्थते । क्लेशो दुःखानुभवः । “शीतार्त्तश्च न कुन्थति” इति हलायुधः । ( १२४ । ) यस्य राष्ट्रे जन इति शेषः ) । चकारात् बधे ।

५ । कुथ्य तु पूतित्वे । ( कुथ—दिवा॰ प॰ ) पूतित्वं दुर्गन्धीभावः । य—कुथ्यति मीनो दुर्गन्धःस्यादित्यर्थः । चुकोथ । “यस्य राष्ट्रे धनाढ्यो वा मृत कोऽपि न कुथ्यति” इति हलायुधः । ( १२४ । ) न कुथ्यति न पूतिगन्धमावहतीत्यर्थः ।

६ । कत्थङ श्लाघे । ( कत्थ—भ्वा॰ आ॰ ) दन्त्यवर्गाद्योपधः । श्लाघः प्रशंसा । ङ—कत्थते गुणिन गुणी ।

७ । कुन्थग् श्लिषि क्लिशि ।
८ । क्रुन्थग् श्लिषि क्लिशि ।

(कुन्थ—क्र्या॰ प॰ ) ( क्रुन्थ—क्र्या॰ प॰ ) द्वौ पञ्चमस्वरिणौ,शेषो रेफयुक्तः । क्लिशि दुःखानुभवे । ग—कुथ्नाति न बुभुक्षार्त्त इति हलायुधः । १२४ ।कुथ्नाति ।

**पथिङ् जैम्मोग ग् कि ग्रन्थ् दर्भे गाथ नाथृङ्दवाशिषोः ।**

## ऐश्वर्येऽर्थने पुथ्य हिंसे पुथि कुन्थे पुथक् त्विषि।

९। ग्रथिङ् कौटिल्ये। (ग्रन्थ—भ्वा० आ०) रेफयुक्तः। कौटिल्यमिह कुटिलीभाव कुटिलीकरणञ्च। ङ—ग्रन्थयते। ङ—ग्रन्थते काष्ठं, कुटिलं स्यादित्यर्थः। ग्रन्थते लतां वायुः, कुटिलीकरोतीत्यर्थः।

१०। मकि ग्रन्थ दर्भे। (ग्रन्थ—क्र्या० चु० भ्वा० प०) रेफयुक्तः। दर्भो ग्रन्थनम्। ग—ग्रथ्नाति मालां मालिकः। कि—ग्रन्थयति, ग्रन्थति। "ग्रन्थिमुद्ग्रथयितु हृदयेशे" इति (१०। ६२) माघप्रयोगश्चिन्त्यः।

११। याथृङ् दवाशिषोरैश्वर्येऽर्थने। } (याथ—भ्वा० आ०) (नाथ—

१२। नाथृङ् दवाशिषोरैश्वर्येऽर्थने। } भ्वा० आ०) णोपदेशविधौ वर्जनेऽप्याद्यस्य पाठः केषाञ्चिदनुरोधात्। शेषो दन्त्यादिः। ऋ—अननाथत्। ङ—प्रणाथते, प्रनाथते। दव उपतापः, आशीरिष्टार्थाशंसनम्। ङित्त्वेऽप्यस्य अपथाशीर्मित्यनुकारे इति नियमादाशिषोऽन्यत्र परस्मैपदम्, नाथति ग्रत्रु बली उपतापयतीत्यर्थः। नाथते श्रियं लोक आशंसते इत्यर्थः। नाथति धनी ईश्वरः स्यादित्यर्थः। नाथति भूमिं नृपं विप्रः, याचते इत्यर्थः। "मामवेत्य तव प्रयोजन नाथ(ध)से किमु पति न भूभृत" इति भारवौ (१३। ५९) याचनमप्याशंसाविशेषः। आशिषि नित्यमात्मनेपदमन्यत्र विभाषयेति केचित्।

१३। पुथ्य हिंसे। (पुथ—दिवा० प०) य—पुथ्यति। पुपोथ।

१३। पुथि कुन्थे। (पुन्थ—भ्वा० प०) पञ्चमस्वरी। इ—पुन्थति। अन्त्यप्रथमादिरयमित्येके। पुन्थति। कुन्थो बधक्लेशौ।

१३। पुथक् त्विषि। (पुथ—चु० प०) क—पोथयति। त्विषि दीप्तौ।

पथेज् गत्यां पथिक च प्रोथृञ् पर्य्याप्तौ पृथक्।
क्षेपे प्रथक् च प्रथमष् ङ च ख्यातौ मिथृञ् बधे।
मेधायां मेथृञ सङ्गे च मन्थ कुन्थे ग मन्थं च।
गाहेञ् मथे च मथ माथ् लुथि कुन्थे व्यथष्माङ।
दुःखे चाले भये वेथ विथृङ् यांचे श्रथम् बधे।

१४। पथेज् गत्याम्। (पथ—भ्वा० प०) ए—अपथीत्। अ—पाथः, पथः।

१४। पथिक च। ( पन्थ—चु० प० ) इ, क—पन्थयति। चकारात् गत्याम्। "कुशस्थलं पन्थयति" इति हलायुधः। ( २३७ )।

१५। प्रोथृञ् पर्य्याप्तौ। (प्रोथ—भ्वा० उ०) रेफयुक्तः। ऋ—अपुप्रोथत्। ञ—प्रोथति प्रोथते। पर्य्याप्तं सामर्थ्यम्। "पुप्रोथास्मै न कश्चन" इति भट्टिः। १४। ८४। पर्य्याप्तं परिपूर्णतेति गोविन्दभट्टः।

१६। पृथक् क्षेपे। ( पृथ—चु० प० ) क—पर्थयति गुड़मौषधे जनः।

१७। प्रथक् च। ( प्रथ—चु० प० ) रेफयुक्तः। क—प्राथयति। चकारात् क्षेपे।

१७। प्रथ मषङ च ख्यातौ। ( प्रथ—भ्वा० आ० ) रेफयुक्तः। म—प्रथयति। ष—प्रथा। ङ—प्रथते गुणी, प्रसिद्धः स्यादित्यर्थः। चकारात् प्रथक् च।

१८। मिथृञ् वधे मेधायाम्। ( मिथ—भ्वा० उ० ) ऋ—अमिमेथत्। ञ—मेथति मेथते शास्त्रार्थं शिष्यः, धारयतीत्यर्थः। मिमिथतुः।

१९। मेथृञ् सङ्गे च। ( मेथ—भ्वा० उ० ) ञ—मेथति, मेथते धीरो गुणिना, संगच्छते इत्यर्थः। ऋ—अमिमेथत्। मिमेथतुः। चकारात् बधमेधयोश्च।

२०। मन्थ कुन्थे ( गाढ़े )। ( मन्थ—भ्वा० प० ) कुन्थः केश्चिन्न मन्यते। मन्थति।

२०। श मन्थ च गाढ़े। ( मन्थ—क्र्या० प० ) गाढ़ो विलोड़नम्। श—मथ्नाति दधि वल्लवी। "सौमित्रिरमथ्नाच्चतुरो हयान्" इति भट्टि.। १७। ४१। "मथ्नामि कौरवशतं समरे न कोपात्" इति वेणी। इत्युभयत्र विनाशार्थः। चकारात् मन्थ च ( भ्वादिगणीयमन्थधातुरपि गाढ़ार्थक )।

२१। ञ मथे च। ( मथ—भ्वा० प० ) ञ—माथ मथ। ए—अमथीत्। चकारात् गाढ़े। ( सम्प्राप्तं मकरध्वजेन मथनं त्वत्तो मदर्थे पुरेति रत्नावल्यां विनाशो गाढ़श्चेत्युभयार्थत्वम् )।

२१। मथि कुन्थे।
२२। माथि कुन्थे।
२३। लुथि कुन्थे।
( मन्थ—भ्वा० प० ) ( मान्थ—भ्वा० प० ) ( लुन्थ—भ्वा० प० ) मध्यमो द्वितीयस्वरो, शेषः पञ्चमस्वरो। इ—मन्थ्यते, मान्थ्यते, लुन्थ्यते। कुन्थो बधक्लेशौ।

२४। व्यथषङ दुःखे चाले भये। ( व्यथ—भ्वा० आ० ) दुःखं दुःखानु-

भवः, चाल कम्पः । घ—व्यथा । म—व्यथयति । ङ—व्यथते लोकः, दुःखमनुभवति, कम्पते, बिभेति वेत्यर्थः । केचित्तु दुःखभयचालनयोरिति पठित्वा भयेन चालनं भयचालनमित्याहुः । दुःखभयचालने इति पठित्वा दुःखभययोश्चालनमुत्पादनमिति गोविन्दभट्टः ।

२५ । वेथृङ् याचे । } (वेथ—भ्वा॰ आ॰) (विद—भ्वा॰ आ॰) घट—
२६ । विथृङ् याचे । } अविवेथत् । ङ—वेथते, विवेथे, विविथे ।

२७ । श्रथम् बधे । (श्रथ—भ्वा॰ आ॰) एतदाद्याः सर्व्वे थान्ता रेफयुक्तातालव्याद्याः । म—श्रथयति ।

श्रन्थ कि दर्भे बधे श्रन्थग् मोचे प्रतिहृषि श्रथक् ।
यत्ने प्रतिहृषि श्रथ्कि बन्धे मोचे बधे श्रथिङ् ।
शैथिल्येऽमी थकारान्ता अष्टाविंशतिरीरिताः ।

२८ । श्रन्थ कि दर्भे बधे । (श्रन्थ—चु॰ भ्वा॰ प॰) कि—श्रन्थयति श्रन्थति । दर्भो ग्रन्थनम् ।

२८ । श्रन्थग् मोचे प्रतिहृषि । (श्रन्थ—क्र्या॰ प॰) म—श्रथ्नाति वत्सं गोपः, मुञ्चतीत्यर्थः । श्रथ्नाति शिशु लोकः, पुनः पुनर्हर्षयतीत्यर्थः ।

२७ क । श्रथक् यत्ने प्रतिहृषि । (श्रथ—चु॰ प॰) क—श्राथयति पठितुं शिष्य, यतते इत्यर्थ । श्राथयति शिशुं लोक, पुनः पुनर्हर्षयतीत्यर्थः ।

२७ ख । श्रथ कि बन्धे मोचे बधे । (श्रथ—चु॰ भ्वा॰ प॰) कि—श्राथयति, श्रथति । "श्लाघ्यं श्राथयति स्फुटार्थमधुरं गद्यञ्च पद्यं सदा । भावालङ्कृतिपेशलं श्रथयति स्पष्टाक्षरं नाटकम् । श्रथ्नाति प्रथितावदातचरितः शास्त्रं विचित्रञ्च य ॥" इति हलायुधोक्तं श्रथयतीति श्रथत्व दौर्बल्ये इत्यदन्तस्य रूपम् । अनेकार्थत्वाद्बध्नातीत्यर्थ ।

२७ ग । श्रथिङ् शैथिल्ये । (श्रन्थ—भ्वा॰ आ॰) शैथिल्यमिह शिथिलीभावस्तत्करणञ्च । इ—श्रन्थ्यते । ङ—श्रन्थते वस्त्रं, शिथिलं स्यादित्यर्थः । श्रन्थते वस्त्रं लोक, शिथिलं करोतीत्यर्थः ।

अमी थकारान्ता अष्टाविंशतिरीरिताः ।

सुगमम् ।

## दान्तवर्गः ।

**मदृलौ भयेऽदि बन्धेऽर्द्द यातनागतियाचने ।**

१। मदृलौ भये। ( मद—भ्वा० प० ) ल—अमत्त। औ—मत्ता। गणकृतमनित्यमिति न्यायात् अप स्थितौ मदतीत्यपीति वररुचिः ।

१। मदि बन्धे। ( मन्द—भ्वा० प० ) इ—मन्द्यते। मन्दति।

२। अर्द्द यातनागतियाचने। ( अर्द्द—भ्वा० प० ) यातना ताड़नम्। अर्द्दति पिता पुत्रम्। अरहनं नार्द्दति चातकोऽपीति रघु' । ५।१७। न याचतीत्यर्थः ।

**अर्द्दञ् वधेऽर्द्दक् च इदि परमैश्वर्य्ये उन्द धौ ।**

**क्लेद उर्द्दञ्मिति क्रीड़ास्वादे क्रदि तु रोदने ।**

**आह्वानेऽथ क्लदृ षमङ् च वैक्लव्यविकलत्वयोः ।**

२। अर्द्दञ् वधे। ( अर्द्द—भ्वा० उ० ) ञ—अर्द्दति, अर्द्दते। रक्षःसहस्राणि चतुर्द्दशार्द्दीदिति। अयमात्मनेपदीत्यन्ये।

२। अर्द्दक् च। ( अर्द्द—चु० प० ) क—अर्द्दयति। चकारात् वधे। अयमात्मनेपदीत्येके।

३। इदि परमैश्वर्य्ये। ( इन्द—भ्वा० प० ) इस्वादि। इ—इन्द्यते। इन्दति इन्द्रः।

४। उन्द धौ क्लेदे। ( उन्द—रुधा० प० ) इस्वादि। क्लेद आर्द्रीभावः। ध—उनत्ति वस्त्रं पयसा। ई—उन्नः उत्तः ( औभ्रात्रोन्दनुदविन्दोवेति विभाषया नास्य नः ) उन्दिदिषति।

५। उर्द्दञ्मिति क्रीडास्वादे। ( उर्द्द—भ्वा० आ० ) इस्वौ, रेफमध्य' । दीर्घस्य नित्यत्वात् ( व्यंनचतयोको धोर्घ इति नियमादिति भावः ) दीर्घादिरिति कश्चित्। मिति' परिमाणम्। ङ—ऊर्द्दते कनकं वणिक्।

६। क्रदि तु रोदने आह्वाने। ( क्रन्द—भ्वा० प० ) इ—क्रन्द्यते।

६। अथ क्लदृषम ङ् च वैक्लव्यविकलत्वयो' । (क्लद—भ्वा० आ०) वैक्लव्यं विह्वलीभावः। ष—क्लदा। म—क्लदयति। ङ—क्लदते रोगार्त्तः। चकारात् क्लदि च ( एतद्द्वयार्थकः )।

**विलौ लरौ वा, वाक्रान्दक् शब्दसातत्ये लृ क्लिदा ।**

**ङ ञि मोचे स्नेह इर्क्लिद् याचा ञि क्लिद कूजने ।**

विलौ लरौ तौ । तौ क्लदिक्लदषडौ । ( विलौ विगतो लो लकारो ययो स्तथोक्तौ ) अन्तःस्थद्वतीयरहितौ च स्याताम् । ( तेन क्लन्द क्लद इतिवत् कन्द कद इत्यपि ) ।

७ । कदि तु रोदने आह्वाने । ( कन्द—भ्वा० प० ) इ—कन्द्यते ।

७ । अथ कद षमङ् च वैक्लव्यविकलत्वयोः ( कद—भ्वा० आ० ) ष—कदा । म—कदयति । ङ—कदते । चकारात् कदि च । ( एतदुभयार्थकः ) ।

तौ द्वौ (क्लदिक्लदषडौ) लरौ च स्याताम् । लस्थाने रेफो ययो स्तौ लरौ । ( तेन क्रन्द क्रद इतिवत् क्रन्द क्रद इत्यपि ) ।

८ । क्रदि तु रोदने आह्वाने । ( क्रन्द—भ्वा० प० ) इ—क्रन्द्यते । ततोऽक्रन्दीद्दशग्रीवः । क्रन्दन्ति भर्त्तारमिवाभिपन्नम् ।

८ । अथ क्रद षमङ् च वैक्लव्यविकलत्वयोः (क्रद—भ्वा० आ०) ष—क्रदा । म—क्रदयति । ङ—क्रदते । चकारात् क्रदि च ( एतदुभयार्थकः ) एवं कदि क्रदि वैक्लव्ये इति भ्वादावात्मनेपदिनौ मानुबन्धौ दुर्गसिंहादिभिः पठ्येते । कन्दते, क्रन्दते, अकन्दि अकान्दि, अक्रन्दि अक्रान्दि । एतौ बहुव्याख्यातत्वादनेनोपेक्षितौ ।

९ । आक्रन्दक् शब्दसातत्ये । ( आक्रन्द—चु० प० ) आ उपसर्गः । रेफयुक्तोऽयम् । क—आक्रन्दयति । शब्दसातत्यं निरन्तरशब्दक्रिया । ( आक्रन्दयति यन्त्रम् ) ।

१० । लृ क्लिदा ङ ञि मोचे स्नेहे । ( क्लिद—भ्वा० आ० ) एतदाद्या स्त्रयो वकारयुक्तश्चाद्याः । लृ—अक्लिदत् । आ—क्लेदितं क्लिन्नं तेन, प्रक्लेदितः प्रक्लिन्नः सः । ङ—क्लेदते तिलस्तैलं, मुञ्चतीत्यर्थः । ञि—क्लिन्नोऽस्ति । स्नेहः स्निग्धीभाव ।

१० । इर् क्लिद या च । ( क्लिद—दिवा० प० ) इर्—अक्लिदत् अक्लेदीत् । अस्मान्नित्यं ङ इति दुर्गसिंहः । य—क्लिद्यति । आ—क्लेदितं क्लिन्नं तेन, प्रक्लिन्नः प्रक्लेदितः सः । चकारात् मोचे स्नेहे ।

१०। भाञि ष्विद कूजने। (ष्विद—भ्वा० प०) भा—भाष्वेदितं ष्विष्वं तेन, प्रष्वेदितं प्रष्विष्वः सः। ञि—ष्विष्णोऽस्ति। मूर्धन्यवर्गतृतीयान्तोऽयमित्येके (ष्विड इत्यर्थः)।

## क्रदृ क्लिदिञ् ङ रुदि क्लिदयूदूरक्लेदे ञधौ क्षुदिर्क्षुदि ।

६क। क्रदि ञ ङ रुदि। } (क्रन्द—भ्वा० उ०) (क्लिन्द—भ्वा०

११। क्लिदि ञ ङ रुदि। } उ०) द्वावन्तःस्थतृतीययुक्तौ। इ—क्रन्द्यते, क्लिन्द्यते। ञ—क्रन्दति क्रन्दते, क्लिन्दति क्लिन्दते। ङ—क्रन्दते क्लिन्दते। रुदि रोदने।

११। क्लिदयूदृर् क्लेदे। (क्लिद—दिवा० प०) अन्तस्थःतृतीययुक्तः। क्लेद आर्द्रीभावः। य—क्लिद्यति वस्त्रं पयसा। ऊ—क्लेदिष्यति क्लेत्स्यति। इर—अक्लिदत् अक्लेदीत्। अस्मान्नित्यं ङ इति दुर्गसिंहः।

१२। ञधौ क्षुदिर् क्षुदि। (क्षुद—रुधा० उ०) ञ, ध—क्षुणत्ति क्षुन्ते। धौ—क्षोत्ता। इर्—अक्षुदत् अक्षौत्सीत्। क्षुदि चूर्णीकरणे।

## कुर्द कूर्दङ क्रीड़ायां कर्द स्यात् कुत्सिते रवे ।

१३। कुर्दङ क्रीडायाम्। } (कुर्द—भ्वा० आ०)(कूर्द—भ्वा० आ०)

१४। कूर्दङ क्रीडायाम्। } द्वौ क्रमात् पञ्चमषष्ठस्वरिणौ। दीर्घिणः पृथक्पाठसामर्थ्यात् पूर्वस्य र्व्यञ्जनव्रतयोरिति दीर्घो न स्यात्। ङ—कुर्दते, कूर्दते।

१५। कर्द स्यात् कुत्सिते रवे। (कर्द—भ्वा० प०) एकोऽयं। कर्दति काकः। रमानाथस्तु कौक्षे कर्दतीति भट्टमल्लदर्शनात् उदरसम्बन्धिशब्द एवास्य प्रयोग इति मन्वानः कर्दति शिशुः (कुक्षौ शब्दायते इत्यर्थ.) इत्युदाजहार। (कर्दति उदरमित्यपि)।

## खद स्थैर्य्ये बधे खादृ भक्षणे खुर्द खूर्द ङ ।
## क्रीड़ायां खर्द दशने खिदङ्यौ दैन्यकेशखिर्दीप् ।
## गरिघाते गर्द कि तु रवे गुर्दङ् निकेतने ।

१६। खद स्थैर्य्ये बधे। (खद—भ्वा० प०) खदति (खदिरः)।

१७। खाद्द भक्षणे। (खाद—भ्वा० प०) ऋ—अचखादत्।

१८। खुर्द ङ क्रीडायाम्। } (खुर्द—भ्वा० आ०) (खूर्द—भ्वा०
१९। खूर्द ङ क्रीडायाम्। } आ०) द्वौ क्रमात् पञ्चमषष्ठस्वरिणौ।
दीर्घिणः पृथक्पाठात् पूर्वस्य व्यञ्चत्ययीति न दीर्घः। ङ—खुर्दते खूर्दते।

२०। खर्द दशने। (खर्द—भ्वा० प०) दशनं दन्तकरणकक्रिया। खर्दति मूलकं लोकः। केचित्तु दन्दशूके इति पठित्वा दन्दशूको दन्दशूककर्त्तृकक्रियेत्याहुः।

२१। खिदङ् ध्यौ दैन्यके। (खिद—रुधा० दिवा० आ०) दैन्यकमुपतप्तीभावः। ङ, ध—"खिन्ते तेष्वेव यैर्द्रव्यं दीयमानं न गृह्यते" इति हलायुधः। ६८। ङ, य—"स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः" इति शाकुन्तले। यौ—खेत्ता।

२१। श खिदौ प परिघाते। (खिद—तुदा० प०) श, प—खिन्दति दुष्टं राजा। यौ—खेत्ता।

२२। गर्द कि तु रवे। (गर्द—चु० भ्वा० प०) कि—गर्दयति, गर्दति। रवः शब्दः।

२३। गुर्दक् निकेतने। (गुर्द—चु० प०) दीर्घिणो वक्ष्यमाणत्वादस्य न दीर्घः। क—गुर्दयति। निकेतनं निवासः।

## गुर्दङ् च कूर्दे, तौ दीर्घौ, गद् भाषे गुद्ङ खेलने।

२३। गुर्दङ् च कूर्दे। (गुर्द—भ्वा० आ०) दीर्घिणो वक्ष्यमाणत्वादस्यापि न दीर्घः। ङ—गुर्दते। कूर्द क्रीडा। चकारात् गुर्दक् च (क्रीडार्थकः)।

तौ दीर्घौ। तौ गुर्दकगुर्दङौ (धातू) दीर्घौ दीर्घवन्तौ।

२४। गूर्दक् निकेतने। (गूर्द—चु० प०) क—गूर्दयति।

२४। गूर्दङ् च कूर्दे। (गूर्द—भ्वा० आ०) ङ—गूर्दते। चकारात् गूर्दक् च (कूर्दार्थकः)।

२५। गद् भाषे। (गद—भ्वा० प०) गदति। भाष कथनम्। कास्य कतिचिच्च सब्जगदिरे इति गणकृतानित्यत्वादात्मनेपदम्।

२६। गुद्ङ खेलने। (गुद—भ्वा० आ०) ङ—गोदते।

चदेञ् याचे चदि ह्लादे दीप्तौ चुद्क नुदि छिदिर्।
धौञ् छेदे छृद् कि सन्दीपे छृदुञ् धिर्देवने त्विषि।

२७। चदेञ् याचे। (चद—भ्वा० उ०) ए—अचदीत्। अ—चदति चदते।

२७। चदि ह्लादे दीप्तौ। (चन्द—भ्वा० प०) इ—चन्द्यते। ह्लादो हर्षः।

२८। चुदक् नुदि। (चुद—चु० प०) नुदि प्रेरणे। चोदयति बाणं वीरः।

२९। छिदिर् धौञ छेदे। (छिद—रुधा० उ०) छेदो द्विधाकरणम्। इर्—अच्छिदत् अच्छैत्सीत्। ध, अ—छिनत्ति छिन्ते दात्रेण लोकः। धौ—छेत्ता।

३०। छृद् कि सन्दीपे। (छृद—चु० भ्वा० प०) सन्दीपो दीप्तीकरणम्। कि—छर्दयति छर्दति दीपं लोकः।

३०। छृदुञ् धिर्देवने त्विषि। (छृद—रुधा० उ०) उ—छर्दित्वा छृत्वा। अ, ध—छृणत्ति छृन्ते। इर्—अच्छृदत् अच्छर्दीत्। देवनं जिगीषेच्छाव्यवहारस्तुतिद्युतिकान्तिगतय इति केचित्। स्वमते तु देवृञ देवने इत्यस्य निष्पादनाद्देवनं क्रीडनमेव। अन्यथा त्विषो ग्रहणमनर्थकं स्यात्। त्विषि दीप्तौ।

छर्दक् च वमने छद् किञ् संवृतौ स मिदूर्ज्जने।

३१। छर्दक् च वमने। (छर्द—चु० प०) वमनं वान्तिः। क—छर्दयत्यन्नं लोकः। चकारात् छृदुञधिर् च।

३२। छद किञ् संवृतौ। (छद—चु० भ्वा० उ०) कि, ञ—छादयति छादयते, छदति छदते दिशं मेघः, आच्छादयतीत्यर्थः।

स मिदूर्ज्जने। स 'छद किञ्' ऊर्ज्जने जीवनबलयोर्मित् स्यात् (मानुबन्धो भवेदित्यर्थः)। म—छदयति पुत्रं पिता, जीवयति बलवन्तं करोति वेत्यर्थः।

चर्द शब्दे चद् क्लिष्टोक्तौ चदक भासि ञौ गुदम्।
प्रेरणे चेट णिद्दञ् सन्निधौ चिदि च कुत्सने।

३३। चर्द शब्दे। (चर्द—भ्वा० प०) चोपदेशविधौ वर्ज्जनेऽस्यास्य इष्टः पाठः केषाञ्चिदनुरोधात्। अचर्दति।

३४। चद क्लिष्टोक्तौ। (चद—भ्वा० प०) क्लिष्टोक्तिरव्यक्तशब्दः। नदति घण्टा।

३४। षद्द च भासि। (षद—चु० प०) क—षादयति। भासि दीप्तौ।

३५। ओ णुदञ् प्रेरणे। (णुद—तुदा० उ०) अ, श—नुदति नुदते शरं योधः। औ—नोत्ता।

३६। णेदृञ् सन्निधौ। } (णेद—भ्वा० उ०) (णिद—भ्वा० उ०)

३७। णिदृञ् सन्निधौ। } सन्निधिः सन्निकर्षः। ऋ—अनिनेदत्। अ—नेदति नेदते दयालुं दीनः। निनेदुः निनिदुः।

३७। णिदि च कुत्सने। (निन्द—भ्वा० प०) निंसनिन्दणिक्षां चोप-देशफलं णिन्दं, णत्वविकल्पने स्वरूपग्रहणात्। केचित्तु इति विकल्पमिच्छन्ति, त्वादौ तूपसर्गादसमासे उपसर्गात् समासे नित्यमित्यर्थः। यथा प्रणिन्दकः प्रनि-न्दकः। प्रणिन्दति। भट्टौ तु त्वादावपि विकल्पो दृश्यते। इ—निन्द्यते। निन्दति दुष्टं लोकः। चकारात् णेद्दणिदृञ् च (कुत्सार्थकः)।

## तर्द हिंसे तदुञ् धिनादरे च तुद औश् व्यथे।

३८। तर्द हिंसे। (तर्द—भ्वा० प०) तर्दति।

३९। तदुञ् धिनादरे च। (तद—रुधा० उ०) उ—तर्दित्वा तृत्वा। ध, अ—तृणत्ति तृन्ते। इर्—अतृदत् अतर्दीत्। चकाराद्धिंसे च।

४०। तुद औश् व्यथे। (तुद—तुदा० उ०) अ, श—तुदति तुदते। औ—तोत्ता। व्यथ इह आत्मस्य रूपम्। "तुतोद गदया चारिम्" इति भट्टिः। १४। ८१। विधुन्तुदः।

## त्रदि चेष्टे ददङ् दाने धृतौ टु नदि संवृधि।

४१। त्रदि चेष्टे। (त्रन्द—भ्वा० प०) तवर्गाद्यादिः। इ—त्रन्द्यते। तत्रन्द। तुदि चेति दामोदरः। (दामोदरमते तुन्दधातुरपि) तुन्दं जठरम्।

४२। ददङ् दाने धृतौ। (दद—भ्वा० आ०) ङ—ददते।

४३। टु नदि संवृधि। (नन्द—भ्वा० प०) टु—नन्दथुः। इ—नन्द्यते। संवृधि आनन्दयुक्तभावे। "ननन्द पारिप्लवनेत्रया नृपः" इति रघुः। ३। ११। "नन्दते च कुलं पुंसाम्" इति तु गणकृतानित्यत्वात्।

## नर्द शब्दे पर्दकुत्सानोत्सर्गे पद् यङौ गतौ।

४४। नर्द शब्दे। (नर्द—भ्वा० प०) नर्दति।

४५ । पर्दङ् अपानोत्सर्गे । (पर्द—भ्वा० आ०) ङ—पर्दते ह्रद्यः ।

४६ । पद यङी गतौ । (पद—दिवा० आ०) य, ङ—पद्यते । औ—पत्ता ।

## पद् बद् स्थैर्य्ये बिदि त्वंशे बुद् बुन्दिर्ञ् निशामने ।

४६ । पद स्थैर्य्ये । } (पद—भ्वा० प०) (बद—भ्वा० प०) पदति,
४७ । बद स्थैर्य्ये । } बदति पर्व्वत. । अवादीत् अवदीत् । "हसादेः सेम" इत्यादिना वा वृद्धिः, अजवदेत्यत्र दव्यादिवदोग्रहणात् ।

४८ । बिदि तु अंशे । (बिन्द—भ्वा० प०) इ—बिन्द्यते । अंशे अवयवे । बिन्दुरिति शब्दस्य व्युत्पत्त्यर्थमेवायं धातुर्मन्तव्यो नत्वस्यान्यत्र प्रयोग इति धातुपारायणम् ।

४९ । बुदिर्ञ् निशामने । } (बुद—भ्वा० उ०) (बुन्द—भ्वा० उ०)
५० । बुन्दिर्ञ् निशामने । } द्वौ पञ्चमस्वरिणौ । इर्—अबुदत् अबोदीत्, अबुन्दत् अबुन्दीत् । ञ—बोदति बोदते, बुन्दति बुन्दते । उ—बोदित्वा बुत्त्वा, बुन्दित्वा बुत्त्वा । निशामनमालोचनम्, प्रणिधानमिति केचित् । "ससंसे शरबन्धेन दिव्येनेति बुबुन्द सः" इति भट्टिः । १४ । ७२ । शेषस्तालव्यवर्गाद्यादिरित्येके (चुन्द इत्यर्थः) ।

## भदिक् शुभे भदिङ् मोदप्रीत्योश्च ञ् धौ भिदिर्भिदि ।

५१ । भदिक् शुभे । (भन्द—चु० प०) इ, क—भन्दयति । शुभं शुभक्रिया ।

५१ । भदिङ् मोदप्रीत्योश्च । (भन्द—भ्वा० आ०) मोदो हर्षः । प्रीतिः प्रीतीकरणम् । चकारात् शुभे च । इ—भन्द्यते । ङ—भन्दते पण्डितः सदा ।

५२ । ञ धौ भिदिर्भिदि । (भिद—रुधा० उ०) भित् कियदवयवविदारणम् । ञ, ध—भिनत्ति भिन्ते कूलं नदी । औ—भेत्ता । इर्—अभिदत् अभैत्सीत् ।

## मदिङ् स्वपने जाड्य मदे मोदे स्तुतौ गतौ ।

५३ । (मन्द—भ्वा० आ०) इ—मन्द्यते । ङ—मन्दते जनः, स्वपिति, जड़ीभवति, माद्यति, मोदते, स्तौति, गच्छति वेत्यर्थः ।

## मदीभिर्यञि हर्षे स मिङ्ग्लव्वे ग्लेपने मदक् ।

## ङ तृप्तियोगे मदृमषुङ चोदे मिदि मिदक् स्निहि।

५१। मदीभिर्यञि हर्षे। (मद—दिवा० प०) ई, ञि—मत्तोऽस्ति। भ, य—माद्यति। इर्—अमदत् अमादीत् अमदीत्। अस्माद्विन्त्वं ङ इति दुर्गसिंहः।

स मित्त्वर्व्वे ग्लेपने। (स पूर्व्वोक्तो मदधातुर्गर्व्वे ग्लपने चार्थे मित्, घटादिर्भवतीत्यर्थः)। गर्व्वोऽहङ्कारः, ग्लेपनं दैन्यम्। म—मदयति शत्रुं शूरः।

५२। मदक् ङ तृप्तियोगे। (मद—चु० आ०) क, ङ—मनो मादयते यस्य शास्त्राभ्यासरसायणादिति हलायुधः। २३।

५४। म्रद मषुङ चोदे। (म्रद—भ्वा० आ०) रेफयुक्तः। चोदचूर्णीकरणम्। म—म्रदयति। ष—म्रदा। ङ—म्रदते काननं दन्ती।

५५। मिदिक् स्निहि। } (मिन्द—चु० प) (मिद—चु० प०)
५५। मिदक् स्निहि। } स्निहि स्निग्धीभावे। इ, क—मिन्दयति मेदयति वर्त्तिका तैलेन।

## इमिदृ या लृ मिदा ञिङ् च मिदृ मेदृञ् बधमेधयोः।

५५। इमिदृ या च। } (मिद—दिवा० प०) (मिद—भ्वा०
५५। लृ मिदा ञि ङ् च। } आ०) अत्र न परैषाच्च मध्यम इति नियमेऽपि पूर्वस्य इरिद्विधानात् लृकारः परस्यैव। पूर्व्वादपि नित्यं ङ इति दुर्गः। इर्—अमिदत् अमेदीत्। य—मेद्यति। आ—मेदितं मित्तं तेन, प्रमिन्नः प्रमेदितः सः। "इतिव्यायामशीलोऽसौ महाकायो न मेद्यति" इति हलायुधः। १२६। (न मेद्यति न स्वेदजलार्द्रीभवतीत्यर्थ.) लृ—अमिदत्। आ—पूर्व्ववत्। (आकारानुबन्धफलं पूर्व्ववर्त्तिधातुवदित्यर्थः) ञि—मिन्नोऽस्ति। ङ—मेदते। चकारात् स्निहि। किञ्चित् किल न मेदते इति हलायुधः।१२६।

५५। मिदृञ् बधमेधयोः।० } (मिद—भ्वा० उ०) (मेद—भ्वा० उ०)
५६। मेदृ ञ् बधमेधयोः। } ऋ—अमिमेदत्। ञ—मेदति मेदते शास्त्रार्थं, धारयतीत्यर्थः। मिमिदुः। मिमेदुः।

## मुदक् संसर्गे ञि मुदङ् हर्षे म्रदृग चुदि लघिर्।

रुद् रोदे रद उत्खाते वदिङ् नुत्यभिवादयोः।

५७। मुदक् संसर्गे। (मुद—चु० प०) क—मोदयति घृतेनान्नं लोकः।

५७। ञि मुदङ् हर्षे। (मुद—भ्वा० आ०) हर्षश्चित्तोत्साहः। ञि—मुदितोऽस्मि। ङ—मोदते धनी।

५८। म्रदग क्षुदि। (म्रद—क्र्या० प०) ग—म्रद्नाति। ममर्द। क्षुदि चूर्णीकरणे।

५९। लघिर् रुद रोदे। (रुद—अदा० प०) रोदोऽश्रुविमोचनम्। ल, घ—रोदिति लोकः शोकात्। इर्—अरुदत् अरोदीत्। "अरोदीद्राक्षसानीक-मरुदन्नृभुजांपतिः" इति भट्टिः। १७। ४८) रोदिम्यनाथमात्मानमिति भट्टौ आत्मानविशिष्टरोदनक्रियाव्याप्यत्वात् सकर्मकत्वमिति जयमङ्गल टीका।

६०। रद उत्खाते। (रद—भ्वा० प०) रेफादिः। उत्खातमुत्खनन-मिति गोविन्दभट्टः। रदति भूमिं शूकरः।

६१। वदिङ् नुत्यभिवादयोः। (वन्द—भ्वा० आ०) अभिवादो नमस्कारः। इ—वन्द्यते। ङ—वन्दते गुरुं लोकः, स्तौति नमस्करोति वेत्यर्थः।

वदे वाचि वदक् वाचि सन्देशे च वदञ् ङपि।

६१। वदे वाचि। (वद—भ्वा० प०) ए—उद्यात्। वदति।

६१। वदक् वाचि सन्देशे च। (वद—चु० प०) क—वादयति। सन्देशो वचनविशेषः। अयमात्मनेपदीत्येके।

६१। वद ञङपि। (वद—भ्वा० उ०) ञ—वदति वदते। ङ—वदते। अयमात्मनेपदीत्यन्ये। अपिशब्दात् वाक्सन्देशयोः।

विद ङकञ् चेतनाख्यानवासवादे विद् लश् पञौ।

लाभे धौ विद् ङ मीमांसे विद्यौङ् भावे विदल् मतौ।

६२। विदङ् कञ चेतनाख्यानवासवादे। (विद—चु० उ०) चेतना ज्ञानम्, वादः स्थैर्य्यम्। ङ—वेदयते शास्त्रं धीरः, जानातीत्यर्थः। वेदयते स्वार्थं लोकः, आख्यातीत्यर्थः। वेदयते तीर्थे साधुर्वसतीत्यर्थः। वेदयते हयः, स्थिरःस्यादित्यर्थः। ञ—वेदयति वेदयते। केचित्तु वादं न पठन्ति, चेतना-

स्थाने च वेदनेति पठित्वा वेदयते विज्ञः, व्यथते इत्यर्थं इत्युदाहरन्ति। अस्माच्च परस्मैपदमभन्यमाना "जितां सपत्नेन निवेदयिष्यत" इत्यत्र निवेदनं करोतीति णौ समादधते।

६२। विद्लृ अपजौ लाभे। (विद—तुदा० उ०) लृ—अविदत्। श, प, अ—विन्दति विन्दते। औ—वेत्ता।

६२। धौ विद ङ मीमांसे। (विद—रुधा० आ०) मीमांसो विचारणम्। ध, ङ—विन्ते शास्त्रं धीरः। औ—वेत्ता।

६२। विद्यौ ङ भावे। (विद—दिवा० आ०) भावः सत्ता, सा चेह विद्यमानतेव। य, ङ—विद्यते विष्णुः। औ—वेत्ता।

६२। विदल् मतौ। (विद—अदा० प०) ल—वेत्ति।

## शब्दक् शब्दकृतौ सोपसर्गस्त्वाविष्कृतौ मतः।

६३। शब्दक् शब्दकृतौ। (शब्द—चु० प०) क—शब्दयति। सोपसर्गस्त्वाविष्कृतौ मतः।

(उपसर्गसहितः शब्दधातुराविष्कारार्थक इत्यर्थः) प्रशब्दयति गभीरमर्थं शिष्यः, स्फुटं करोतीत्यर्थः।

## श्विदिङ् शौक्ल्येऽथ शद्लृजौ शाते आङः शदौ गतौ।

६४। श्विदिङ् शौक्ल्ये। (श्विन्द—भ्वा० आ०) वकारयुक्तः। इ—श्विन्द्यते। ङ—श्विन्दते पुण्डरीकम्।

६५। अथ शद्लृजौ शाते। (शद—भ्वा० प०) लृ—अशदत्। अ—शाद शदः। औ—शत्स्यति। शातः पतनं पातनञ्च। शीयते पत्रं वृक्षात्, शीयते पत्रं वृक्षात् वायुः। "शदोऽपि मम्" इत्यनेन शव्विषये आत्मनेपदम्। केचिदिमं तुदादौ च पठित्वा तत्सामर्थ्यात् आत्मनेपदानित्यत्वे शत्रप्रत्यये शीयन्ती शीयती इत्युदाहरन्ति।

६५। आङ. शदौ गतौ। (आ—शद० भ्वा० प०) तालव्यादिः। आशीयते। औ—आशात्सीत्।

## आङः षदक् च षद्लृजौश् विषादे शरणे गतौ।

६६। आङः षदक् च। (आषद—चु॰ प॰) क—आसादयति। चकारात् गतौ।

६६। षद्‌ ऌजौञ् विषादे मरणे गतौ। (षद—तुदा॰ प॰) ऌ—असदत्। ज—साद. सदः। औ—असात्सीत्। अ—सीदन्ती सीदती। विषाद आकुलीभावः। सीदति राधा रासगृहे। मरणं हिंसा।

षूदङ् निरासे षूदक् त्वाश्रुतिहत्योश्च ञि ष्विदा।
ङ्‌ऌ मोहस्नेहमोचे ऌ श्री ष्विद्या ञि स्विदि ष्वदक्।
स्वादे छेदे ष्वद स्वर्द स्वादङ् प्रीतिलिहोः स्पर्दिङ्।
ईषत्कम्पे स्वद् मषङ् विदारे स्यन्दू ङ् वऌ स्रुतौ।

६७। षूदङ् निरासे। (षूद—भ्वा॰ आ॰) षष्ठस्वरी। ङ—सूदते। निरासो निक्षेपः। षूद क्षरणे इति प्राञ्चः। क्षरणमवदारणं, हिंसोपलक्षणमिति रमानाथः।

६७। षूदक् त्वाश्रुतिहत्योश्च। (षूद—चु॰ प॰) षष्ठस्वरी। आश्रुतिरङ्गीकारः। क—सूदयति धनं विप्राय दातुं दाता। रमानाथस्तु आस्रवण इति दन्त्यसकारं पठित्वा सूदयति मदिरा भाण्डात्, क्षरतीत्यर्थं इत्याह। चकारान्निरासे। (हत्यर्थे यथा—मधुसूदनः)।

६८। ञि ष्विदा ङ्‌ऌ मोहस्नेहमोचे। (ष्विद—भ्वा॰ आ॰) एतदाद्या वकारयुक्ता. षट्। ञि—स्विन्नोऽस्ति। आ—स्वेदितं स्विन्नं तेन, प्रस्वेदितः प्रस्विन्न सः। ङ—स्वेदते तिलस्तैलं, मुञ्चतीत्यर्थः। ऌ—अस्विदत्। स्नेहः स्निग्धीभावः।

६८। ऌ श्री ष्विद्या ञि स्विदि। (ष्विद—दिवा॰ प॰) ऌ—अस्विदत्। औ—स्वेत्ता। य—स्विद्यति। आ—पूर्ववत्। ञि—स्विन्नोऽस्ति। "स्विदीति मोहस्नेहमोचेषु" इति वोपदेवः। गात्रप्रक्षरणे इति प्राञ्चः। "स्वेदते किल सर्व्वोऽपि वपुषानुष्णरश्मितः। न च स्विद्यति तस्याङ्गं व्यायामार्दितमेदस" इत्युभयत्र हलायुधः। २१२।

६९। ष्वदक् स्वादे छेदे। (ष्वद—चु॰ प॰) स्वादो रसोपादानम्। क—स्वादयति क्षीरं लोकः।

६९। ष्वदङ् प्रीतिलिङ्होः। (ष्वद—भ्वा॰ आ॰) (स्वर्द—भ्वा॰ आ॰)
७०। स्वर्दङ् प्रीतिलिङ्होः। (स्वाद—भ्वा॰ आ॰) आद्यो मूर्द्धन्यादिः,
७१। स्वादङ् प्रीतिलिङ्होः। शेषौ दन्त्यादी, मध्यमो रेफोपधः। प्रीतिरिहानुरागविशेष। तत्र यस्यानुरागस्तस्य सम्प्रदानत्वम्। लिट् रसोपादानम्। ङ—"अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा" इति श्रीहर्षः। ३। ९३। "स्वर्दते विविधं स्वादु स्वादते च रसायणम्" इति हलायुधः। ११९।

७२। स्यदिङ् ईषत्कम्पे। (स्यन्द—भ्वा॰ आ॰) इ—स्यन्द्यते। ङ—स्यन्दते चक्षुः। पस्यन्दे। "काशे स्यन्द कुशे स्यन्द स्यन्द त्वं शत्रुमस्तके" इत्यादौ गणकृतानित्यत्वात् परस्मैपदम्। पचादित्वादनि स्यन्द इवाचरतीति क्वौ सिद्धिर्वा।

७३। स्खद मषङ् विदारे। (स्खद—भ्वा॰ आ॰) म—स्खदयति। सोपसर्गस्य तु "वा शमयम" इत्यादिना वा ह्रस्वः। प्रस्खदयति प्रस्खादयति। अवपरिवर्ज्जादुपसर्गात् परस्य घटादित्वं नास्तीति कातन्त्राद्याः। तत्रैव अवस्थाने अप इति भीमः। प्रस्खादयति अवस्खदयति परिस्खदयति। अपपरिभ्यां परस्य घटादित्वं नास्तीति जौमराः। अपस्खादयति परिस्खादयति प्रस्खदयति। ष—स्खदा। ङ—स्खदते। स्खद स्खदने इति प्राञ्चः। स्खदनं स्थैर्य्यमिति त्रिलोचनरामौ। पाटनमिति गोविन्दभट्टः। क्लेशोत्पादनमिति गोयीचन्द्रः। हिंसेति रमानाथः।

७४। स्यन्दू ङवल स्रुतौ। (स्यन्द—भ्वा॰ आ॰) अन्तःस्थादियुक्तः। ऊ—अस्यन्दिष्ट अस्यन्त। ङ—स्यन्दते। व—स्यन्त्स्यति, सिस्यन्त्सति। ल—अस्यदत्। स्रुतिः क्षरणम्। "प्रस्यन्दमदगन्धलुब्धमधुपव्यालोलगण्डस्थलम्" इत्यत्र गणकृतानित्यत्वं, पचादित्वादनि प्रस्यन्द इवाचरतीति क्वौ शत्रन्तं वा।

## स्कन्दिरौ शोषणे गत्यां स्कदि ङ् आप्लव उद्धृतौ।
## उत्प्लुत्य गत्यां ङ इदौ त्वर्थे ह्लादौ ङ मोदने।

७५। स्कन्दिरौ शोषणे गत्याम्। (स्कन्द—भ्वा॰ प॰) इर्—अस्कदत् अस्कान्त्सीत्। औ—स्कन्ता। चस्कन्द। स्कन्दति पङ्कं आतपेन।

७६। स्कदिङ् आप्लवउद्धृतौ उत्प्लुत्यगत्याम्। (स्कन्द—भ्वा॰ आ॰)

माद्यस्वरौ । इ—स्कन्धति । ङ—स्कन्दते । विस्कन्दिषते । पञ्चमस्वरीति धातुप्रदीपरामौ । "स्कन्दते स्कुन्दते चापि मड़ाप्लवनवाचिनः" इति भट्टमल्लोऽपि । चुस्कुन्दिषते ।

७७ । ङ हदौ न्वर्चे । ( हद—भ्वा० आ० ) न्वर्चो विष्ठोत्सर्गः । ङ—हदते जनः । औ—हत्ता ।

७८ । ह्लादीङ मोदने । ( ह्लाद—भ्वा० आ० ) अन्तःस्थतृतीययुक्त-द्वितीयस्वरौ । मोदनं हृष्टीकरणं हृष्टीभावश्च । ई—ह्लन्न. ( ह्लादेःस्वःक्तौ चेति ह्रस्वः ) ङ—ह्लादते चन्दनं गात्रम् । "बलात् प्रह्लादते मनः" इति किराते । ११ । ८ ।

## क्लादङ् च स्वन इत्येते दान्ताः स्युर्नवसप्ततिः ।

७९ । क्लादङ् च स्वने । ( क्लाद—भ्वा० आ० ) रेफयुक्तद्वितीयस्वरौ । ङ—क्लादते । चकारात् ह्लादीङ् च ( शब्दार्थकः ) "क्लादते· स्निग्धगम्भीरं यह्देशे वर्षुको घनः" इति हलायुधः । ( २३८ ) ।

## इत्येते दान्ताः स्युर्नवसप्ततिः ।

इति समाप्तौ । एते दान्ता धातवो नवसप्ततिः एकोनाशीतिसंख्यकाः ।

—०—

# धान्तवर्गः ।

## इन्धी ञिधङ् द्युतावृधयु निर्वृद्धौ ङेधच क्षुध् लृ ।

## यौ क्षुधि क्रुध् लृयौ कोपे गुध् य वेष्टे गुधग् रुषि ।

१ । इन्धी ञि धङ् द्युतौ । ( इन्ध—रुधा० आ० ) इस्वादिः । ई, ञि—इद्धोऽग्निः । ध, ङ—इन्द्धे ।

२ । ऋध् युनिर्वृद्धौ । ( ऋध्—दिवा० स्वा० प० ) य—ऋध्यति । उ—अर्धित्वा ऋद्धा । न—ऋध्नोति । इर्—आर्धत् आर्धीत् । कविसृष्टौ चायम्, सोऽयं प्राभवतेव भूतजननीमृध्नोमीति भवभूतिः । ( मालतीमाधवे पञ्चमाङ्के अघोरघण्टोक्तौ ) अन्तर्भूतणर्थत्वादिदं सिद्धमिति केचित् । "ऋध्नोति धीः सदा यस्य ऋध्यति श्रीश्च भूतले" इति हलायुधः । ( २४६ ) ।

३। ऊँध च। (एध—भ्वा॰ आ॰) ङ—एधते। चकारात् वृद्धौ।

४। क्षुध् लृ यौ क्षुधि। (क्षुध—दिवा॰ प॰) क्षुत् भक्षणेच्छा। य—क्षुध्यति अन्नं बुभुक्षित.। औ—क्षोद्धा।

५। क्रुध् लृयौ कोपे। (क्रुध्—दिवा॰ प॰) लृ—अक्रुधत्। य—क्रुध्यति लोकः श्रिरवे। औ—क्रोद्धा।

६। गुध् य वेष्टे। (गुध्—दिवा॰ प॰) य—गुध्यति। जुगोध।

६। गुधग् रुषि। (गुध—क्र्या॰ प॰) ग—गुध्नाति। जुगोध। (योऽस्मै गुध्नाति तद्दुर्गं तत्त्वणादेव गुध्यतीत्युभयत्र हलायुधः। २६८)।

गुधङ् क्रीड़े गाधृ ङतु प्रतिष्ठाग्रन्थयोर्गृधिर्।

यु च लिप्से गर्धं कच गन्ध कङ् दुहि णाधृङ।

नाथे दधङ् ददे नाधृङ् नाथे बन्धौग बन्धक।

बधक् बन्धे बधङ् निन्दे च बुन्धिर्ञु निशामने।

६। गुधङ् क्रीड़े। (गुध—भ्वा॰ आ॰) ङ—गोधते।

७। गाधृ ङतु प्रतिष्ठाग्रन्थयोः। (गाध—भ्वा॰ आ॰) प्रतिष्ठा प्रस्थानम्। ऋ—अजगाधत्। ङ—गाधितासे नभो भूय इति भट्टिः। २२।२। गाधते मालिकः स्रजः।

८। गृधिर् यु च लिप्से। (गृध—दिवा॰ प॰) इर्—अगृधत् अगर्धीत्। अस्मान्नित्यं ङ इति दुर्गः। य—गृध्यति धनं लुब्धः। उ—गर्धित्वा गृद्धा। चकारात् गाधृङ् च (लिप्सार्थकः)। (न गृध्यति परद्रव्यमिति हलायुधः। २५४)।

९। गर्धक् च। (गर्ध—चु॰ प॰) क—गर्धयति। चकाराल्लिप्से।

१०। गन्ध कङ दुहि। (गन्ध—चु॰ आ॰) क, ङ—गन्धयते। दुहि हिंसायाम्। गतिहिंसायाचनेष्विति कातन्त्राः।

११। णाधृङ् नाथे। (णाध—भ्वा॰ आ॰) णोपदेशविधावस्य वर्जनेऽपीह पाठः केषाञ्चिदनुरोधात्। ऋ—अननाधत्। ङ—नाधते। नाथो दवाशीरैश्वर्यार्थनानि।

१२। दधङ ददे। (दध—भ्वा॰ आ॰) ङ—दधते। ददे दानधृत्योः।

माद्दश्चाद्द्यकारि रतिमतिशयिनीमिति मयूरभट्टोक्तं गणकृतानित्यत्वादस्यैव डीपरस्मैपदे साध्यमिति रमानाथः। वस्तुतस्तु डु धाञ्‌ धारणे इत्यस्यैव रूपं साध्यम्।

१३। नाधृङ नाथे। (नाध—भ्वा० आ०) ङ्—अननाधत्। ङ—प्रनाधते। नाधो दयाशीरैश्वर्य्यार्थमानि।

१४। बन्धौ ग बन्धे। १४। बन्ध क बन्धे। १५। बध क बन्धे। (बन्ध—क्र्या० प०) (बन्ध—चु० प०) (बध—चु० प०) औ—अबान्त्सीत्। ग—बध्नाति। क—बन्धयति। "वस्त्रान्तं शठ मुञ्च मुञ्च शपथैः किं धूर्त्त निर्बन्धसे" इति गणकृतानित्यतया ञेरभावे आत्मनेपदे च साध्यम्। क—बाधयति।

१५। बधङ निन्दे च। (बध—भ्वा० आ०) ङ—बीभत्सते खलं लोकः। चकाराद्बन्धे च। बधते। (निशामनाज्जवनिन्दाश्चित्युक्तेर्निन्दार्थे कित्तिजेति सनि बीभत्सते, अन्यत्र बधते इत्याशयः) अत्र त्यादयो न प्रयुज्यन्ते इति रमानाथः। किन्तु "मा बधिष्ठा जटायु माम्" इति भट्टिप्रयोगः।

१६। बुन्धिर्ञु निशामने। (बुन्ध—भ्वा० उ०) पञ्चमस्वरी। इर्—अबुधत् अबुन्धीत्। ञ—बुन्धति बुन्धते। उ—बुन्धित्वा बुद्ध्वा। निशामनमालोचनं प्रणिधानमिति यावत्।

## बुन्धक् बन्धे बुधौ विज्ञापने बुध्यीङ वेदने।

१६। बुन्धक् बन्धे। (बुन्ध—चु० प०) पञ्चमस्वरी। क—बुन्धयति।

१७। बुधौ विज्ञापने। (बुध—भ्वा० प०) औ—बोद्धा। बोधति शिष्यं गुरुः।

१७। बुध्यीङ वेदने। (बुध—दिवा० आ०) य, ङ—बुध्यते शास्त्रं धीरः। औ—बोद्धा।

## बुधिर्ञञ् चाथ बाधृङ् विहतौ मेधृञ् मेधृवत्।

१७। बुधिर्ञञ् च। (बुध—भ्वा० उ०) इर्—अबुधत् अबोधीत्। ञ—बोधः बुधः। ञ—बोधति बोधते। चकारात् वेदने।

१८। अथ बाधृङ् विहतौ। (बाध—भ्वा० आ०) अ—अबबाधत्। ङ—जनं न सत्वेष्वधिको बबाधे इति रघुः।

१९। मेधृञ मेधृवत्। (मेध—भ्वा० उ०) अ—अमिमेधत्। ञ—मेधति मेधते। मेधृवत् बधमेधासङ्गेष्वित्यर्थः।

मृधुञ क्लिदि युध्यौङ युद्धे रध्यू लृ हिंसने।

पाकेऽनौ रुध्ङ्यौ कामे रुधिर्धौ ञि ञ आवृतौ।

२०। मृधुञ क्लिदि। (मृध—भ्वा० उ०) उ—मर्धित्वा मृद्ध्वा। ञ—मर्धति मर्धते। क्लिदि आर्द्रभावे।

२१। युध्यौ ङ युद्धे। (युध—दिवा० आ०) य, ङ—युध्यते। औ—योद्धा। सम्मुखस्थितयोर्द्वयोः सांग्रामिकरीत्या परस्पराभिभवेच्छा युद्धम्। युध्यते योधः। कदाचिदेकस्य सद्भावविवक्षायां युध्यते योधः परेण। कदाचिद्धननेऽपि, युध्यते चौरं राजा, हन्तीत्यर्थः। यो भक्तपिण्डस्य कृते न युध्येदिति, अस्माद्भावे क्विपि तमिच्छतीति क्ये, तं करोतीति कण्ड्वादित्वात् क्ये वा साध्यम्।

२२। रध्यू लृ हिंसने पाके। (रध—दिवा० प०) य—रध्यति। ऊ—रधिष्यति रत्स्यति। लृ—अरन्धत्।

२३। अनौ रुध्ङ यौ कामे। (अनु+रुध्—दिवा० आ०) अनावित्युपपदे सप्तमी। (सप्तमी च परे वाच्ये गम्ये चोपपदे क्वचिदित्युक्तेः) ङ, य—अनुरुध्यते धनं लोकः। औ—अनुरोद्धा।

२३। रुधिर्धौ ञि ञ आवृतौ। (रुध—रुधा० उ०) इर्—अरुधत् अरौत्सीत्। ध, ञ—रुणद्धि रुन्धे। औ—रोद्धा। ञि—रुद्धोऽस्ति।

राध्नौ सिद्धौ वध हतौ व्यध्यौ ताड़े विधश् विधौ।

२४। राध् नयौ सिद्धौ। *(राध—स्वा० दिवा० प०) रेफादिः। न—राध्नोति। य—राध्यति। औ—अरात्सीत्। सिद्धिरिह स्वादिपक्षे निष्पादना, दिवादिपक्षे निष्पत्तिः। "अन्नं राध्नोति विप्राणां यः" इति हलायुधः। ११४। निष्पादयतीत्यर्थं। "सकलं राध्यति क्रिया" इति हलायुधः। ११४। निष्पन्ना स्यादित्यर्थः। सिद्धिरत्रर्भतअर्थत्वादुभयत्रैव निष्पादनेति गोविन्दभट्टः

२५ । वध हती । (वध—भ्वा० प० ) वकारादिः । वधति ।

२६ । व्यधौ ताडे । (व्यध—दिवा० प० ) य—विध्यति मृगं व्याधः । औ—अव्यात्सीत् । केचित्तु द्विर्भूतस्य अनिकारीभूतयकारस्य च व्यधेर्वकारो वर्ग्यः, अन्यत्र दन्त्य इति मन्वानाः सनि विव्यत्सतीत्याहुः ।

२७ । विधश् विधौ । (विध—तुदा० प० ) विधिर्विधानम् । श—विधति वेधा जगत् । अनेकार्थत्वाच्छिद्रकरणेऽप्ययम् । "वेधितच्छिद्रितौ विद्धे" इत्यमरः । कर्णवेधः ।

**वृधक् दीप्तौ वृधुङ् वलृ वृद्धौ वाधृङ बाधृवत् ।**

२८ । वृधक् दीप्तौ । (वृध—चु० प० ) क—वर्द्धयति ।

२८ । वृधुङ् वलृ वृद्धौ । (वृध—भ्वा० आ० ) उ—वर्द्धित्वा वृद्धा । ङ—वर्द्धते जनः । व—वर्त्स्यति विवृत्सति । लृ—अवृधत् ।

२९ । वाधृङ बाधृवत् । (वाध—भ्वा० आ० ) ऋ—अववाधत् । ङ—वाधते । बाधृवत् विहतौ ।

**वर्द्धक् पूर्त्तिच्छिदोः शुन्धक् शुद्धौ शुन्धञ् च शृध् वलृ ङु ।**

**पर्द्दे शृधुञ् क्लेदने लृ शुध्यौ शौचे षिधू शिवे ।**

**शास्त्रे षिध् षिधु गत्यामु षिध्यौ षाधौन्त्य साध् यतौ ।**

**सिद्धौ स्पर्द्ध ङ सङ्घर्षे सप्त विंशच्च धान्तिमाः ।**

३० । वर्द्धक् पूर्त्तिच्छिदोः । (वर्द्ध—चु० प० ) क—वर्द्धयति । वृधक् दीप्तावित्यनेनैव पूर्त्तिच्छिदोश्चेतिपाठादिष्टसिद्धावस्य पाठश्चुरादिभ्यो ञेरनित्यतां बोधयति, तेन कदाचित् ञेरप्राप्तौ यगादौ वृधक् इत्यस्य वृध्यते इत्यादि, अस्य तु वर्द्ध्यते इत्यादीति भेदः । "वर्द्धयत्यरिवीराणां क्रान्त्वा मूर्द्धानमाहवे" इति हलायुधः । ८० । वर्द्धयति छिनत्तीत्यर्थः ।

३१ । शुन्धक् शुद्धौ । (शुन्ध—चु० प० ) पञ्चमस्वरी । क—शुन्धयति । अयमात्मनेपदीत्येके ।

३१ । शुन्धञ् च । (शुन्ध—भ्वा० उ० ) पञ्चमस्वरी । चकारात् शुद्धौ । सा चेह शुद्धीभावः शुद्धीकरणञ्च । ञ—शुन्धति शुन्धते अनेन लोकः । यो गा

शुन्धति सत्येन शुन्धते तपसा तनुम्। धियं शुन्धयति ज्ञानादित्युभयत्र हलायुधः। ३०। गां वाचम्।

३१। शृध् वृ्धु पर्दे। (शृध—भ्वा० आ०) व—शर्द्धंति शिशृत्सति। लृ—अशृधत्। ङ—शर्द्धते। उ—शर्द्धित्वा शृद्धा। पर्दोऽपानोत्सर्गः। शृधु प्रहसने इति चुरादिपरस्मैपदी धातुरन्यैर्न मन्यते। प्रहसनं विद्रव इति गोविन्दभट्टः। शर्द्धयति वृद्धं कुत्सितशब्देन बाल इति रमानाथः।

३२। शृधुञ् क्लेदने। (शृध—भ्वा० उ०) उ—शर्द्धित्वा शृद्धा। अ—शर्धति शर्धते क्लेदनमार्द्रीभावः।

३३। लृ शुध् यौ शौचे। (शुध—दिवा० प०) तालव्यादिः। लृ—अशुधत्। य—शुध्यति लोकः स्नानात्। औ—शोद्धा। रजसा शुध्यते नारीत्यत्र शुध्यतीति क्विपि शुधं करोतीति ञौ कर्म्मणि यकि रूपम्।

३४। षिधू शिवे शास्त्रे। (षिध—भ्वा० प०) मूर्द्धन्यादिः। ऊ—असेधीत् असैत्सीत्। शिवं मङ्गलम्, तत्राकर्म्मकः। सिद्धो वर्णसमाम्नाय इति कातन्त्रस्याद्यसूत्रम्। शास्त्रमनुशासनम्। सेधति शिष्यं गुरुः।

३४। षिध गत्याम्। } (षिध—भ्वा० प०) (षिध—भ्वा० क्कावेट्,
३४। षिधु गत्याम्। } प०) सेधति। उ—सेधित्वा सिद्धा। निष्ठायां पूर्व्वस्य सिधितः, शेषस्य क्कावेट्त्वात्रेम् डीङ्शीत्यनेन इमो निषेधे सिद्ध इति भेदः।

३५। षाधी न्य सिद्धौ। } (षाध—स्वा० दिवा० प०) (साध—दिवा०
३६। साध् यनौ सिद्धौ। } स्वा० प०) शेषो दन्त्यादिः। औ—सिषात्सति। न—साघ्नोति। य—साध्यति। शेषपक्षे औ—सिसात्सति। सिद्धिर्निष्पत्तिः। साध्यति घटो निष्पन्नः स्यादित्यर्थः। सिद्धिर्निष्पादनेति गोविन्दभट्टः। साघ्नोति साध्यति घटं कुलालः, निष्पादयतीत्यर्थः।

३७। स्पर्द्धङ सङ्घर्षे। (स्पर्द्ध—भ्वा आ०) सङ्घर्षः पराभिभवेच्छा। ङ—स्पर्द्धते मलिनं मल्ली। पस्पर्द्धे।

## सप्तत्रिंशच्च धान्तिकाः।

धकारान्ता धातवः सप्तत्रिंशत्संख्यकाः।

—०—

## नान्तवर्गः ।

### अनघ्लु प्राणनेऽन् यङ् च कनी ञि प्रीगतिद्युतौ ।

१ । अनघ्लु प्राणने । (अन—अदा० प० ) घ, लु—अनिति लोकः, जीवतीत्यर्थः ।

१ । अन् यङ् च । (अन—दिवा० आ० ) य, ङ—अन्यते । चकारात् प्राणने । "अपमृत्युं परित्यज्य सुखं प्राणिति यत्प्रजा । न प्राण्यते पुरं तस्य प्रतिकूलं करोति यः" इत्युभयत्र हलायुधः । ( १७२ ) ।

२ । कनी ञि प्रीगतिद्युतौ । ( कन—भ्वा० प० ) ई, ञि—कान्तोऽस्मि । प्रीः प्रीतिः । ( कनकशब्दव्युत्पत्तये कनी दीप्तौ वृत्रित्यमरटीका ) ।

### खनुञ् विदारे चन् शब्दे चन्म हिंसे जुनश् गतौ ।

३ । खनुञ् विदारे । ( खन—भ्वा० उ० ) उ—खनित्वा खात्वा । ञ— तृषितो जाह्नवीतीरे कूपं खनति दुर्म्मतिः । खनते ।

४ । चन् शब्दे । ( चन—भ्वा० प० ) चनति ।

४ । चन् म हिंसे । ( चन—भ्वा० घटादि, प० ) म—चनयति ।

५ । जुनश् गतौ । ( जुन—तुदा० प० ) श—जुनति । जोनिता ।

### जनी म्य ङ जनौ जन्मलिर्च तन् दुञ विस्तृतौ ।

६ । जनीम्यङ जनौ । ( जन—दिवा० आ० ) ई—जातः । म—जनयति । य, ङ—जायते । जनिर्जन्म । प्रादुर्भावे इति प्राञ्च । प्रादुर्भावः स्फुटीभावः, प्राकाश्ये प्रादुराविःस्यादित्यमरात् । वीजादङ्कुरो जायते, पत्रकाण्डादिभेदेन प्रकाशते इत्यर्थः । प्रादुर्भावोऽसदुत्पत्तिरिति केचित् । घटो जायते ।

६ । जन् मलि र्च । ( जन—ह्वा० प० ) म—जनयति । लि—जजन्ति । र—वैदिकः । चकाराज्जनौ ।

७ । तन् दुञ विस्तृतौ । ( तन—तना० उ० ) द, ञ—तनोति तनुते सुखं सुधीः । उ—तनित्वा तत्वा ।

### तनुक्युपकृतौ श्रद्धाघाते शब्दोपतापयोः ।
### उपसर्गाद्दैर्घके दान् आर्जवे छिदि मि ध्वन ।

## धन्रवे ध॑न्लि धान्ये पन्ङीड़े वन्ङु टुयाचने।

७। तनु ञ्युपक्षती अवाघाते शब्दोपतापयोः। (तन—चु॰ भ्वा॰ प॰) उ—तनित्वा तत्वा। ञि—तानयति तनति। उपक्षतिरुपकारः, अघातो हिंसावर्ज्जनं, सुनीतिरिति गोविन्दभट्टः।

उपसर्गाद्दैर्घके। दैर्घकं दीर्घीकरणम्। (अयं सोपसर्गश्चेत् दीर्घीकरणेऽर्थे वर्त्तते इत्यर्थः)। "वितानयति यः कीर्त्तिं वितनत्यमलं यशः" इति हलायुधः।८२।

८। दान आर्ज्जवे छिदि। (दान—भ्वा॰ उ॰) ऋजुरवक्रस्तस्य भाव आर्ज्जवं ऋजूकरणम्। अ—दीदांसति दीदांसते काष्ठं वर्द्धकिः, ऋजूकरोतीत्यर्थः। ऋजुभाव इति विद्यानिवासः। दीदांसति साधुः, ऋजुः स्यादित्यर्थः। "छेदे दानति दानते" इति वोपदेवः। तत्र तिवादयो नस्युरिति रमानाथः।

९। मि ध्वन रवे। } (ध्वन—भ्वा॰ प॰) (धन—भ्वा॰ प॰) मि—ध्वनयति ध्वानयति। धनति मृदङ्गः।

१०। धन रवे।

१०। ध॑न लि धान्ये। (धन—ह्वा॰ प॰) धान्यमिह धान्यक्रिया। र—वैदिक.। लि—दधन्ति भूमिर्धान्यमुत्पादयतीत्यर्थः।

११। पन ङीड़े। (पन—भ्वा॰ आ॰) ईड़ः स्तुतिः। पनायति पनायते विष्णुं सुधीः। आयान्तत्वादुभयपदमिति वोपदेवः। अरे तु आयस्याप्राप्तिपक्षे आत्मनेपदमेव। ङ—अपनिष्ट पेने पनिता इत्यादि।

१२। वन ङुटु याचने। (वन—तना॰ आ॰) ङ, ट—वनुते। उ—वनित्वा वत्वा।

## मान्ङ् विचारे मान्ञि चार्च्चेमन् च मन् काङ् च गर्व्वके।

१३। मान ङ् विचारे। (मान—भ्वा॰ आ॰) ङ—मीमांसते शास्त्रं धीरः।

१३। मान् ञि चार्च्चे। (मान—चु॰ भ्वा॰ प॰) ञि—मानयति मानति। चकारात् मानङ् च (अर्च्चार्थकः) अस्मात् (पूर्व्वोक्तमानधातोः) अर्च्चायां तिवादयो न स्युरिति रमानाथः।

१४। मन् च। (मन—भ्वा॰ प॰) मनति। चकारादर्च्चे।

१४। मन काङ् च गर्व्वके। (मन—चु॰ आ॰) क, ङ—मानयते। गर्व्वकोऽहङ्कारः। मन स्तम्भने इति प्राञ्चः। मानयते शत्रुं बली, स्तभ्नातीत्यर्थ इति रमानाथः। चकारात् मन च (गर्व्वार्थकः)।

## मन् दङ् बोधे मन्यौङ् च वन सम्भक्तिशब्दयोः।

१४। मन् दङ् बोधे। (मन—तना॰ आ॰) द, ङ—मनुते।

१५। मन्यौङ् च। (मन—दिवा॰ आ॰) य, ङ—मन्यते। औ—अमंस्त। चकारात् बोधे। (मनुते मनुतुल्योऽसौ प्रजामात्मजवत् प्रभुः। पितृवन्मन्यते तञ्च मान्यं जनपदः सदेत्युभयत्र हलायुधः। १५६।)

१५। वन सम्भक्तिशब्दयोः। (वन—भ्वा॰ प॰) वकारादिः। वनति। सम्भक्तिः सेवनम्।

## वनु म व्यापृतौ वन दुङ् याचे वन् कि तनुकिवत्।

१५। वनु म व्यापृतौ। (वन—भ्वा॰ प॰) उ—वनित्वा वत्वा। म—प्रवनयति। मित्त्वेऽप्यस्य औ ज्वलह्वलेत्यादिना केवलस्य विकल्पेन ह्रस्वविधानात् सोपसर्गस्यैव नित्यं ह्रस्वस्तेन वनयति वानयति। व्यापृतिर्व्यापारः। अयन्तु कर्म्मवत् क्रियामात्र इत्यन्ये। (गान्तवर्गे कर्म्म क्रियाक्षितिं कागधातुः क्रियामात्रवाचीत्युक्तं, अयमपि तद्वदित्यर्थः)।

१५। वन दुङ् याचे। (वन—तना॰ आ॰) द,ङ—वनुते। उ—वनित्वा वत्वा।

१५। वन कि तनुकिवत्। (वन—चु॰ भ्वा॰ प॰) कि—वानयति वनति। तनुकिवत्, उपकृतिशब्दाघातशब्दोपतापेष्वित्यर्थः। अयं केश्चिन्न मन्यते।

## शान्ञ तेजे शुनश् गत्यां षन् सम्भक्तौ तु षन् दुञ।

## दाने ष्टन् स्तन्मि शब्दे स्वन् ण च ण स्वन् मि तसने।

१७। शान्ञ तेजे। (शान—भ्वा॰ उ॰) तेजस्तीक्ष्णीकरणम्। ञ—शीशांसति शीशांसते खड्गं कर्म्मकारः।

१७। शुनश् गत्याम्। (शुन—तुदा॰ प॰) तालव्यादिः। श—शुनति। शोनिता।

१८। षन सम्भक्तौ तु। (षन—भ्वा॰ प॰) मूर्द्धन्यादिः। सम्भक्तिः सेवनम्। सनति गुरुं लोकः। तुशब्दः पादपूरणार्थः।

१८। षन दुञ दाने। (षन—तना॰ उ॰) द, ञ—सनोति सनुते। उ—सनित्वा सात्वा।

१९। ष्टन मि शब्दे।
२०। स्तन मि शब्दे। } (ष्टन—भ्वा० प०) (स्तन—भ्वा० प०) द्वौ क्रमान्मूर्द्धन्यदन्त्यादी। मि—स्तनयति स्तानयति। अतिष्टनत्। अतिस्तनत्।

२१। स्वन ण च। (स्वन—भ्वा० प०) वकारयुक्तः। ण—स्वेनतुः सस्वनतुः। चकारात् शब्दे।

२१। ण स्वन मि तंसने। (स्वन—भ्वा० प० वा घटादिः) वकारयुक्तः। शब्दे इत्यनुवर्त्तते, तंसने भूषणे कर्त्तरि (सति) शब्देऽर्थे, भूषणकर्तृकशब्देऽयमित्यर्थः। ण—स्वेनतुः सस्वनतुर्नूपुरौ। मि—स्वनयति स्वानयति कङ्कणं वधूः। अन्यत्र स्वानयति घण्टां जनः।

## हन् लौ गतौ बधेऽघण् दिषान्ताश्चेत्यष्ट विंशतिः।

२२। हन लौ गतौ बधे। (हन—अदा० प०) ल—हन्ति। औ—हन्ता। अणन्तमनित्यमिति न्यायात् कदाचित् शप्स्थितौ हनतीत्यपीति वररुचिः। तेन सर्व्वा एवाहनत् पृथगिति चण्डी। उद्धतिं विना भाषाया गतौ नास्य प्रयोगः। उद्धतौ—अग्रेसरैर्वाजिभिरुद्धतानीति रघौ उद्धतानि ऊर्द्ध्वं गतानीत्यर्थः। बध' प्राणवियोगफलकव्यापारः। जघान रावण रामः।

अघणदिषान्ताश्च। (अघणाः) घणवर्ज्जिता ये (दित.) षकारेतो मूर्द्धन्यणान्ता (धातवः) तेऽपि दन्त्यनान्ताः स्युरित्यर्थः। यथा—

२३। ऋन दुञ गतौ।
२४। क्षन दुञ बधे।
२५। क्षिन दुञ बधे।
२६। घृन दुञ दीप्तौ।
२७। तृन दुञ भक्षे।
२८। तॄन दुञ भक्षे। } (ऋन—तना० उ०) (क्षन—तना० उ०) (क्षिन—तना० उ०) (घृन—तना० उ०) (तृन—तना० उ०) (तॄन—तना० उ०) इति षट्। रूपाणि पूर्व्ववत्। फलन्तु मूर्द्धन्यणान्तानां तिकि ऋणिः क्षणिरित्यादि। यङ्लुकि चंक्षणीत्यादि। दन्त्यनान्तानान्तु ष्णोर्नुंभसीत्यस्य बलवत्त्वादादौ नस्यानुस्वारे 'ञपे अम् नो'रित्यस्य पुनर्नकारे सकृद्गतौ विप्रतिषेधो यद्बाधितं तद्बाधितमेवेति न्यायात्तत्वाभावे तिकि ऋन्तिः क्षन्तिरित्यादौ, यङ्लुकि चंक्षन्तीत्यादौ च दन्त्यस्थितिरिति।

इत्यष्ट विंशतिः।

( इति इमे धातवः, अष्ट विंशतिः, अष्टेति पृथक्पदं अष्टसंख्यका विंशति-संख्यकाश्च, समुदायेनाष्टाविंशतिरित्यर्थः । कोटीशतमो दशचेतिवत् ) ।

---

## पान्तवर्गः ।

**आप्लृ नौ कि व्यापने चिप् शञौ चिप्यौ नुदि चपिक् ।**
**शक्तौ कुप्क द्युतौ कुप्य इर्कोपे कुपि कि स्तृतौ ।**

१ । आप् लृ नौ कि व्यापने । ( आप—स्वा० चु० भ्वा० प० ) लृ—आपत् । न—आप्नोति कीर्त्तिर्ब्रह्माण्डम् । औ—आप्ता । कि—आपयति आपति । स्वराज्यं प्राप्स्यते भवानिति गणकृतानित्यत्वात् ।

२ । चिप् शञौ नुदि । ( चिप—तुदा० उ० ) ( चिप—दिवा० प० )

२ । चिप्यौ नुदि । नुदि प्रेरणे । श, ञ—चिपति चिपते शरं योधः । औ—चेप्ता । य—चिप्यति ।

३ । चपिक् शक्तौ । ( चम्प—चु० प० ) शक्तिरिह चमा । इ, क—चम्पयति दुःखं मुनिः, सहते इत्यर्थः ।

४ । कुप्क द्युतौ । ( कुप—चु० प० ) क—कोपयति ।

४ । कुप्य इर्कोपे । ( कुप—दिवा० प० ) कोपो नेत्रलौहित्यादिहेतुश्चित्त-विकारः । य—कुप्यति माता शिशवे । इर्—अकुपत् अकोपीत् । अस्मा-न्नित्यं ङ इति दुर्गः । कदाचित् कुप्यते माता नोदरस्था हरीतकीति तु कुप्यतीति कुप्, सा इवाचरतीति ङ्ये साध्यम् ।

४ । कुपि कि स्तृतौ । ( कुम्प—चु० भ्वा० प० ) पञ्चमस्वरी । इ—कुम्पति । कि—कुम्पयति कुम्पति । स्तृतिराच्छादनम् ।

**कृपष्मङ कृपायां ङ केपृ गत्यां कपिङ्ङपि ।**
**चाले कृप् कि युतौ चिन्ने कृपूङ् वलृ च कल्पने ।**

५ । कृपष्म ङ कृपायाम् । ( कृप—भ्वा० आ० ) कृपा दया । ष—कृपा, भीषिचिन्तीति ङे मनीषादित्वाद्रेफस्य ऋकारः । म—कृपयति । ङ—कृपते दयालुर्दीनम् ।

६। ङ केपृ गत्याम्। (केप—भ्वा० आ०) ङ—केपते। चिकेपे। अ—अचिकेपत्।

७। कपिङ्ङपि चाले। (कम्प—भ्वा० आ०) चालः कम्पनम्। इ—कम्प्यते। ङ—कम्पते वायुना वृक्षः। अपिग्रहणात् केपृ च (कम्पनार्थकः)।

८। क्लप कि युतौ चित्रे। (क्लप—चु० भ्वा० प०) सप्तमस्वरी। कि—कल्पयति कल्पति। क्लपः क्लृपोऽक्लपादाविति क्लृपादेशः। (युतिर्मिश्रणम्, कल्पयति दुग्धं जलेन। चित्रं चित्रकरणम्, कल्पयति प्रतिमां शिल्पी। "न कल्पयति मिथ्यार्थं गिरः कल्पति विद्विषाम्" इति हलायुधः। ८१)।

८। क्लपूङ् वस्ट च कल्पने। (क्लप—भ्वा० आ०) सप्तमस्वरी। कल्पनं सामर्थ्यम्। ऊ—अकल्पिष्ट अक्लृप्त। ङ—योऽर्थिनामीप्सितप्राप्तौ कल्पते कल्पवृक्षवदिति हलायुधः। ८२। व—कल्प्स्यति चिक्लृप्सति। स्ट—अक्लृपत्। हते तस्मिन् प्रियं श्रुत्वा कल्पा प्रीतिं परां प्रभुरित्यनेकार्थत्वे अन्तर्भूतण्यर्थत्वात् जनयितेत्यर्थः। चकारात् क्लपकि च।

## गुपू रक्षे गुपक् भासि गुपङ् गोपनकुत्सयोः।

८। गुपू रक्षे। (गुप—भ्वा० प०) एतदाद्यास्त्रयः पञ्चमस्वरिणः। गोपायति गोपायते। आयान्तत्वादुभयपदमिति वोपदेवः। अरे तु आयस्या-प्राप्तिपक्षे परस्मैपदमेव। अगोपीत् जुगोपेत्यादि। जुगोप गोरूपधरामिवोर्वी-मिति रघुः। २। ३। ऊ—गोपिष्यति गोप्स्यति।

८। गुपक् भासि। (गुप—चु० प०) क—गोपयति। भासि दीप्तौ। (धातूनामनेकार्थत्वादस्य गोपनार्थे बहुलप्रयोगः)।

८। गुपङ् गोपनकुत्सयो। (गुप—भ्वा० आ०) गोपनमपह्नवः। ङ—कङ्कणभञ्जनत्कारश्च किं गोपसे। अत्र त्यादयो न स्युरिति रमानाथः। कुत्सा निन्दा। सा जुगुप्साम्प्रचक्रेऽसूनिति भट्टिः। १४। ५८।

## गुप्य व्याकुलत्वे ङ ग्लेपृ दैन्ये ङ गेपृ च।

## केपृवत् चपक्भ कल्के चप् सान्त्वे चुप् शनैर्गतौ।

८। गुप्य व्याकुलत्वे। (गुप—दिवा० प०) व्याकुलत्वं व्याकुलीभाव-स्तत्कारणञ्च। य—धीरो न गुप्यति महत्यपि कार्य्यजाते इति हलायुधः। ६।

गुप्यति गां दुष्टिं, आकुलीकरोतीत्यर्थं इति चतुर्भुजः। इर्—अगुपत् अगोपीत्। अस्मामित्यं ङ इति दुर्गसिंहः।

१०। ङ ग्लेपृ दैन्ये। (ग्लेप—भ्वा० आ०) अन्तःस्थातृतीययुक्तः। ङ—ग्लेपते निर्धनः सदा। ञ्ट—अजिग्लेपत्।

११। ङ गेपृ च केपृवत्। (गेप—भ्वा० आ०) ङ—गेपते। ञ्ट—अजिगेपत्। चकारात् 'ङ ग्लेपृ च' केपृवत् गतिकम्पनयोः।

१२। चपकम् कल्के। (चप—चु० प०) कल्कश्चूर्णीकरणम्। क, म—चपयति तण्डुलान् शिला।

१२। चप् सान्त्वे। (चप—भ्वा० प०) सान्त्वः प्रियवचनम्, उपशमो वा। चपति पुत्रं माता।

१३। चुप् शनैर्गतौ। (चुप—भ्वा० प०) चोपति खञ्जः। चोपति दुष्टं राजा इति रमानाथः।

चुलुम्प् लोपे छपिक् सर्पे छुप् शौ स्पर्शे ञपक् मतु।
ञप्तौ जप व्यक्तोच्चारे जल्पच् वाचि टिपक् नुदि।

१४। चुलुम्प लोपे। (चुलुम्प—भ्वा० प०) अन्तस्थाद्वतीयमध्यः, पञ्चमस्वरद्वयो, ओष्ठ्यवर्गशेषोपधश्चायम्। चुलुम्पति। यगादौ चुलुम्प्यते इत्यादि। न च 'नकारजावनुस्वारपञ्चमौ' इति स्वरसादस्य नप्रकृतित्वे यगादौ तल्लोप इति वाच्यम्, तर्हि नोपधस्यैव पठितुमुचितत्वात्। एवं सति श्रुङ्गादीनां नप्रकृतित्वेऽपि ङमध्यपाठः कथमिति चेन्न, ते तु कस्यचिन्मते ङमध्या एवेति ज्ञापनाय ङमध्याः पठिताः। न च तर्हि इदित्पाठेऽपीष्टसिद्धिरिति वाच्यम्, क्विपि संयोगान्तलोपे चुलुन्, चुलुम्पपाठे चुलुम् इति भेदात्। एवं सर्व्वत्र।

१५। छपिक् सर्पे। (छम्प—चु० प०) इ, क—छम्पयति। सर्पो गतिः।

१६। छुप्शौ स्पर्शे। (छुप—तुदा० प०) श—छुपति। औ—छोप्ता।

१७। ञपक् मतु ज्ञप्तौ। (ज्ञप—चु० प०) क, म—ज्ञपयति। "ज्ञप्तिर्मीरणालोकनिशानस्तुतय.। ज्ञाकम इत्यनेनेवेष्टसिद्धौ ज्ञपपाठश्चुरादिरुभयपदीति मते फलवत्कर्त्तरि परस्मैपदार्थं इति धातुप्रदीपः। वस्तुतस्तु ज्ञप्तिपदमस्यैव निष्पादितम्। तेन अनिर्दिष्टार्थत्वात् ज्ञप्तिरिह ज्ञानम्। अतएव

प्रज्ञीयं ज्ञीप्से इत्यत्र अस्यैव सनन्तस्य निष्पादितेन ज्ञीप्सशब्देन ज्ञातुमिच्छेति प्रतिपाद्यते। एवं ज्ञानपर्य्याये प्रतिपज्ज्ञप्तिचेतना इत्यमरश्च।

१८। जप व्यक्तोच्चारे। (जप—भ्वा० प०) जिह्वोष्ठादिव्यापाररहितं शब्दार्थयोश्चिन्तनं व्यक्तोच्चारः। जपति मन्त्रं साधकः।

१९। जल्प च वाचि। (जल्प—भ्वा० प०) अन्तस्थाद्वतीयोपधः। जल्पति। चकारात् जप च।

२०। टिपक् नुदि। (टिप—चु० प०) क—टेपयति। नुदि प्रेरणे।

## डिप शिक्य इर्चं डिपि डिप् डप् डपिक्ङ्ञ सहृतौ।

२१। डिप शिक्य इर्चं। (डिप—तुदा० चु० दिवा० प०) शि—डिपति, अडिपीत्। क—डेपयति। य—डिप्यति। इर्—अडिपत् अडेपीत्। तुदाद्यन्तर्गणस्यैव कुटादित्वमिति दिवादिपक्षे गुणः। दिवादिपक्षे पुषादित्वान्नित्यं ङ इत्यन्ये। चकारात् नुदि।

| | |
|---|---|
| २१। डिपि कङञ सहृतौ। | (डिम्प—चु० उ०) (डिप—चु० उ०) |
| २१। डिप कङञ संहृतौ। | (डप—चु० उ०) (डम्प—चु० उ०) |
| २२। डप कङञ संहृतौ। | मूर्द्धन्यवर्गहतीयाद्याः सर्व्वे। इ, क, |
| २२। डपि कङञ संहृतौ। | ङ—डिम्पयते। ञ—डिम्पयति डिम्प- |

यते। क, ङ—डेपयते। ञ—डेपयति डेपयते। क, ङ—डापयते। ञ—डापयति डापयते। क, ङ—डम्पयते। ञ—डम्पयति डम्पयते। पुनः पाठान्मध्यमौ नेदनुबन्धौ। एते आत्मनेपदिन इत्यन्ये। संहृतीराशीकरणम्।

## तप् ङञ् दाहे तप कच तपौ तप्यौङ् दवैश्वर्ययोः।

२३। तप् ङञ् दाहे। (तप—भ्वा० उ०) ङ—तपते। ञ—तपति तपते। अयमात्मनेपदीत्यन्ये।

२३। तपक् च। (तप—चु० प०) क—तापयति। चकाराद्दाहे। अयमात्मनेपदीत्येके।

| | |
|---|---|
| २३। तपौ दवैश्वर्ययोः। | (तप—भ्वा० प०) (तप—दिवा० आ०) |
| २३। तप्यौङ् दवैश्वर्ययोः। | दव उपतापः। तपति तनुमाति मदन- |

स्वाम्। औ—अतासीत्। य, ङ—तप्यते धनी, ईश्वरः स्यादित्यर्थः। औ—अतप्त। दिवादिपक्षे ऐश्वर्य्ये एव इत्यन्ये।

तपू षमिङ् क्रियि तिप जक्षङ श्रुति तेपृङ।
कम्पे च तृप् कि सन्दीपे तृप्न च प्रीणने ञिलृ।
तृप्यू च तृप् पश् च तुप तुप् बधे तुप् पश क्लिशि।
बधे तुपिक् त्वह्निने प्राक् चतुष्को नोपधो न पित्।

२४। त्रपू षमिङ क्रियि। (त्रप—भ्वा० आ ) ऊ—अत्रपिष्ट अत्रप्त। ष—त्रपा। मि—त्रपयति त्रापयति। ङ—त्रपते। क्रियि लज्जायाम्।

२५। तिप ज क्ष ङ श्रुति। (तिप—भ्वा० आ०) ज—तेपिष्यते तेप्स्यते। क्ष—अतितेपत्। ङ—तेपते तितेपे। श्रुत् क्षरणम्।

२६। तेपृङ कम्पे च। (तेप—भ्वा० आ०) क्ष—अतितेपत्। ङ—तेपते वृक्षः। तितेपे। चकारात् श्रुति च।

२७। तृप कि सन्दीपने। (तृप—चु० भ्वा० प०) कि—तर्पयति तर्पति।

२७। तृप्न च प्रीणने। (तृप—स्वा० प०) प्रीणनं प्रीतीकरणम्। न—तृप्नोति पितरं पुत्रः। ततर्प। चकारात् तृपकि च (प्रीणनार्थकः) योऽग्निं-अयं तर्पतीति हलायुधः। १०।

२७। ञिलृ तृप्यू च। (तृप—दिवा० प०) ञि—तृप्तोऽस्ति। लृ—अतृपत्। अस्य लिदित्त्वेऽपि कृष मृश स्पृशेत्यादिना पक्षे सिः, तेन अताप्सीत् अत्राप्सीत् अतर्पीत् इत्यादि। य—तृप्यति। ऊ—तर्पिष्यति तप्स्यति। चकारात् प्रीणने। प्रीणनमिह प्रीतीभावः प्रीतीकरणञ्च। स्यन्दीनि तृप्यतु मधूनि पिबन्निवायमिति श्रीहर्षः। पितॄनताप्सीन्नृपरक्ततोयैरिति भट्टिः। २। ५२।

२७। तृप प श च। (तृप—तुदा०, प०) प, श—तृम्पति। ततर्प। चकारात् प्रीणने।

२८। तुप बधे। } (तुप—भ्वा० प०) (तुप—भ्वा० प०) तोपति।
२९। तुप बधे। } तोपति।

२९। तुप पश क्लिशि बधे। (तुप—तुदा० प०) प, श—तुम्पति। तुतोप।

२८। तुपिक् त्वर्द्दने। (तुम्प—चु० प०) पञ्चमस्वरी। इ, क—तुम्पयति। अर्द्दनं बधः।

प्राक् चतुष्को नोपधो न पित्। तुभिकः पूर्व्वे चत्वारो ये धातव स्ते नकारोपधा भूत्वा पकारेतो न स्युरित्यर्थः। यथा—

३०। त्वन्‌प श प्रीणने। ३१। त्वुन्‌प बधे। ३२। तुन्‌प बधे। ३२। तुन्‌प श क्लिंशि बधे। (त्वन्‌प—तुदा० प०) (त्वुन्‌प—भ्वा० प०) (तुन्‌प—भ्वा० प०) (तुन्‌प—तुदा० प०) इति। प्रीणनमिह प्रीतीभावः। श—त्वपति लाभात्तोषः। तत्वम्प। त्वुम्पति। तुम्पति। श—तुपति। तुतुम्प। तुप पश, तुन्‌प श क्लिशि बधे इत्येताभ्यां तुम्पति तुपतीति रूपद्वयसिद्धौ तुन्‌प बधे इत्यस्य भ्वादौ पाठस्तु वेदे अवन्तस्य शान्तस्य च उच्चारणभेदार्थः।

## दीपीङ्य ऋ दीपने जि दृप्यू इर् हर्षगर्व्वयोः।

३३। दीपीङ्य ऋ दीपने। (दीप—दिवा० आ०) दीपनमुज्ज्वलीभावः। ई—दीप्तः। ङ, य—दीप्यते निशि चन्द्रमाः। ऋ—अदीदिपत् अदिदीपत्।

३४। जि दृप्यू इर् हर्षगर्व्वयोः। (दृप—दिवा० प०) जि—दृप्तोऽस्ति। य—दृप्यति। ऊ—दर्पिष्यति दर्प्स्यति (वर्द्धोऽकिदित्यनेन द्रप्स्यतीत्यपि)। इर्—अदृपत् अदर्पीत् अद्राप्सीत् अदार्प्सीत्।

## दृप् कि सन्दीपने दृप्श बाधने दृम्प दिम्प ञङ्।

## क सङ्घाते धूप्क दीप्तौ धूप् तापे पुष्प्य फुल्लने।

३४। दृप् कि सन्दीपने। (दृप्—चु० भ्वा० प०) कि—दर्पयति दर्पति।

३४। दृप श बाधने। (दृप—तुदा० प०) श—दृपति, दर्पिता। बाधनं विहतिः।

३५। दृम्प ञ ङ क सङ्घाते। ३६। दिम्प ञ ङ क सङ्घाते। (दृम्प—चु० उ०) (दिम्प—चु० उ०) द्वावोष्ठ्यवर्गशेषोपधौ, क्रमात् सप्तमतृतीयस्वरिणौ च। ञ, क—दृम्पयति दृम्पयते। दिम्पयति दिम्पयते। सङ्घातो राशीकरणम्। ङ—दृम्पयते दिम्पयते। एतौ केचिन्न मन्यन्ते।

३७। धूपक् दीप्तौ। (धूप—चु० प०) षष्ठस्वरी। क—धूपयति।

३७। धूप तापे। (धूप—भ्वा० प०) षष्ठस्वरी। धूपायति धूपायते। आयान्तत्वादुभयपदमिति वोपदेव। अपरेतु आयस्याप्राप्तिपक्षे परस्मैपदमेव। अधूपीत् दुधूपेत्यादि। ताप सन्तप्तीकरणम्।

३८। पुष्प्य फुल्लने। (पुष्प—दिवा० प०) पञ्चमस्वरी, मूर्द्धन्योपधश्च। फुल्लन विकसनम्। य—पुष्प्यति कुन्दकोरकः।

**ङ मेपृ गत्यां युप् रुप्य इर्विमोहेऽथ रप् वदे।**

३९। ङ मेपृ गत्याम्। (मेप—भ्वा० आ०) ङ—मेपते मिमेपे। ऋ—अमिमेपत्।

४०। युप्य इर्विमोहे। } (युप—दिवा० प०) (रुप—दिवा० प०)
४१। रुप्य इर्विमोहे। } आद्योऽन्तःस्थाद्यादिः। विमोह आकुलीकरणम्। य—युप्यति, रुप्यति लोकं शोकः। इर्—अयुपत् अयोपीत्। अरुपत् अरोपीत्। आभ्यां नित्यं ङ इति दुर्गः।

४२। अथ रप् वदे। (रप—भ्वा० प०) रपति। वदः कथनम्।

**ङ रेपृ शब्दे लेपृङ्च गमने ञि लिपौ शपञ।**
**लेपे लुपृश् प्लृञौ छेदे इर्लुप्य युपि ऋत् लप।**
**भाषे व्यप्क क्षये विप्क क्षेपे टु ङ् वेप् चले वपौञ्।**
**ड्वै मुण्डतन्तुबीजोप्त्योः शूर्पक् माने य शप्शपौञ्।**
**क्रोशे छ्वपौ घृलु ञि शये ष्टिप ष्टेपृ ङ तु स्तृपति।**

४३। ङ रेपृ शब्दे। (रेप—भ्वा० आ०) ङ—रेपते। रिरेपे। ऋ—अरिरेपत्।

४४। लेपृ ङ च गमने। (लेप—भ्वा० आ०) ऋ—अलिलेपत्। ङ—लेपते। लिलेपे। चकारात् ङरेपृ च (गमनार्थकः)।

४५। ञि लिपौ श प ञ लेपे। (लिप—तुदा० उ०) ञि—लिप्तोऽस्ति। औ—लेप्ता। श, प, ञ—लिम्पति लिम्पते चन्दनेन गात्रं सुखी।

४६। लुपॢ श्र्प्लृजो छेदे। (लुप—तुदा० उ०) ऋद—अलूलुपत् अलु-लोपत्। श, प, अ—लुम्पति लुम्पते। लृ—अलुपत्। श्रौ—लोप्ता।

४६। इर्लुप्य युपि। (लुप—दिवा० प०) इर्—अलुपत् अलोपीत्। अस्मान्नित्यं ङ इति दुर्गः। य—लुप्यति। युपि (इह) आकुलीभावे। "पातुं लुप्यति लावण्यं नेत्राञ्जलिपुटैर्नरः" इति हलायुधः॥ १७३॥

४७। ऋद लप भाषे। (लप—भ्वा० प०) ऋद—अलीलपत् अललापत्। भाषः कथनम्।

४८। व्यप क् क्षये। (व्यप—चु० प०) अन्तःस्थाद्ययुक्तः। क—व्यापयति।

४९। विप् क क्षेपे। (विप—चु० प०) क—वेपयति।

५०। टुऋदङ् वेप चले। (वेप—भ्वा० आ०) चलः कम्पनम्। ट—वेपथुः। ऋद—अविवेपत्। ङ—वेपते वायुना वृक्षः।

५१। वपीञ् डु मुण्डतन्तुवीजोप्तयोः। (वप—भ्वा० उ) श्रौ—वप्ता। ञ—वपति वपते। डु—उप्त्रिमम्। ऐ—उप्यात्। मुण्डो लोमच्छेदः, वपति मस्तकं नापितः। तन्तुवीजयोरुप्तिः तन्तुवीजोप्तिः। वपति तन्त्रं तन्त्रवायः। यदि वपति कृषाणः चैत्रमासाद्य वीजमिति।

५२। शूर्पक् माने। (शूर्प—चु० प०) षष्ठस्वरी। क—शूर्पयति धान्यं शस्त्री।

५३। य शपी ञ क्रोशे। } (शप—दिवा० उ०) (शप—भ्वा० उ०)
५३। शपी ञ क्रोशे। } तालव्यादी। य, ञ—शप्यति शप्यते।

श्रौ—शप्ता, अशाप्सीत्। ञ—शपति शपते। क्रोशो दिवादिपक्षे उक्तिविशेषः। निर्भर्त्सनमिति चतुर्भुजः। सहस्रशोऽसौ शपथानशप्यदिति भट्टिः। ३। ३२। भ्वादिपक्षे गालिदानम्। शपतेर्भिन्नत्वेऽपि शपथाशोर्ग्मत्यनुकार इति नियमात् शपथे आत्मनेपदम्, अन्यत्र परस्मैपदम्। कृष्णाय शपते गोपी। प्रजेति त्वां शशाप सा इति रघुः। १। ७७। सख्यः शपामि यदि किञ्चिदपि स्मरामीति तु शरीरस्पर्शनाभावादिति पाणिनीयाः। केचित्तु शपथे नित्यमात्मनेपदमन्यत्र विभाषयेत्याहुः, तेन "प्रतिवाचमदत्त केशवः शपमानाय न चेदिभूभृते" इति माघः। १६। २५।

५४। ञिष्वपी घ लुजि शये। (स्वप—अदा० प०) वकारयुक्तमूर्धन्यादिः। श्रौ—अस्वाप्सीत्। घ, लु—स्वपिति। ञि—सुप्तोऽस्ति। शयः शयनम्।

५५। ष्टिपृङ च्युतिः। } ( ष्टिप—भ्वा० आ० ) ( ष्टेप—भ्वा० आ० )
५६। ष्टेपृङ च्युतिः। } ऋ—अतिष्टेपत्। ङ—स्तेपते। तिष्टिपे, तिष्टेपे। च्युत् चरणम्।

## ष्टूप् कोच्छ्राये ष्टूप्य ङर्चं षप् सम्बे सादयस्त्रयः।

५७। ष्टूप् कोच्छ्राये। ( ष्टूप—चु० प० ) षष्ठस्वरी। उच्छ्रायो राशी-करणम्। क—स्तूपयति धान्यं कृषकः। तुष्टूपयिषति।

५७। ष्टूप्य ङर्चं। (ष्टूप—दिवा० प०) षष्ठस्वरी। य—स्तूप्यति। इर्—अस्तूपत् अस्तूपीत्। अस्मान्नित्यं ङ इति दुर्गः। अतुष्टूपत्। चकारादुच्छ्राये।

५८। षप सम्बे। ( षप—भ्वा० प० ) मूर्द्धन्यादि। सपति। असीषपत्। सम्बः सम्बन्धः।

सादयस्त्रयः। ष्टूपकादयस्त्रयो दन्त्यसादयश्च स्युरित्यर्थः।

५९। स्तूप् कोच्छ्राये। ( स्तूप—चु० प० ) तुस्तूपयिषति।

५९। स्तूप्य ङर्चं। ( स्तूप—दिवा० प० ) अतुस्तूपत्।

६०। सप सम्बे। ( सप—भ्वा० प० ) असीसपत्।

## स्तेपक क्षेपे लृ सृपी गत्यां क्रेपृङ च क्लपक्।

## भाषणे स्युः पकारान्ताश्चतुःषष्टिस्तु धातवः।

६१। स्तेपक् क्षेपे। ( स्तेप—चु० प० ) एकादशस्वरी। क—स्तेपयति। तिस्तेपयिषति।

६२। लृ सृपी गत्याम्। ( सृप—भ्वा० प० ) लृ—असृपत्। अस्य लृदित्त्वेऽपि लिष मृश स्पृश इत्यादिना पक्षे सिः, तेन अस्राप्सीत् असार्प्सीत्। औ—सप्ता सर्प्ता।

६३। क्रेपृङ च। ( क्रेप—भ्वा० आ० ) रेफयुक्तः। ऋ—अचिक्रेपत्। ङ—क्रेपते, चिक्रेपे। चकारात् गत्याम्।

६४। क्लपक् भाषणे। ( क्लप—चु० प० ) अन्तःस्थाद्वितीययुक्तः। क—क्लापयति। रेफयुक्तादिरयमित्येके। अन्तःस्थाद्वितीययुक्तः कण्ठ्यवर्गाद्यादिरिति दुर्गसिंहादयः। क्लापयति अचिक्लपत्। भाषः कथनम्।

## स्युः पकारान्ताश्चतुःषष्टिस्तु धातवः।

(सुगमम्)।

—•—

## फान्तवर्गः।

**ऋफश् दाने श्लाघहिंसानिन्दाजौ प् गुफ गुन्फश।**
**ग्रन्थेप् दृफ् दृन्फशुत्क्लेशे रिफ् शर्फे रिन्फ पश् वधे।**

१। ऋफ श दाने श्लाघहिंसानिन्दाजौ। (ऋफ—तुदा० प०) आजि-र्युद्धम्। श—ऋफति जनो ददाति, श्लाघते, हिनस्ति, निन्दति, युध्यते वेत्यर्थः। आनर्फ। हिंसायामेवेति केचित्।

२। प गुफ श ग्रन्थे। } (गुफ—तुदा० प०) (गुन्फ—तुदा० प०)
३। गुन्फ श ग्रन्थे। } द्वौ पञ्चमस्वरिणौ। प, श—गुम्फति। श—गुम्फति मालां मालिकः। जुगोफ। जुगुम्फ।

४। प दृफ श उत्क्लेशे। } (दृफ—तुदा० प०)(दृन्फ—तुदा० प०)
५। दृन्फ श उत्क्लेशे। } द्वौ दन्त्यवर्गतृतीयादौ, सप्तमस्वरिणौ च। प, श—दृम्फति। श—दृम्फति चौरं राजा, क्लिश्नातीत्यर्थः। ददर्फ, ददृम्फ।

६। रिफश् शर्फे। (रिफ—तुदा० प०) रेफादिः। श—रिफति। शर्फो दानश्लाघहिंसानिन्दायुद्धानि।

७। रिन्फ पश् वधे। (रिन्फ—तुदा० प०) नोपधः। प, श—रिम्फति। रिम्फती रिम्फन्ती। सप्तमस्वरादिरयमिति केचित्। ऋम्फति।

**रफिरफ्वर्फगत्याश्च दृप्योऽष्टौ दशपञ्च फाः।**

८। रफि गत्याश्च। } (रम्फ—भ्वा० प०) (रफ—भ्वा० प०) (वर्फ—
८। रफ गत्याश्च। } भ्वा० प०) द्वावाद्यौ रेफादौ, शेषो वकारादौ-
८। वर्फ गत्याश्च। } रेफोपधः। इ—रम्फते। रफति। वर्फति। वकाराद्यात् वधे च।

दृप्योऽष्टौ। पूर्वचकारस्य वाक्यद्वयमध्यवर्त्तित्वादेतद्वाक्येनापि सम्ब-न्ध

र्षोन ष्टप पशपेति प्रभृतयो ये अष्टौ पान्तास्तेच फान्ताः स्युरित्यर्थः । ( ष्टफ इति प्रथमाबहुवचनान्तं, बहुवचनं गणार्थं तेन मुचादिष्टपधातुमारभ्य अनोपधाश्चत्वारो णोपधाश्च चत्वार इत्यष्टावित्यर्थः )। यथा—

| | |
|---|---|
| १०। ष्टफ पश प्रोणने । | ( ष्टफ—तुदा० प० ) ( स्तुफ—भ्वा० प०) |
| ११। चुफ बधे । | ( तुफ—भ्वा० प० ) ( तुफ—तुदा० प०) |
| १२। तुफ बधे । | ( ष्टनृफ—तुदा० प० ) ( स्तुनृफ—भ्वा० |
| १२। तुफ पश क्लि शि बधे । | प० ) ( तुनृफ—भ्वा० प० ) ( तुनृफ— |
| १३। ष्टनृफ श प्रोणने । | तुदा० प० ) इति । प, श—ष्टम्फति । |
| १४। स्तुनफ बधे । | ततर्फ । स्तोफति तोफति । प, श— |
| १५। तुनृफ बधे । | तुम्फति । तुतोफ । श—ष्टफति । तष्टम्फ । |
| १५। तुनृफ श क्लिशि बधे । | स्तुम्फति । तुम्फति । श—तुफति । तुतुम्फ । |

इत्यपञ्च फाः । फान्ताः पञ्चदशेत्यर्थः ।

---

## बान्तवर्गः ।

अर्ब हिंसेऽम्ब च गतेऽबिङ शब्दे कबृङ् स्तुतौ ।
वर्णे क्षीबृङ दर्पेङ क्लीबधार्ष्ट्ये कुटुम्ब क ।
ङ धृत्यां कुबि कि स्तृत्यां कर्ब कम्ब खर्ब खम्ब ।
गर्ब गम्ब घर्ब घम्ब चर्ब चम्ब गतौ चुबि ।
कि चुम्बने डब डिबि क नोदे स्यात्तुबि कि तु ।
अर्द्दे तर्ब तम्ब नर्ब नम्ब पर्ब पम्ब गतौ ।

१। अर्ब हिंसे । ( अर्ब—भ्वा० प० ) अर्बति ।

२। अम्बच गतौ । ( अम्ब—भ्वा० प० ) ओष्ठ्यवर्गशेषोपधः । अम्बति चकारादर्बच ( गत्यर्थकः ) ।

३। अबिङ् शब्दे । ( अम्ब—भ्वा० आ० ) इ—अम्ब्यते । ङ—अम्बते अम्बां पुत्र इति चतुर्भुजः ।

४। कबृङ स्तुतौ वर्णे । ( कब्ब—भ्वा० आ० ) वर्णः शुक्लादिक्रिया । अट—अचकाबत् । ङ—कबते कविर्विष्णुम् । कबते प्रतिमां चित्रकारः ।

५। क्षीवृङ दर्पे। ( क्षीव—भ्वा० आ० ) दर्पो मत्तीभावः। ऋट—अचिक्षीवत्। ङ—क्षीवते मद्यपः। ( अस्मात् क्ते निपातनात् क्षीव )।

६। ङ क्लीवृ अधार्ष्ट्ये। ( क्लीव—भ्वा० आ० ) अन्त स्थद्वतीययुक्तः। अधार्ष्ट्यमप्रगल्भीभावः। ङ—शोकेन क्लीवते सर्व्वं इति हलायुधः। ८५। ऋट—अचिक्लीवत्।

७। कुटुम्ब कङ धृत्याम्। ( कुटुम्ब—चु० आ० ) पञ्चमस्वरद्वयीओष्ठ्य-वर्गशेषोपधः। क, ङ—कुटुम्बयते। इमं कश्चिन्न मन्यते।

८। कुबि कि स्तृत्याम्। ( कुम्ब—चु० भ्वा० प० ) पञ्चमस्वरौ। इ—कुम्बयते। कि—कुम्बयति कुम्बति। स्तृतिराच्छादनम्।

९। कर्ब गत्याम्।
१०। कम्ब च।
११। खर्ब गतौ।
१२। खम्ब गतौ।
१३। गर्ब गतौ।
१४। गम्ब गतौ।
१५। घर्ब च।
१६। घम्ब गतौ।
१७। चर्ब गतौ।
१८। चम्ब गतौ।

( कर्ब—भ्वा० प० ) ( कम्ब—भ्वा० प० ) ( चकारात् गत्याम् )। ( खर्ब—भ्वा० प० ) ( खम्ब—भ्वा० प० ) ( गर्ब—भ्वा० प० ) ( गम्ब—भ्वा० प० ) ( घर्ब—भ्वा० प० ) ( चकारात् गतौ )। ( घम्ब—भ्वा० प० ) ( चर्ब—भ्वा० प० ) ( चम्ब—भ्वा० प० ) दशैते ( कर्बादयो दशेत्यर्थः ) आद्यद्वतीय-पञ्चमसप्तमनवमा रेफोपधाः, शेषा ओष्ठ्य-वर्गशेषोपधाः। कर्बति, कम्बति, खर्बति, खम्बति, गर्बति, गम्बति, घर्बति, घम्बति, चर्बति, चम्बति।

१९। चुबि कि चुम्बने। ( चुम्ब—चु० भ्वा० प० ) चुम्बनं मुखसंयोगः। इ—चुम्बयते। कि—चुम्बयति चुम्बति कान्ताधरं कामी। प्रियामुखं किम्पुरुषश्चुचुम्बे इति तु व्यतीहारे आत्मनेपदम्।

२०। डबिक् मोदे।
२१। डिबिक् मोदे।

( डम्ब—चु० प० ) ( डिम्ब—चु० प० ) द्वौ मूर्द्धन्यवर्गद्वतीयादी। इ, क—डम्बयति, डिम्बयति। मोदः प्रेरणम्।

२२ । तुबि कि तु अर्हे । (तुम्ब—चु॰ भ्वा॰ प॰) तवर्गाद्यादिः पञ्चमस्वरी । इ—तुम्ब्यते । कि—तुम्बयति तुम्बति । अर्हो बधः ।

२३ । तर्ब गतौ ।
२४ । तम्ब गतौ ।
२५ । नर्ब गतौ ।
२६ । नम्ब गतौ ।
२७ । पर्ब गतौ ।
२८ । पम्ब गतौ ।

(तर्ब—भ्वा॰ प॰) (तम्ब—भ्वा॰ प॰) (नर्ब—भ्वा॰ प॰) (नम्ब—भ्वा॰ प॰) (पर्ब—भ्वा॰ प॰) (पम्ब—भ्वा॰ प॰) आद्यतृतीयपञ्चमा रेफोपधाः शेषा ओष्ठ्यवर्गशेषोपधाः । तर्बति, तम्बति, नर्बति, नम्बति, पर्बति, पम्बति ।

पूर्ब क् निकेतने वर्ब वम्ब मर्ब मम्ब रिबि ।
रबि गत्यां रबिङ् शब्दे लबिङ स्रंसने च कि ।
लुब्यर्दने शम्ब गतौ शर्ब हिंसे च शुल्ब क ।
माने सर्गे षर्ब षम्ब सर्ब सम्ब तु सर्पणे ।

२९ । पूर्ब क् निकेतने । (पूर्ब—चु॰ प॰) षष्ठस्वरी । निकेतनमिह निमन्त्रणं निवासो वा । क—पूर्बयति द्विजान् भोक्तु गृही । पूर्बयति तीर्थे साधुः ।

३० । वर्ब गत्याम् ।
३१ । वम्ब गत्याम् ।
३२ । मर्ब गत्याम् ।
३३ । मम्ब गत्याम् ।
३४ । रिबि गत्याम् ।
३५ । रबि गत्याम् ।

(वर्ब—भ्वा॰ प॰) (वम्ब—भ्वा॰ प॰) (मर्ब—भ्वा॰ प॰) (मम्ब—भ्वा॰ प॰) (रिम्ब—भ्वा॰ प॰) (रम्ब—भ्वा॰ प॰) आद्यतृतीयौ रेफोपधौ, द्वितीयचतुर्थावोष्ठ्यवर्गशेषोपधौ । वर्बति, वम्बति, मर्बति, मम्बति । इ—रिम्ब्यते । इ—रम्ब्यते ।

३५ । रबिङ् शब्दे । (रम्ब—भ्वा॰ आ॰) इ—रम्ब्यते । ङ—रम्बते ।

३६ । लबिङ स्रंसने च । (लम्ब—भ्वा॰ आ॰) इ—लम्ब्यते । ङ—लम्बते । स्रंसनमिहावलम्बनमिति गोविन्दभट्टः । ननाद चरणायुधस्तदपि मीनमालम्बसे इति । चकारात् शब्दे च ।

३७। क्लि लुम्बइर्ने। ( लुम्ब—चु० भ्वा० प० ) पञ्चमस्वरी। क्लि—लुम्बयति लुम्बति। इ—लुम्ब्यते। अर्दनं बधः।

३८। अम्ब गतौ। ( अम्ब—भ्वा० प० ) ओष्ठ्यवर्गशेषोपधः। अम्बति।

३९। अर्ब हिंसेच। ( अर्ब—भ्वा० प० ) अर्बति। चकारात् गतौ।

४०। शुल्बक माने सर्गे। ( शुल्ब—चु० प० ) पञ्चमस्वरी, तालव्यादिरन्तःस्थतृतीयोपधः। सर्गः सृष्टिः। क—शुल्बयति वेधाः पृथिवीं, परिमाति सृजति वेत्यर्थः।

| | | |
|---|---|---|
| ४१। षर्ब सर्पणे। | | ( षर्ब—भ्वा० प० ) (षम्ब—भ्वा० प०) ( सर्ब—भ्वा० प० ) ( सम्ब—भ्वा० प० ) द्वावाद्यौ मूर्द्धन्यादौ, शेषौ दन्त्यादौ, द्वितीयचतुर्थावोष्ठ्यवर्गशेषोपधौ। सर्बति, सम्बति। सिषर्बयिषति, |
| ४२। षम्ब सर्पणे। | | |
| ४३। सर्ब सर्पणे। | | |
| ४४। सम्ब सर्पणे। | | |

सिषम्बयिषति। सिसर्बयिषति, सिसम्बयिषति। ( एतैर्णिसनन्तोदाहरणैः षोपदेशाषोपदेशपाठफलं दर्शितम् )।

## सम्ब साम्बक सम्बन्धेऽपञ्चाः पञ्चाशदन्तबाः।

| | |
|---|---|
| ४४। सम्बक सम्बन्धे। | ( सम्ब—चु० प० ) ( साम्ब—चु० प० ) |
| ४५। साम्बक सम्बन्धे। | द्वावोष्ठ्यवर्गशेषोपधौ, शेषो द्वितीयस्वरी। |

क—सम्बयति साम्बयति धनं लोकः, बध्नातीत्यर्थः। आद्यस्तालव्यादिरिति धातुप्रदीपः, मूर्द्धन्यादिरप्येके।

अपञ्चाः पञ्चाशदन्तबाः।

( अन्तबाः अन्ते बो येषां ते बकारान्ता धातव इत्यर्थः ) अपञ्चाः न विद्यन्ते पञ्च यत्रेति संख्याया डोऽबहोरिति डः। (तादृशः पञ्चाशत्) पञ्चचत्वारिंशदित्यर्थः।

---

## भान्तवर्गः।

## ञभिङ् ध्वनावुन्भ पुभ् श पूर्त्तौ ञुभ् लुङ संस्कृते।

१। ञभिङ् ध्वनौ। ( अम्भ—भ्वा० आ० ) इ—अम्भ्यते। ङ—अम्भते।

२। उन्भ पश पूर्त्तौ। ⎫ ( उन्भ—तुदा॰ प॰ ) ( उभ—तुदा॰ प॰ )
३। उभ् श पूर्त्तौ। ⎭ द्वौ क्रमादौ। प, श—उम्भति ( ह्रस्वुङ्नी लोप इति नलोपे पुनर्मुचादित्वान्नुण् )। श—उभति कुम्भं जलेन लोकः। उम्भामास। उवोभ।

४। क्षुभ् लङ सञ्चले। ( क्षुभ—भ्वा॰ आ॰ ) लृ—अक्षुभत्। ङ—क्षोभते मानुजीविषु इति हलायुधः। ५६।

क्षुभ्यग् च गल्भङ् धृष्टत्वे चीभृङ् कत्थे जभिक् नशि।

४। क्षुभ्यग् च। ( क्षुभ—दिवा॰ क्र्या॰ प॰ ) य—यः क्षुभ्यति रिपुर्व्वेवेति हलायुधः। ।५६। ग—क्षुभ्नाति। चुक्षोभ। चकारात् सञ्चलने।

५। गल्भङ् धृष्टत्वे। ( गल्भ—भ्वा॰ आ॰ ) अन्तःस्थतृतीयोपधः। ङ—गल्भते लोक', प्रगल्भ' स्यादित्यर्थः।

६। चीभृङ् कत्थे। ( चीभ—भ्वा॰ आ॰ ) कत्थः प्रशंसा। ऋ—अचिचीभत्। ङ—चीभते गुणिनं गुणी। ओष्ठ्यवर्गादिरयमित्येके। ( पीभ इत्यर्थः )।

७। जभिक् नशि। ( जम्भ—चु॰ प॰ ) नशीति अन्तर्भूतञ्यर्थत्वात् नष्टीकरणे। इ, क—जम्भयति पापं गङ्गा।

जभि जभ् यभने जभङ् जृम्भे जभजृभिङ् चक्री।
जृभ्च डभ् डिभिञक् सङ्घे णभ्यग् हिंसेऽथ णभ् तुभ्लृ।
ङ्च तुभ्यग् च कि इभी भये शी इभ् कि गुम्फने।

७। जभि यभने। ⎫ ( जम्भ—भ्वा॰ प॰ ) ( जभ—भ्वा॰ प॰ ) यभनं
७। जभ यभने। ⎭ मैथुनम्। इ—जम्भति। जम्भति, जभति युवा।

७। जभङ जृम्भे। ( जभ—भ्वा॰ आ॰ ) जृम्भो गात्रशैथिल्यमिति गोविन्दभट्टः। ङ—जम्भते लोकः। नुण्जभोऽचीति अस्यैव नुण्, आत्मनेपद-प्रकरणे तत्सूत्रविधानसामर्थ्यात्।

७। जभि ङ च। ⎫ ( जम्भ—भ्वा॰ आ॰ ) ( जृम्भ—भ्वा॰ आ॰ ) शेषः
८। जृभि ङ च। ⎭ सप्तमस्वरौ। इ—जम्भते, जृम्भते। चकारात् जृम्भे। प्रत्यूषकाले भुजगाङ्गनानां सुखेषु कालः प्रतिजृम्भतीवेति गणकृतानित्यत्वात्।

८। डी जृभ् च। (जृभ—भ्वा० आ०) ङ—जर्भते। ई—जृब्धः। चकारात् जृम्भे।

९। डभि ञक सङ्घे। } (डम्भ—चु० उ०) (डिम्भ—चु० उ०) द्वौ
१०। डिभि ञक सङ्घे। } मूर्द्धन्यवर्गतृतीयादी। इ, ञ, क—डम्भयति डम्भयते। डिम्भयति डिम्भयते। एतावात्मनेपदिनाविति केचित्। सङ्घो राशीकरणम्।

११। णभ्य ग हिंसे। (णभ—दिवा० क्र्या० प०) य—नभ्यति। न—नभ्नाति।

११। अथ णभ् लृङ च। } (णभ—भ्वा० आ०) (तुभ—भ्वा० आ०)
१२। तुभ् लृङ च। } लृ—अनभत्। अतुभत्। ङ—नभते। तोभते। चकाराद्धिंसे।

१२। तुभ्यग् च। (तुभ—दिवा० क्र्या० प०) य—तुभ्यति। ग—तुभ्नाति। तुतोभ। चकाराद्धिंसे।

१३। कि दृभी भये। (दृभ—चु० भ्वा० प०) कि—दर्भयति, दर्भति। ई—दृब्ध। रामस्तु दृ भी इति धातुद्वय मत्वा दारयति दरति, भाययति भयतीत्याह।

१३। श्री दृभ् कि गुम्फने। (दृभ—तुदा० चु० भ्वा० प०) श—दृभति। ई—दृब्ध। कि—दर्भयति, दर्भति। गुम्फनं ग्रन्थनम्।

दम्भुन् दम्भे दम्भ दिम्भ कङ् सङ्घातेऽथ दिम् दृभि।
दृभक् नोदे भर्भ हिंसे यभौ मैथुन ईरितः।

१४। दम्भु न दम्भे। (दम्भ—स्वा० प०) दम्भः परवञ्चनार्हेतुव्यापारः। उ—दम्भित्वा दब्ध्वा। न—दभ्नोति खलः, छलयतीत्यर्थः।

१४। दम्भ क ङ सङ्घाते। } (दम्भ—चु० आ०) (दिम्भ—चु०
१५। दिम्भ क ङ सङ्घाते। } आ०) क, ङ—दम्भयते, दिम्भयते। सङ्घातो राशीकरणम्।

१६। अथ दिभिक् नोदे। ⎫ (दिन्भ—चु० प०) (दन्भ—चु० प०)
१७। दभिक् नोदे। ⎬ (दभ—चु० प०) इ, क—दिम्भयति,
१७। दभक् नोदे। ⎭ दम्भयति। क—दाभयति। नोदः प्रेरणम्।

१८। भर्भ हिंसे। (भर्भ—भ्वा० प०) रेफोपध। भर्भति।

१९। यभॕ मैथुन ईरित। (यभ—भ्वा० प०) भौ—अयाप्सीत्। यभति युवा।

## रभीङ स्यात्तु राभस्ये रभिङ् शब्दे ङ रेभृ च।

२०। रभीङ स्यात्तु राभस्ये। (रभ—भ्वा० आ०) राभस्यमुत्सुकीभावः। निर्विचारप्रवृत्तिरिति गोविन्दभट्टः। औ—रब्धा। ङ—रभते साधुः पुण्ये। आङ्पूर्व्वोऽयमारम्भे। शास्त्रं पठितुमारभते शिष्यः।

२०। रभिङ् शब्दे। (रम्भ—भ्वा० आ०) इ—रम्भ्यते। ङ—रम्भते।

२१। ङ रेभृ च। (रेभ—भ्वा० आ०) ङ—रेभते। रिरेभे। ऋ—अरिरेभत्। चकाकात् शब्दे।

## लभिङ् शब्दे लभ डुौ षङ् प्राप्तौ श् लुभ विमोहने।

२२। लभिङ् शब्दे। (लम्भ—भ्वा० आ०) इ—लम्भ्यते। ङ—लम्भते।

२२। लभ डुौषङ् प्राप्तौ। (लभ—भ्वा० आ०) डु—लब्धिमम्। औ—लब्धा। ष—लभा। ङ—लभते। लभन्ति पुनरुत्थानमिति गणकृतानित्यत्वात्, पचादित्वादनि लभा इवाचरन्तीति क्वौ वा साध्यम्।

२३। श लुभ विमोहने। (लुभ—तुदा० प०) श—लुभत्यात्मनि कामे चेति हलायुधः। २६५। लोभिता लोब्धा।

## लुभ्येगर्ध्येङ् वल्भ भुक्तौ शीभृ शल्भ ङ कत्थने।

२३। लुभ्येगर्ध्ये। (लुभ—दिवा० प०) गार्ध्यमाकाङ्क्षा। य—लुभ्यति धनं लुब्धः। इर्—अलुभत् अलोभीत्। अस्मान्नित्यं ङ इति दुर्गः। लोब्धा लोभिता।

२४। ङ वल्भ भुक्तौ। (वल्भ—भ्वा० आ०) अन्तःस्थादितीयोपधः। भुक्तिर्भक्षणम्। ङ—वल्भते अन्नं लोकः।

२५। शीभृङ कत्थने। ( शीभ—भ्वा० आ० ) (शल्भ—भ्वा० आ०)
२६। शल्भङ कत्थने। शेषोऽन्तःस्थाद्वतीयोपधः। लृ—अशिशीभत्।
ङ—शीभते, शल्भते। कत्थनं प्रशंसा।

## शुभ्लृङ् दीप्तौ शुभ्प शुन्भश् षुम्भ् च षिम्भु च हिंसने।

२७। शुभ् लृङ् दीप्तौ। (शुभ—भ्वा० आ०) लृ—अशुभत्। ङ—शोभते। न शोभति सभामध्ये इति गणकृतानित्यत्वात्, पचादित्वादनि शोभ इवाचरतीति क्वौ वा साध्यम्।

२७। शुभ पश दीप्तौ। ( शुभ—तुदा० प० ) ( शुम्भ—तुदा० प० )
२८। शुन्भ श् दीप्तौ। (षुम्भ—भ्वा० प०) द्वावाद्यौ तालव्यादी, शेषो
२९। षुम्भ च। मूर्द्धन्यादिः। त्रयः पञ्चमस्वरिणः। प, श—शुभति। शुशोभ। श—शुम्भति। शुशुम्भ। सुम्भति। चकाराद्दीप्तौ। प्राचस्तु भ्वादौ च शुभ शुम्भ भासनहिंसनयोरिति पठन्ति।

३०। षिम्भु च हिंसने। (षिम्भ—भ्वा० प०) उ—सिम्भित्वा सिब्ध्वा। चकारात् पूर्व्वाश्च ( पूर्व्वं त्रयो धातवोऽपि हिंसार्थका इत्यर्थः )।

## ष्टुभु ष्टभि स्तभिङ् स्तम्भे स्कभिङ् च स्तन्भुङ स्मृतः।
## प्रमादे लृ स्तन्भुङ विश्वासे स्त्रिन्भ स्त्रभ स्त्रिभु।
## हिंसे सुन्भ द्युतौ चैकोनचत्वारिंशदन्तभाः।

३१। ष्टुभु ङ स्तम्भे। ( ष्टुभ—भ्वा० आ० ) ( ष्टन्भ—भ्वा० आ० )
३२। ष्टभि ङ स्तम्भे। ( स्तम्भ—भ्वा० आ० ) शेषौ दन्त्यादिः।
३३। स्तभि ङ स्तम्भे। उ—स्तोभित्वा स्तुब्ध्वा। ङ—स्तोभते। इ—स्तम्भते। ङ—स्तम्भते। इ—स्तम्भते। ङ—स्तम्भते। तुष्टोभयिषति। तिष्टम्भयिषति। तिस्तम्भयिषति। इकारस्योभयत्र पाठात् पूर्व्वो नेदनुबन्धः। ननु आम्रेडितानुबन्धेऽप्यत्र कथं पूर्व्वौ ङिदितिचेत् सत्यम्। अत्र इकारस्य पुनरुक्तिः पूर्व्वेण सम्बन्धनिषेधार्थैव, ङितस्तु सर्व्वे, एक एवेत् पाठबलाद्दाक्ष्य इतिवत्। स्तम्भो जडीभावो जडीकरणञ्च, स्तम्भौ स्थूणाजडीभावावित्यमरोक्तेः, शीतेनावस्तब्धो जडीकृत इत्यर्थं इति क्रमदीश्वरोक्तेश्च। "शास्त्रेण स्तोभते भूयो

लघुप्रकृतिको नरः" इति हलायुध । १२८ । स्तोभते हर्षं गौतौ वायुरिति चतुर्भुजः । स्तम्भ इह क्रियानिरोध इति भीमः । दोषवृद्धिरिति गोविन्दभट्टः । शेषयोः पचे स्तम्भो दृढीकरणञ्च । स्तम्भते कवाटेन द्वारं लोकः ।

३४ । स्कभिङ च । (स्कन्भ—भ्वा० आ०) चकारात् स्तम्भे, स चेह दृढीकरणम् । इ—स्कम्भ्यते । ङ—स्कम्भते कवाटेन द्वारं लोकः । चस्कम्भे ।

३५ । स्रम्भु ङ स्मृतः प्रमादे । (स्रन्भ—भ्वा० आ०) प्रमादोऽनवधानता । उ—स्रम्भित्वा स्रब्ध्वा । ङ—स्रम्भते धर्म्मे नीच ।

३५ । ऌ स्रम्भु ङ विश्वासे । (स्रन्भ—भ्वा० आ० व्यां प०) विश्वासः शङ्कारहितीभाव. । ऌ—अस्रभत् । उ—स्रम्भित्वा स्रब्ध्वा । ङ—स्रम्भते पुत्रो मातरि । तालव्यादिरयमित्येके ।

३६ । स्रिम्भु हिंसे । ⎫ (स्रिन्भ—भ्वा० प०) (स्रभ—भ्वा० प०)
३७ । स्रभु हिंसे । ⎬ (स्रिभ—भ्वा० प०) आद्यन्तौ रेफयुक्ततृतीय-
३८ । स्रिभु हिंसे । ⎭ स्वरिणौ, मध्यमः सप्तमस्वरौ । उ—स्रिम्भित्वा स्रिब्ध्वा । सभित्वा स्रब्ध्वा । सेभित्वा स्रिब्ध्वा । स्रिम्भति, सभति, सेभति ।

३८ । सुम्भ द्युतौ च । (सुन्भ—भ्वा० प०) पञ्चमस्वरौ । सुम्भति । चकाराद्धिंसे च ।

## एकोनचत्वारिंशदन्तभाः ।

(अन्ते भो येषां ते, भकारान्ता धातव इत्यर्थः ।)

—०—

## मान्तवर्गः ।

### अम् गतौ भजने शब्देऽमक् रोगे कमुकङ् स्पृहि ।

१ । अम् गतौ भजने शब्दे । (अम्—भ्वा० प०) अमति । (अमन्ति व्याधयोऽप्येनं न कदाचिद्भयादिवेति हलायुधः । १८० ) ।

१ । अमक रोगे । (अम—चु० प०)[1] क—आमयति व्याधिर्लोकम् ।

२ । कमुकङ् स्पृहि । (कम—चु० आ०) उ—कमित्वा कान्त्वा । क, ङ—कामयते । अन्यैर्भ्वादौ पठ्यमानस्याप्यस्य कित्करणं कम ऋत इत्यादिना विहितस्य ञिङोऽज्ञापनार्थं, तेन अरे ञिङोऽप्राप्तिपचे अचकमत चकमे कमितेत्यादि । (निष्कृष्ट मर्थं चमके कुवेरादिति रघु । ५ । २६ ) ।

ञि क्लम्य क्लमु भिर्ग्लानौ क्रम्य क्रमु गतौ चमु ।
इर्भ्ये मर्षे चमूङ् अिष् च कुस्म काङ मतीच्छिते ।
कुस्मित्यौ गम्लृ गत्यां चम् नृचम् छम् जम जिम् झमु ।
भक्ष्ये षामौ शब्दनत्योस्तिमृतीम्य क्लेदने तमु ।
इर्भ्ये खेदेच्छयोर्दम्भु इर् शमे द्रम् गतौ भ्रमिर् ।
भ भ्रम्य भ्रमु ज्ञण् चाले भामङ् क्रोधे क्रट मीम गतौ ।
शब्दे यमौ उ विरतौ यर्माक्म परिवेषणे ।
तदभावे रमुङ जौ क्रीड़ेण् जुटु वमुद्गिरि ।

२। ञि क्लम्यु भिर्ग्लानौ । } ( क्लम—दिवा॰ प॰ ) ( क्लम—भ्वा॰ प॰ )
३। क्लमुभिर्ग्लानौ । } द्वावन्तःस्थाद्वतीययुक्तौ । ञि—क्लान्तोऽस्ति । य, भ—क्लाम्यति । उ—क्लमित्वा क्लान्त्वा । भ—क्लामति । भ्वादिपक्षेऽपि शमादित्वं, ष्ठिवुक्लमाचम इति दीर्घज्ञापनार्थम् । इर्—अक्लमत् अक्लमीत् । अस्मान्नित्यं ड इति दुर्गः ।

४। क्रम्यु गतौ । } ( क्रम—दिवा॰ प॰ ) ( क्रम—भ्वा॰ प॰ ) य—
४। क्रमु गतौ । } क्राम्यति । गोविन्दभट्टक्रमदीश्वरौ तु दीर्घं विधाय क्राम्यतीत्याहतु । तथाच—"इष्यते यनि दीर्घत्वं दाक्षिलक्षणवेदिभिः । तेन क्राम्यति कौमारि चानीत्यस्योपलक्षणात्" इति । उ—क्रमित्वा क्रान्त्वा क्रन्त्वा ( क्रमो घौ वेति वा दीर्घः ) क्रामति । वारिपूर्णां महीं कृत्वा पश्चात् संक्रमते गुरुरित्यादौ समशब्दस्योपसर्गप्रतिरूपकत्वेनानुपसर्गत्वात् वागीरित्यात्मनेपदम् । वृत्त्युत्साहतायनेषूपसर्गान्तरपूर्वादप्यात्मनेपदमिति शरणदेवः । संक्रामयतीत्यादि तु संक्रामन्त करोतीति णिवन्तात् जौ साध्यम् । अन्यथा अमन्तत्वात् ह्रस्वः स्यात् । "हरेयंदक्रामि पदैककेन खम्" इति तु धातुपारायणमते चुरादित्वविवक्षायां सिद्धम् । तन्मतं परिभाषायां लिखितम् । अथवा 'आत्मा' इति कर्मणोऽध्याहारे प्रेरणजौ साध्यम् । हरेरेकेन पदा आत्मा यत् खं क्रमयाञ्चक्रे इत्यर्थः ।

५। चमु इर्ष्ये मर्षे। (चम—दिवा० प०) मर्षः सहनम्। उ—चमित्वा क्षान्त्वा। षष्ठस्वरानुबन्धोऽयमित्येके। इर्—अचमत् अचमीत्। भक्षा-नित्यं ङ इति दुर्गः। भ, य—चाम्यति दोषं साधुः।

५। चमू ङ्जिष च। (चम—भ्वा० आ०) ज—अचमिष्ट अचंस्त। ङ—चमते। ञि—चान्तोऽस्ति। ष—चमा। चकारान्मर्षे। (मनागनभ्या-हत्या वा कामं चाम्यतु यः चमी। क्रियासमभिहारेण विराध्यन्तं चमेत कः इत्युभयत्र माघ. । २ । ४३)।

६। कुस्म ङ मतोच्छिते कुस्मिति। (कुस्म—चु० आ०) ह्रस्वोदन्त्यो-पधः। मतोच्छितं बुद्धिपूर्व्वकदर्शनम्। कुस्मित् कुत्सितमीषद्धास्यम्। क, ङ—कुस्मयते जनः, बुद्ध्या पश्यति, कुत्सितं स्मयते वेत्यर्थः। चुकुस्मयिषते।

७। ञौ गम्लृ गत्याम्। (गम—भ्वा० प०) औ—गन्ता। लृ—अगमत्। गतिरुत्तरदेशसंयोगफलकव्यापार.।

८। चम नर् भक्षे। (चम—स्वा० प०) (चम—भ्वा० प०)
८। चमु भक्षे। (छम—भ्वा० प०) (जम—भ्वा० प०) (जिम—
९। छमु भक्षे। भ्वा० प०) (झम—भ्वा० प०) षड़ेते। न—
१०। जमु भक्षे। चम्नोति। र—वैदिक.। उ—चमित्वा चान्त्वा।
११। जिमु भक्षे। चमति। उ—छमित्वा छान्त्वा। जमित्वा
१२। झमु भक्षे। जान्त्वा। जेमित्वा जीन्त्वा। झमित्वा झान्त्वा।

१३। णमौ शब्दनत्योः। (णम—भ्वा० प०) औ—नन्ता शब्दार्थो न भाषायाम्। नतिरिह नमस्कारो नम्रीभावश्च। नमति गुरुं शिष्यः। नमन्ति फलिनो हृक्षा। अमन्तत्वेऽप्यस्य ज्वलह्वलेत्यादिना,ञौ केवलस्य ह्रस्वविधा-नात् सोपसर्गस्यैव नित्यं ह्रस्वः। नमयति, नामयति, प्रणमयति। श्वपुच्छ-मवनामितं वधिरकर्णजापः इत इत्यादौ अवनमनं अवनामः घञ्, ततोऽवनामं करोतीति ञौ रूपम्।

१४। तिम्य क्लेदने। (तिम—दिवा० प०) (तीम—दिवा० प०)
१५। तीम्य क्लेदने। य—तिम्यति, तीम्यति। तितेम तितीम। क्लेदनमार्द्रभावः। (स्यात्तेमनन्तु निष्ठानमित्यमरे व्यञ्जनपर्य्यायः)।

१६। तमु इच्छं खेदेच्छयोः। (तम—दिवा० प०) उ—तमित्वा तान्त्वा। इट्—अतमत् अतमीत्। अस्मान्नित्यं ङ इति दुर्गः। भ, य—ताम्यति लोक उत्तमः स्यादित्यर्थः।

१७। दम् भ्यु इर् शमे। (दम—दिवा० प०) भ, य—दाम्यति। उ—दमित्वा दान्त्वा। इर्—अदमत् अदमीत्। अस्मान्नित्यं ङ इति दुर्गः। शम शान्तीभावः। दाम्यति मुनिः। शम इति पदस्य आन्तस्यापि सम्भवे शान्तीकरणेऽप्ययमिति धातुप्रदीपः। दमित्वाप्यरिसंघातानिति।

१८। द्रम् गतौ। (द्रम—भ्वा० प०) दन्त्यवर्गतृतीयादिः। द्रमति।

१९। भ्रमिर्भ्यु जण चाले। (भ्रम—दिवा० शमादि, प०)
१९। भ्रम्यु जण चाले। (भ्रम—दिवा० प०) (भ्रम—भ्वा०
१९। भ्रमु जण चाले। प०) ओष्ठ्यवर्गचतुर्थाद्याः। इर्—अभ्रमत् अभ्रमीत्। भ, य—भ्राम्यति। उ—भ्रमित्वा, भ्रान्त्वा। ज—भ्रमः भ्रामः। ज्वलादित्वात् णप्रत्ययेऽपि जनबध इत्यादिना ह्रस्वे भ्रम इत्येव, तेन ज्वलादावस्य पाठो निष्फल इति धातुप्रदीपादयः। वस्तुतस्तु यथा द्रुह्यतेर्मुहां घङ् वेत्यनेन घङोऽप्राप्तिपक्षे होढोभावित्यनेन ढ एव, मुहादिपाठसामर्थ्यात् दादेर्घ इत्यनेन घो न स्यात्, तथात्रापि ज्वलादिपाठात् जनबध इति ह्रस्वो न स्यात्। ण—भ्रेमतुः बभ्रमतुः। य—भ्रम्यति। भ्रमति। चाल इह पादविहरणम्। न जाने को हेतुर्भ्रमति भुवने भिक्षुक इव। भ्रेमुः शिलोच्चयांस्तुङ्गानिति भट्टौ (७। ५५) गत्यर्थविवक्षया सकर्मकत्वम्।

२०। भाम ङ क्रोधे। (भाम—भ्वा० आ०) ङ—भामते। (कोपना सैव भामिनीत्यमरः)।

२१। ऋ मीम् गतौ शब्दे। (मीम—भ्वा० प०) ऋ—अमिमीमत्।

२२। यमौ उ विरतौ। (यम—भ्वा० प०) औ—यन्ता। उ—यमित्वा यत्वा। विरतिर्निवृत्तिः। यच्छति पापात् साधुः।

२२। यमक् मि परिवेषणे तदभावे। (यम—चु० प०) तदभावे अपरिवेषणे इत्यर्थः) यमयति यामयति। परिवेषणमन्नादेरुपसर्पणं, वेष्टनमित्येके। विष्ल्व्याप्तावित्यस्य रूपमिति रमानाथः। केचित्तु परिवेषण एवायं मानुबन्ध.। क, मि—यमयन् गच्छी, अन्यत्र नियामयति संयामयती-

त्यादीत्याहुः । अन्ये तु अपरिवेषण एवायं मानुबन्धः । नियमयसि विमार्ग-प्रस्थितानात्तदण्ड इति शाकुन्तले । परिवेषणे तु यामयत्यन्नं द्विजाय गृहीत्याहुः । अनेनोभयोर्मतयोः प्रामाणिकत्वादुभयत्र मानुबन्धः कृतः ।

२३ । रमु ङजी क्रीडे । ( रम—भ्वा० आ० ) उ—रमित्वा रत्वा । ङ—रमते । ज—रामः रमः । औ—रन्ता ।

२४ । णजुटु वमुद्गिरि । ( वम—भ्वा० प० ) वकारादिः । ण—वेमतुः ववमतुः । अन्ये तु एतत्कार्य्यविधायकसूत्रे फणादौ वेमं न पठन्तो "वेमुश्च केचिद्रुधिरमित्यादिसिद्धये तत्सूत्रे दन्त्यवकारादिवर्ज्जनस्यानित्यतां स्वीकुर्व्वन्ति । केचित् पुनर्वर्ग्यवरादिधात्वन्तरमप्यस्तीति प्रलपन्ति । ज—वामः वमः । उ—वमित्वा वान्त्वा । टु—वमथुः । उद्गिरि वान्तौ । वमत्यन्नमजीर्णवान् । अमन्तत्वेऽप्यस्य ञौ ज्वलह्वलेत्यादिना केवलस्य ह्रस्वविकल्पनात् सोपसर्गस्यैव नित्यं ह्रस्वः । वमयति वामयति प्रवमयति ।

शमुभ्य ईर् शमे शमृङ कञालोचे श्रमुभ्यञि ।
द्वर्तप:खेदयोः ष्टीम ष्टिम्य क्लेदे षम ष्टम ।
वैक्लव्येऽथ क साम् सान्त्वे स्यमुण् श ध्वनने स्यम ।
ञक् वितर्के इन्म गतौ त्रियुताश्चि शदन्तमाः ।

२५ । शमुभ्य ईर् शमे । ( शम—दिवा० प० ) उ—शमित्वा शान्त्वा । भ, य—शाम्यति । ईर्—अशमत् अशमीत् । अस्मान्नित्यं ङ इति दुर्गः । शमः शान्तीभावः । शशाम वृष्ट्यापि विना दवाग्निरिति रघुः । २ । १४ । शम इति पदस्य अन्तस्यापि सम्भवे शान्तोकरणेऽप्ययमिति धातुप्रदीपः । वरेण शमितु लोकानलं दग्ध्, हि तत्तपः इति कुमारसम्भवम् । २ । ५६ । वचो निशम्याधिपतिर्दिवौकसामित्यादावनेकार्थत्वात् श्रुत्वेत्यर्थः । वा शम यमेत्यत्र वाशब्दस्य व्यवस्थावाचित्वादस्य ञौ नित्यं ह्रस्वः । शमयति ।

२५ । शमङकञालोचे । ( शम—चु० उ० ) आलोचः प्रणिधानम् । वा शमयमेत्यत्र वाशब्दस्य व्यवस्थावाचित्वादस्य ञौ ह्रस्वाभावः । ङ, क—शामयते कार्य्यं सुधीः । ञ—शामयति शामयते । निशामय तदुत्पत्तिं विस्तराद्गदतो ममेति । अयमात्मनेपदीति केचित् ।

२६। श्रमुश्च जि ख तपः खेदयोः। (श्रम—दिवा० प०) ताम्यत्यादिः। उ—श्रमित्वा श्रान्त्वा। भ, य—श्राम्यति लोकस्तपः करोति खिद्यते चेत्यर्थः। जि—श्रान्तोऽस्ति। ङर्—अश्रमत् अश्रमीत्। अश्रमामित्यं ङ इति दुर्गः। धुर्य्यान् विश्रामयेति स इति रघौ श्रामल्त मन्ये इत्यदन्तस्य रूपम्।

२७। ष्टीम क्लेदे। } (ष्टीम—दिवा० प०) (ष्टिम—दिवा० प०)

२८। ष्टिम्य क्लेदे। } द्वौ मूर्द्धन्यादी। य—स्तीम्यति, स्तिम्यति। तिष्टीम, तिष्टेम। तिष्टीमयिषति, तिष्टेमयिषति। क्लेद आर्द्रभावः।

२९। षम वैक्लव्ये। } (षम—भ्वा० प०) (ष्टम—भ्वा० प०) वैक्लव्यं

३०। ष्टम वैक्लव्ये। } विह्वलीभावः। समन्ति यद्वियोगेन सीमन्तिन्यः स्मरातुरा इति हलायुधः। २२३। स्तमति। असीसमत्, अतिष्टमत्। (न च स्तमति शोकेनेति हलायुधः। २४५)।

३१। अथ क साम सान्त्वे। (साम—चु० प०) दन्त्यादिर्द्वितीयस्वरी। सान्त्वः प्रियकरणम्। क—सामयति दीनं दानेन दाता। (यः सामयति सामन्तः स्निग्धैरालोकनैश्च ता इति हलायुधः। ताः सीमन्तिनीरित्यर्थः २२१।)।

३२। स्यमु स्वम ध्वनने। (स्यम—तुदा० प०) अन्तःस्थादियुक्तः। उ—स्यमित्वा स्यान्त्वा। ण—स्येमतु स्यमतुः। श्र—स्यमती स्यमन्ती।

३२। स्यम अक वितर्के। (स्यम—चु० उ०) अन्तःस्थादियुक्तः। अस्य स्वार्थञो ह्रस्वो न स्यात् प्रेरणञो तु स्यादिति प्राञ्चः। स्यमते तु वाग्यमयमेति वाग्यन्दाहारवस्थाप्यम्। अ, क—स्यामयति स्यामयते परगुणं सुधीः।

३३। हम्म गतौ। (हम्म—भ्वा० प०) मद्वयान्तः। हम्मति।

त्रियुतास्त्रिंशदन्तमाः।

(अन्ते मो येषां ते, मान्ता धातव इत्यर्थः, त्रियुतास्त्रिंशत् त्रयस्त्रिंशत्-संख्यका इत्यर्थ.)।

•—•—

## यान्तवर्गः।

### अयङ् गतावीर्ष्यं ईर्ष्यं ईर्ष्ये ऊयीङ् सेवने।

१। अयङ् गतौ। (अय—भ्वा० आ०) ङ—अ

२ । ईर्च्य ईर्ष । } ( ईर्च्य—भ्वा० प० ) ( ईर्ष—भ्वा० प० ) द्वौ दीर्घादी
३ । ईर्ष्य ईर्ष । } रेफिणौ । ईर्षा इति शेषस्य घञि हसाल्लोप इति यल्लोपे सिद्धम् । ईर्षः पराभ्युदयासहिष्णुत्वम् । परदोषासहिष्णुत्वमिति केचित् ( अक्षमेत्यर्थः ) । ईर्ष्यति ईर्षति खलः साधवे । एतौ यद्दयान्तावित्येके ।

४ । जयीङ सेवने । ( जय—भ्वा० आ० ) दीर्घादि । सेवनमिह सिव्यु-तन्तुसन्तताविस्यस्य रूपम् । ई—जतः । ङ—जयते पटं सौचिकः ।

## क्नूयीङ् दुर्गन्ध आर्द्रत्वे शब्दे क्ष्मायीङ् विधूनने ।

५ । क्नूयीङ दुर्गन्ध आर्द्रत्वे शब्दे । ( क्नूय—भ्वा० आ० ) दन्त्यनकार-युक्तो दीर्घी । तथा च "क्नूयीक्ष्मायतितेविदेवस इमे सेविष मेविस्तथा" इति शार्दूलविक्रीडिते चण्डेश्वरः । ( क्नू इति दीर्घं विना शार्दूलविक्रीडितवृत्त-सङ्गति र्न स्यात् ) । ई—क्नूतः । ङ—क्नूयते मत्स्यः, दुर्गन्ध. स्यादित्यर्थः । क्नूयते वस्त्रमम्भसा ।

६ । क्ष्मायीङ विधूनने । ( क्ष्माय—भ्वा० आ० ) ओष्ठ्यवर्गशेषयुक्तमादिः । विधूनन इति विधूयतेऽसाविति कर्मणि घञि विधूनः सकम्पस्ततो विधून इवा-चरतीति क्वौ क्नतेऽनटि रूपं कम्पनमित्यर्थः । अन्यथा कम्पनप्रेरणमेवार्थं स्यात् । ई—क्ष्मातः । ङ—क्ष्मायते द्रुमः । चक्ष्माये च महीति भट्टिः । १४ । २१ । क्ष्मायते कम्पते त्वङ्गत्येजतीर्त्ते च वेपते इति कम्पार्थे भट्टमल्लः ।

## चुच्चीत्वभिषवे चीयृञ् संवृत्यादानयोस्चयङ् ।
## गतौ चायृञ् निशामेऽर्च्चे व्यय् तयङ् गतिरक्षयोः ।

७ । चुच्चीत्वभिषवे । ( चुच्च—भ्वा० प० ) तालव्यवर्गाद्योपधः । पञ्चम-स्वरी । ई—चूक्तः । यद्दयान्तोऽयमित्येके । अभिषव स्नानं मन्थनं पीडनं सन्धानञ्च । ( षु ञ न सन्धाक्लेदपीडामन्थे इति निष्पादनात् ) ।

८ । चीयृ ञ संवृत्यादानयोः । ( चीय—भ्वा० उ० ) चतुर्थस्वरी । ऋ-अचिचीयत् । ञ—चीयति चीयते । ( संवृतिराच्छादनम् ) ।

९ । चय ङ गतौ । ( चय—भ्वा० आ० ) ङ— चयते ।

१० । चायृ ञ निशामेऽर्च्चे । ( चाय—भ्वा० उ० ) ऋ—अचचायत् । ञ-

चायति चायते। निशाम इव चाक्षुषज्ञानम्। तं पर्व्वतीया: प्रमदाश्चचायिरे इति माघ:। १२। ५१।

११। चय ङ गतिरक्षयो:। (चय—भ्वा॰ आ॰) (तय—भ्वा॰ आ॰) ङ—चयते। तयते।
१२। तय ङ गतिरक्षयो:।

## तायृङ् पालनसन्तत्योर्ञिदयङ् ग्रहणे गतौ।
## बधे दानेऽवने दायृङ् दाने नय पयङ् गतौ।

१३। तायृङ पालनसन्तत्यो:। (ताय—भ्वा॰ आ॰) सन्ततिर्विस्तार:। अ—अततायत्। ङ—तायते विद्यां सुधी:।

१४। ञि दयङ ग्रहणे गतौ बधे दानेऽवने। (दय—भ्वा॰ आ॰) अवनं पालनम्। ञि—दयितोऽस्ति। ङ—दयते दीनं दयालु:। तेषां दयसे न कस्मादित्यत्र कर्म्मणि षष्ठी।

१५। दायृङ दाने। (दाय—भ्वा॰ आ॰) अ—अददायत्। ङ—दायते।

१६। नय ङ गतौ। (नय—भ्वा॰ आ॰) (पय—भ्वा॰ आ॰) ङ—नयते। पयते।
१७। पय ङ गतौ।

## पूयीङ् दुर्गन्धशीर्ण्योरो प्यायीङ् वृद्धौ मयङ् गतौ।

१८। पूयीङ दुर्गन्धशीर्य्यो:। (पूय—भ्वा॰ आ॰) अक्षरी। ई—पूत:। ङ—पूयते मत्स्य: दुर्गन्ध: स्यादित्यर्थ:। शीर्विभेदनम्।

१९। ओ प्यायीङ वृद्धौ। (प्याय—भ्वा॰ आ॰) ओ—पीनं मुखम् उपसर्गात्तु प्रप्यानम्। अस्वाङ्गेतु प्यान: पीन: स्वेद:। ङ—प्यायते।

२०। मयङ गतौ। (मय—भ्वा॰ आ॰) ङ—मयते।

## मव्य बन्धे रय् लय् वयङ् व्ययञ् गत्यां व्ययक् नुदि।

२१। मव्य बन्धे। (मव्य—भ्वा॰ प॰) मव्यति चौरं राजा। यङयान्तो ऽयमित्येके।

२१। रयङ गत्याम्।
२३। लयङ गत्याम्।
२४। वयङ् गत्याम्।
२५। व्ययञ् गत्याम्।

(रय—भ्वा० आ०) (लय—भ्वा० आ०) (वय—भ्वा० आ०) (व्यय—भ्वा० आ०) शेषोऽन्तःस्थादियुक्तः। (अत्र पूर्व्वे धातवो न कथं आनुबन्धा इत्याशङ्क्याह) धातुभेदे ङञो-रसङ्कर इति वोपदेवः। (धातुभेदे सति परोऽनुबन्धः पूर्व्वेषामिति नियमात् ङञावित्यनुबन्धावेकस्य धातोर्न भवत इति भावः)। ङ—रयते, लयते, वयते॥ ञ—व्ययति व्ययते।

२५। व्ययक् नुदि। (व्यय—चु० प०) अन्तःस्थादियुक्तः। क—व्याययति॥ नुदि प्रेरणे।

शुच्यी त्वभिषवे षूर्व्य ईर्षे सूर्व्य त्वनादरे।
ईर्षे स्फायीङ संवृद्धौ हय हर्य्य क्लमे गतौ।
एकत्रिंशद् यकारान्ता धातवः परिकीर्त्तिताः।

२६। शुच्यी त्वभिषवे। (शुच्य—भ्वा० प०) तालव्यादिः पञ्चमस्वरी तालव्यवर्गीयोपधः। ई—शुक्तः। यद्दयान्तोऽयमित्येके। अभिषवः स्नानं मन्थनं पीड़नं सन्धानञ्च।

२७। षूर्व्य ईर्षे। (षूर्व्य—भ्वा० प०) मूर्द्धन्यादिर्दीर्घोरेफमध्यः। सूर्व्यति सुषूर्व्य। यद्दयान्तोऽयमित्येके। ईर्षार्थः प्रागुक्तः।

२८। सूर्व्य त्वनादरे ईर्षे (सूर्व्य—भ्वा० प०) दन्त्यादिर्दीर्घोरेफमध्यः। सूर्व्यति। सुसूर्व्य।

२९। स्फायीङ संवृद्धौ। (स्फाय—भ्वा० आ०) ई—स्फीतः स्फातः। ङ—स्फायते। पस्फाये। स्फायस्तिर्मोकसन्धीति गणकृतानित्यत्वात्। स्फायते स्फायः पचादित्वादन्, स्फाय इवाचरतीति क्वौ शृजन्तं वा।

३०। हय क्लमे गतौ।
३१। हर्य्य क्लमे गतौ।

(हय—भ्वा० प०) (हर्य—भ्वा० प०) शेषो रेफोपधः। हयति। हर्य्यति। क्लमो ग्लानिः॥

एकत्रिंशद् यकारान्ता धातवः परिकीर्त्तिताः। (सुगमम्)।

———

## रान्तवर्गः ।

### अभ्र गत्यामीर्ङ् कम्पगत्योरीर्कि गतौ नुदि ।

१ । अभ्र गत्याम् । ( अभ्र—भ्वा० प० ) ओष्ठ्यवर्गचतुर्थोपधः । अभ्रति । ( वनेष्वानभ्र निर्भय इति भट्टिः । ४ । ११ । ) ।

२ । ईर्ङ क कम्पगत्योः । ( ईर—अदा० आ० ) दीर्घादिः । क, क्त—ईर्ते लता वायुना ।

३ । ईर्कि गतौ नुदि । ( ईर—चु० भ्वा० प० ) कि—ईरयति ईरति । नुदि प्रेरणे ।

### क्मर् कौटिल्ये कुर्श शब्दे क्षर्ज सञ्चलने क्षुरश् ।
### विलेखे खनने कुन्द्रिक् मिथ्योक्तौ खोर् ऋ खोटने ।

३ । क्मर् कौटिल्ये । ( क्मर—भ्वा० प० ) ओष्ठ्यवर्गशेषयुक्तः । क्मरति खलः कुटिलः स्यादित्यर्थः ।

४ । कुर्श शब्दे । ( कुर—तुदा० प० ) श—कुरति । कोरिता ।

५ । क्षर्ज सञ्चलने । ( क्षर—भ्वा० प० ) ज—क्षारः क्षरः । सञ्चलनमिह मोचनं स्रवणञ्च । आदौ सकर्मकः । स्रोतोभिश्छिदशगजा मदं क्षरन्त इति किराते । ७ । ८ । स्रवणेतु क्षरत्क्षतजहस्तय इति । ( अक्षारिषुः शराम्भांसि तस्मिन् रक्षःपयोधरा इति भट्टिः । ६ । ८ । क्षादुल्काः प्रचक्षरिति भट्टिः । १४ । ६७ । ) ।

६ । क्षुरश विलेखे खनने । ( क्षुर—तुदा० प० ) श—क्षुरति भूमिं लोकः । क्षोरिता । क्षुरो लोमच्छेदनं ।

७ । कुन्द्रिक् मिथ्योक्तौ । ( कुन्द्र—चु० प० ) पञ्चमस्वरी दन्त्यवर्गतृतीयोपधः । इ, क—कुन्द्रयति नीचः मिथ्या वदतीत्यर्थः । कुन्द्र इति पाठेनैवेष्टसिद्धौ इदनुबन्धो वेदेषूच्चारणभेदार्थः ।

८ । खोर् ऋ खोटने । ( खोर—भ्वा० प० ) ऋ—अचुखोरत् । खोरति खञ्जः ।

### खुर्श क्षोरच्छिदोर् गुर्ङीश्च गूरकक उद्यमे ।

६ । खुरश क्षोरच्छिदोः । ( खुर—तुदा० प० ) क्षोरो विलेखनम् । श—खुरति भूमिं तृणं वा लोकः । खोरिता ।

१० । गुर्ङींश उद्यमे । ) (गुर—तुदा० कुटा० आ०) (गूर—चु०
११ । गूरङ्क उद्यमे । ) आ०) ङौ अमात् ह्रस्वदीर्घिणौ । ङ, शि—
गुरते, अगुरिष्ट । ई—गूर्णः । ङ, क—अभ्रेषु नोद्गूरयतेऽस्त्रमाहवे (य) इति हलायुधः । ५१ ।

गूरी यङ वधे गत्यां गुद्रिक् कुन्द्रे घुरश् ध्वनौ ।
भीमार्थे घुर् यङौ हिंसाज्यान्योश्चर् गमनेऽदने ।
आचारे चर्क संशीत्यसंशीत्योस्तूर्ङ्यौ दृङ्हि ।

११ । गूरी यङ वधे गत्याम् । (गूर—दिवा० आ०) दीर्घी । तथा च—दीपि पूरि जनि गूरि धूरयः काशि वाशि पदि शूरि तूरयः । घूरि जूरि खिदि विद्यति क्लिशिसूरि गृध्यति मनो दिवादिष्विति रथोद्धतायां चण्डेश्वरः । ई—गूर्णः । य, ङ—गूर्य्यते ।

१२ । गुद्रिक् कुन्द्रे । (गुन्द्र—चु० प०) पञ्चमस्वरी दन्त्यवर्गतृतीयोपधः । कुन्द्रो मिथ्योक्तिः । इ, क—गुन्द्रयति नीचः मिथ्या वदतीत्यर्थः । गुन्द्र इति पाठेनैवेष्टसिद्धौ इदनुबन्धो वेदेषूच्चारणभेदार्थः ।

१३ । घुरश ध्वनौ भीमार्थे । (घुर—तुदा० प०) भीमो भयानकरसः तस्यार्थो हेतुर्भीमार्थः, भीमार्थ इति ध्वनावित्यस्य विशेषणम् । श—घुरति व्याघ्रो मनुष्याणां भयजनकशब्दं करोतीत्यर्थः । अर्थद्वये तु शब्दं करोति भयहेतुर्भवति वेत्यर्थः । घोरिता । घुर भीमार्त्तशब्दयोरिति प्राञ्चः । आर्त्त इति शब्दविशेषणमिति रमानाथः । घुरत्यार्त्तश्च कुरतीति शब्दानुवृत्तौ भट्टमल्लः । (विभिन्ना शुघुरुर्घोरमिति भट्टि । १४ । ४०) ।

१४ । घूर्यङौ हिंसाज्यान्योः । (घूर—दिवा० आ०) दीर्घी । य, ङ—घूर्यते । ई—घूर्णः । ज्यानिर्गतवयोभावः ।

१५ । चर गमनेऽदने आचारे । (चरँ—भ्वा० प०) चरति ।

१५ । चर्क संशीत्यसंशीत्योः । (चर—चु० प०) संशीतिः संशयः, असंशीतिरसंशयः । क—विचारयति यो धर्म्ममिति हलायुधः । १२५ । चर असंशये इति प्राञ्चः । केचित्तु चर संशये इति पठित्वा संशये च्छि विकारणार्थमित्याहुः ।

१६। घूर्ङ्यौ दहि। (घूर—दिवा॰ आ॰) दीर्घी। ङ, य—घूर्य्यते वह्निरिन्धनम्। ई—घूर्णः।

चुर्कि स्तेये छुर्श्रि लोपे ज्वर्म रोगे ङ जूर यौ।

ज्यानौ बधे त्सर छद्मगत्यां ञि त्वर्षमङ् स्वदे।

१७। चुर कि स्तेये। (चुर—चु॰ भ्वा॰ प॰) कि—चोरयति चोरति धनं चौरः।

१८। छुर श्रि लोपे (छुर—तु॰ प॰) श्रि—छुरति, अच्छुरीत्, चुच्छोर। लोपश्छेदः।

१९। ज्वर म रोगे। (ज्वर—भ्वा॰ प॰) म—ज्वरयति। ज्वरति जनो धातुवैषम्यात्।

२०। ङ जूर यौ ज्यानौ बधे। (जूर—दिवा॰ आ॰) दीर्घी। ङ, य—जूर्य्यते। ई—जूर्णः। ज्यानिर्गतबहुवयोभावः।

२१। त्सर छद्मगत्याम्। (त्सर—भ्वा॰ प॰) दन्त्यवर्गीयस्याद्यो दन्त्य-सकारः। त्सरति धूर्त्तश्छलेन गच्छतीत्यर्थः। तत्सार।

२२। ञि त्वर ष मङ स्वदे। (त्वर—भ्वा॰ आ॰) ञि—त्वरितः तूर्णोऽस्ति। रुषाम क्षुषत्वरसंघुषास्वनिभ्यो निष्ठाया वेमत्वेऽपि वेदेषूदात्त-भेदार्थमेतस्यादनुबन्धमन्ये न मन्यन्ते। ष—त्वरा। म—त्वरयति। ङ—त्वरते। स्वद इह शीघ्रमनुष्ठानम्। नानुनेतुमवला: स तत्वरे इति। १८।२८।

तूर्यङौ हिंसे च तुर्लि वेगे तन्त्रिक् ङ धारणे।

२३। तूर्यङौ हिंसे च। (तूर—दिवा॰ आ॰) दीर्घी। य, ङ—तूर्य्यते। ई—तूर्णः। चकारात् स्वदे च।

२४। तुर लिर वेगे। (तुर—ह्वा॰ प॰) ह्रस्वी। लि—तुतूर्त्ति। ल—वैदिकः। वेगः शीघ्रगमनम्। *अदादिवज्जंधातुभ्यः शपो विधानमेवेष्टसिद्धौ अदादे शपं विधाय तल्लुक्करणमस्य निष्ठायां भावादिके वोदुलोऽव्यत इत्यनेन गुणार्थमिति चतुर्भुजः। तेन तोरितं तुरितमिति, एवं रोदितं रुदितमित्यादि।

२५। तत्रि कङ धारणे। (तन्त्र—चु॰ आ॰) आदिमध्ययोस्तकारः। धारणं धरणम्। भाषायामस्य विस्तारणे प्रायःप्रयोगः। इ, क, ङ—तन्त्रयते

तन्तून् तन्तुवायः । तन्त्र इति पाठेनैवेष्टसिद्धौ इदनुबन्धो वेदेषूच्चारणभेदार्थः । तत्रि कुटुम्बधारणे इति प्राञ्चः । द्वावेतौ धारणेऽर्थे वर्त्तेते इति चान्द्राः । केचित्तु कुटुम्बधातुममन्यमानाः तन्त्रिधातुः कुटुम्बस्य धारणे पोषणेऽर्थे वर्त्तते इत्याहुः ।

**ऋ धोर गतिचातुर्य्ये धूरी यङ बधे गतौ ।**

२६ । ऋ धोर गतिचातुर्ये । (धोर—भ्वा० प०) ऋ—अदुधोरत् । गतौ चातुर्यं गतिचातुर्यम् । धोरन्त्याधोरणाक्रान्ता विनीता यस्य वारणा इति हलायुधः । १३८ ।

२७ । धूरी यङ बधे गतौ । (धूर—दिवा० आ०) दीर्घी । ई—धूर्णः । य, ङ—धूर्यते । (आत्या धुर्यांश्च धूर्यन्ते साधुभिः साधुवाहिता इति हलायुधः । १३८ ।) ।

**पुरश अग्रगत्यां पूरी यङ पूर्त्तौ पूरक् च बभ्रतु ।**

**मभ्र गत्यां मत्रि काङ गुप्तोक्तौ मुरश वेष्टने ।**

२८ । पुरश अग्रगत्याम् । (पुर—तुदा प०) पञ्चमस्वरी । श—पुरति ज्येष्ठः, कनिष्ठस्य अग्रे गच्छतीत्यर्थः । पोरिता ।

२९ । पूरी यङ पूर्त्तौ । (पूर—दिवा० आ०) दीर्घी । पूर्त्तिरिह आप्यायनम् । ई—पूर्णः । य, ङ—पूर्य्यन्ते पितरस्तस्येति हलायुधः । १५१ ।

२९ । पूरक् च । (पूर—चु० प०) दीर्घी । चकारात् पूर्त्तौ । पूर्त्तिरिहापि आप्यायनम् । क—पितॄन् पूरयति श्राद्धे हव्यैः कव्यैश्च यः सदेति हलायुधः । १५१ ।

३० । बभ्रतु गत्याम् । } (बभ्र—भ्वा० प०) (मभ्र—भ्वा० प०)
३१ । मभ्र गत्याम् । } द्वावोष्ठ्यवर्गचतुर्थोपधौ । बभ्रति । मभ्रति ।

३२ । मत्रि काङ गुप्तोक्तौ । (मन्त्र—चु० प०) दन्त्यवर्गाद्योपधः । इ, क, ङ—इति भुवं मन्त्रयते नृपोऽयमिति मुरारिः । मन्त्र इतिपाठेनैवेष्टसिद्धौ इदनुबन्धो वेदेषूच्चारणभेदार्थः ।

३३ । मुरश वेष्टने । (मुर—तुदा० प०) पवर्गशेषादिः पञ्चमस्वरी । श—मुरति वृक्षं लता । मोरिता ।

**यन्त्रिक् सङ्कोचने वभ्र गत्यां श्वभ्रक् विले गतौ।**
**तङ्के शूर् षूर्यङो स्तम्भे हिंसे षुसुर्श भैश्ययोः।**

३४। यन्त्रिक् सङ्कोचने। (यन्त्र—चु० प०) दन्त्यवर्गाद्योपधः। इ, क—यन्त्रयति मन्त्रेण सर्पं जाङ्गुलिकः (विषवैद्यः)। यन्त्र इति पाठेनैवेष्टसिद्धौ इदनुबन्धो वेदेषूच्चारणभेदार्थः।

३५। वभ्र गत्याम्। (वभ्र—भ्वा० प०) वकारादिरोष्ठ्यवर्गचतुर्थोपधः। वभ्रति।

३६। श्वभ्रक् विले गतौ तङ्के। (श्वभ्र—चु० प०) वकारयुक्तादिरोष्ठ्यवर्गचतुर्थोपध। विलं रन्ध्रकरणम्। क—श्वभ्रयति भाण्डं बालकः। तङ्क इति तकि दौःस्थ्ये इत्यस्य रूपम्। श्वभ्रयति दीनः दुःखेन जीवतीत्यर्थः। तङ्क स्थाने तन्त्र इति पाठो हेयः।

३७। शूर् यङो स्तम्भे हिंसे। (शूर—दिवा० आ०) (षूर—दिवा० आ०) द्वौ दीर्घिणौ क्रमात्तालव्यमूर्द्धन्यादौ च। य, ङ—शूर्य्यते, सूर्य्यते। ई—शूर्णः सूर्णः। शेषः कैश्चिन्न मन्यते। स्तम्भो जडीभावः।
३८। षूर् यङो स्तम्भे हिंसे।

३९। षुर् श भैश्ययोः। (षुर्—तुदा० प०) (सुर्—तुदा० प०) द्वौ पञ्चमस्वरिणौ। शेषो दन्त्यादिः। श—सुरति। सुषोर। सुसोर। भा दीप्तिः, ऐश्य मैश्वर्य्यम्।
४०। सुर् श भैश्ययोः।

**स्फुर्शि स्फूर्त्तौ चले स्फर्श्च द्विचत्वारिंशदन्तराः।**

४१। स्फुरशि स्फूर्त्तौ चले। (स्फुर—तुदा० प०) स्फूर्त्तिः प्रकाशः, चलश्चलनम्। शि—स्फुरति, अस्फुरीत् चामरम्। पुस्फोर।

४२। स्फरश च। (स्फर—तुदा० प०) आद्यस्वरी। श—स्फरती स्फरन्ती पस्फार पिस्फरिषति पास्फर्य्यते। क्रमदीश्वरोऽप्येवम्। स्फरणं स्फुरणे इत्यमरोऽपि। चकारात् स्फूर्त्तिचलनयोः। अयं पञ्चमस्वरीति भ्रमो हेयः। तथात्वे पूर्व्वेणैवेष्टसिद्धावस्य वैयर्थ्यं स्यात्। न च कुटादित्वविकल्पनार्थमस्य पाठ इति वाच्यं पूर्व्वं चैव शि श इत्यनुबन्धद्वयपाठादपि तत्सिद्धेः।

एवं संख्याया अप्यसङ्गतिः स्यात्। यत्तु अस्मिन् सत्यपि स्मारयतीति साधनाय णौ स्मु रतेरिव उकारस्य आकारविधानं तदस्य सर्वसम्मतत्वाभावात् अतएव स्मर इत्येके इति रमानाथः।

द्विचत्वारिंशदन्तराः। (सुगमम्)।

---

## लान्तवर्गः।

**अलञ् वारणपर्य्याप्तिभूषास्विल् श शये गतौ।**

१। अल ञ वारणपर्य्याप्तिभूषासु। (अल—भ्वा० उ०) ञ—अलति अलते पापं गङ्गा, निवारयतीत्यर्थः। पर्य्याप्तिः सामर्थ्यम्। पर्य्याप्तन्तु यथेष्टं स्यात् क्लीबे शक्ते निवारणे इति विश्वप्रकाशात्। अलति घोटको धावितुं, समर्थः स्यादित्यर्थः। अलति हारो जनं भूषयतीत्यर्थः।

२। इल श शये गतौ। (इल—तुदा० प०) श—इलति। शयः शयनम्।

**इल् वाच् चेपे कलङ् संख्यावृतोः कल् किल् क्नुदौ किलश्।**

**शौक्ले श क्रीड़े कील बन्धे चल्ज चाले चये चलक्।**

**शौचे कूलस्त्वावृतौ क्मील् निमेषे ङ् कल्ल कूजने।**

**शब्देऽशब्दे कुलज् बन्धुसंहत्योः क्ल ल केलतु।**

**चेल् खेल्ठ चालगत्योः खल् चल्जार्थे खोल्ठ खोटने।**

२। इल वाच चेपे। (इल—चु० प०) ऋस्वादिः। क—एलयति। चकारादिलश च (चेपार्थकः)।

३। कलङ् संख्यावृतोः। (कल—भ्वा० आ०) ङ—कलते दिवसं बुधः, गणयतीत्यर्थः। वृत् शब्दः। (निष्कलन्ते मुखाद्यस्य नाश्लीलपरुषा गिर इति हलायुधः। ७०)।

४। कल क नुदौ। (कल—चु० प०) (किल—चु० प०) क—
किल क नुदौ। कालयति। केलयति। नुदिरिति नुद औ प्रादिकक्विप्रत्यये रूपम्।

४। क्लिल्ल श्वैत्ये क्रीड़े। (क्लिल—तुदा० प०) य—क्लिलति प्रासादः श्रियुर्वा। केलिता।

५। कील बन्धे,। (कील—भ्वा० प०) चतुर्थस्वरी। कीलति।

६। चल ज चाले चये। (चल—भ्वा० प०) ज—चालः चलः। चाल-चलनं, चयचयनम्।

६। चलक शौचे। (चल—चु० प०) शौचमिह शुचीकरणम्। क—चालयति पात्रं पयसा लोकः।

७। कूल तु आवृतौ। (कूल—भ्वा० प०) षष्ठस्वरी। कूलति वाटीं प्राचीरः।

८। क्ष्मील निमेषे। (क्ष्मील—भ्वा० प०) ओष्ठ्यवर्गशेषयुक्तचादि-स्तुर्य्यस्वरी। निमेषः पक्ष्मभिश्चक्षुष आवरणम्। क्ष्मीलति चक्षुः पक्ष्मभिरावृतं स्यादित्यर्थः।

९। ङ कल्ल कूजने शब्देऽशब्दे। (कल्ल—भ्वा० आ०) लद्वयान्तः। ङ—कल्लते लोकः, अव्यक्तशब्दं करोति, शब्दं न करोति वेत्यर्थः। कूजने इति चान्द्रजौमराः। शब्दमात्रे इति केचित्। अशब्दे इति कालापाः।

१०। कुल ज बन्धुसंहत्योः। (कुल—भ्वा० प०) ज—कोलः कुलः (पक्षे इगुपधत्वात् कप्रत्ययः) (बन्धुर्बन्धुः भावः) कोलति कुलीनः, सर्व्वेषां बन्धुः स्यादिति चतुर्भुजः। संहतीराशीकरणम्। केचित्तु संहतिस्थाने संस्त्यानं पठित्वा कोलति कुम्भान् कुलालः, गणयतीत्यर्थं इत्याहुः। संस्त्यानं पठित्वा संस्त्यानमुपचय इति रामः। अन्ये तु बन्धुषु ज्ञातिषु वर्त्तमानोऽयमन्यत्रास्य न प्रयोगः, गडि गण्डे इतिवदित्याहुः।

| | |
|---|---|
| ११। क्वेल्ल चालगत्योः। | (क्वेल—भ्वा० प०) (केल—भ्वा० प०) |
| १२। केल्ल चालगत्योः। | (ख्वेल—भ्वा० प०) (खेल—भ्वा० प०) |
| १३। ख्वेल्ल चालगत्योः। | आद्यौ वकारयुक्तः। द्वौ कवर्गप्रथमाद्यौ। |
| १४। खेल्ल चालगत्योः। | तृतीयो वकारयुक्त ... वर्ग- |

द्वितीयादिः। अ—अचिक्वेलत्, अचिकेलत्, अचिख्... चालः चलः। ... चालः कम्पः। ... चालः केचिन्न मन्यते।

१५। खल् चलनार्थे। (खल—भ्वा० प०) चलनार्थश्चालचयौ। चाल-
श्चेह स्खलनम्। खलति खलो धर्म्मात्।

१६। खोल्ट खोटने। (खोल—भ्वा० प०) ऋ—अचुखोलत्। खोलति खञ्जः।

गल् भक्षे गल्कङ् च स्रावे चल् ज्गतौ मिच्चले चलश्।
विल्लासे क् चल् भृतौ चिल् श वासे चेल् चेल्लृ केल्टवत्।

१७। गल भक्षे। (गल—भ्वा० प०) गलति।

१७। गल कङ च स्रावे। (गल—चु० आ०) स्रावः क्षरणम्। क,
ङ—गालयते रक्तं क्षतस्य। चकारात् गल च। स्वय हाराकारा गलति
जलधारा कुवलयादिति।

१८। चल ज गतौ। (चल—भ्वा० प०) ज—चाल. चलः। चलति
गीर्वनम्। चलमानोऽनिल इति ताच्छील्ये शतु शानः।

मिच्चले। पूर्व्वेणान्वयः। चलधातुः कम्पने मानुबन्धः स्यादित्यर्थः। चलति
लता वायुना। म—चलयति लतां वायुः। चलयन् भृङ्गरुचस्तवालकानिति
रघुः। ८। ५३। चालयन् सकलां पृथ्वीमिति घञन्ताच्चालं करोतीति णौ
शत्रन्तम्। गत्यर्थस्य तु चालयति हस्तिन यन्ता।

१८। चल श विलासे। (चल—तुदा० प०) श—चलती चलन्ती।
विलासः क्रीडनम्।

१८। क चल भृतौ। (चल—चु० प०) क—चालयति। दन्त्यवका-
रादिरयमिति दुर्गसिंहजुमरौ। भृतिरिह पोषणम्।

१९। चिल श वासे। (चिल—तुदा० प०) वास परिधानम्। श—
चिलति वस्त्रं लोकः, परिदधातीत्यर्थः। चेलिता।

२०। चेल्ट केल्टवत्। } (चेल—भ्वा० प०) (चेल्ल—भ्वा० प०) शेषो
२१। चेल्लृ केल्टवत्। } लद्वयान्तः। ऋ—अचिचेलत्, अचिचेल्लत्।
एस्य ऋदनुबन्धः कूडतेः कुटादित्ववन्निष्फलः, वेदेषूच्चारणभेदार्थो वा। शेषः
केल्टवच्चालगत्योः।

चिल्ल शैथिल्ये च जुलक् पिषि।

(चुल्ल—भ्वा० प०) पञ्चमस्वरी लद्वयान्तः।

एवौऽर्थः। ञ्जितियहणं ञस्टार्थम्। चुञ्जन्ति चाद्रनयमाव सह प्रियेखेति हलायुधः। ४७।

२३। चिञ्ज ग्रैंथिल्ये च। ( चिञ्ज—भ्वा० प० ) ऋत्सी, लद्दयान्तः। चिञ्जति। चेचिञ्जते। चकारात् छावञ्जती च।

२४। ञ्जुलक पिषि। (ञ्जुल—चु० प०) क—जोलयति। पिषि चूर्णीकरणे।

## जलक् पिधाने जलज धान्ये ज्वल् जम् चलत्विषोः।

२५। जलक् पिधाने। ( जल—चु० प० ) क—जालयति चन्द्रं मेघः।

२५। जल ज धान्ये। ( जल—भ्वा० प० ) ज—जालः जलः। धीयते जीवोऽनेनेति धानं तस्य भावो धान्यं जीवनोपयोगिक्रिया। जलति लोकान् जलं, जीवयतीत्यर्थं। धीयते आच्छाद्यतेऽनेनेति धानं तस्य भावो धान्यं आच्छादनक्रिया। जलति जालेन मत्स्यान् जालिक इति वा। गोविन्दभट्टस्तु धनस्य भावो धान्यं समृद्धिः। जलति धनी समृद्धः स्यादित्यर्थं इत्याह।

२६। ज्वल् जम् चलत्विषोः। (ज्वल—भ्वा० प०) वकारयुक्तः। ज—ज्वालः ज्वलः। म—प्रज्वलयति। मित्त्वेऽप्यस्य ञौ ज्वल ह्वल ह्मलेत्यादिना केवलस्य ह्रस्वविकल्पनात् सोपसर्गस्यैव नित्यं ह्रस्व.। ज्वलयति ज्वालयति। त्विट् दीप्तिः। ज्वलति वह्निः।

## टल् ट्वल् ज विक्लवे नील वर्णेश् गिल् गहने गलज्।
## बन्धे तुल क्युन्मितौ तिल्ल तिल् गतौ तिल्कश स्निहि।

२७। टल् ज विक्लवे। ( टल—भ्वा० प० ) ( ट्वल—भ्वा० प० ) ज—
२८। ट्वल् ज विक्लवे। टालः टलः। ट्वालः ट्वलः। विक्लवो विह्वलीभावः।

२९। नील वर्णे। ( नील—भ्वा० प० ) वर्ण इह कृष्णवर्णीभावस्तत्कारणञ्च। नीलति पत्रं तमालस्य। नीलति सूत्रं तन्तुवायः।

३०। श गिल गहने। ( गिल—तुदा० प० ) ऋत्सौ। गहनं दुर्बोधः। श—गिलति शास्त्रं जड़धीः, दुःखेन जानातीत्यर्थः।

३१। गल ज बन्धे। ( गल—भ्वा० प० ) ज—गालः गलः। गलति केशं लोकः, बध्नातीत्यर्थः। गन्धे इति केचित्। गन्धोऽदर्शनमिति गोविन्दभट्टः।

२२। तुल कि उन्मितौ। (तुल—चु० भ्वा० प०) उन्मितिः परिमाणम्। कि—तोलयति तोलति काञ्चनं वणिक्। त्वदीयं सौन्दर्य्यं तुहिनगिरिकन्ये तुलयितुमिति शङ्करोक्तं तुलां करोतीति णौ साध्यम्।

२३। तिल्ल गतौ। } (तिल्ल—भ्वा० प०) (तिल—भ्वा० प०) आद्यो
२४। तिल गतौ। } लद्वयान्तः। द्वौ ऋखिनौ। तिल्लति तेलति।

२४। तिल क ञ स्निह्वि। (तिल—चु० तु० प०) स्निक् स्निग्धीभावः। क—तैलयति। ञ—तिलति तैलेनाङ्गं। तितेल।

## तूल्काङ् पूरणे तूल्क निष्कर्षे तल्कि प्रतिष्ठितौ।

२५। तूलकङ पूरणे। (तूल—चु० आ०) षष्ठस्वरी। क, ङ—तूलयते।

२५। तूल्क निष्कर्षे। (तूल—चु० प०) षष्ठस्वरी। निष्कर्ष इयत्तापरिच्छेदः। क—तूलयति काञ्चनं वणिक्।

२६। तल कि प्रतिष्ठितौ। (तल—चु० भ्वा० प०) कि—तालयति तलति व्रतं, सम्पूर्णं स्यादित्यर्थः।

## टुल्कोत्क्षेपे दल्मि भेदे दलक् भेदेऽथ पाल् पलक्।
## रक्षे पलज् पल्ल गतौ पेल् चाले च पिल् क्रुदि।

२७। टुल्कोत्क्षेपे। (टुल—चु० प०) टोलयति धूलिं वायुः।

२८। दलमि भेदे। (दल—भ्वा० प०) मि—दलयत्यष्टौ कुल क्ष्माभृत इति मुरारि। दालयति। भेदो विदारणम्। दलति काष्ठं कुठारः। क्वचिद्विदीर्णीभावे विकसने चायम्। श्रीमद्राघववाहुदण्डविदलत्कोदण्डचण्डध्वनिरिति महानाटकम्। दरविदलितमल्लीवल्लिचञ्चत्परागेति जयदेव।

२८। दलक् भेदे। (दल—चु० प०) क—दालयति गात्रं वाणः।

३९। अथ पालक रक्षे। } (पाल—चु० प०) (पल—चु० प०) क—पाल-
४०। पलक रक्षे। } यति। ऋखिनैरेष्टसिद्धौ दीर्घिणोऽपि पाठः कानुबन्धानामिदनुबन्धवत् ञेरनित्यतां बोधयति। तेन पालतीत्यपि सिद्धम्।

४०। पल ज गतौ। } (पल—भ्वा० प०) (पल्ल—भ्वा० प०) शेषो
४१। पल्ल गतौ। } लद्वयान्तः। ज—पालः पलः। पल्लति। (पलन्ति यद्विषो दिक्षु इति हलायुधः। २५८। पलायन्ते इत्यर्थः)।

४२। पेल चाले च। (पेल—भ्वा॰ प॰) ऋ—अपिपेलत्। पिपेलतुः। चालः कम्पः। चकारात् गतौ च।

४३। पिल क् नुदि। (पिल—चु॰ प॰) क—पेलयति। नुदि प्रेरणे।

## पील रोधे पुल् श पुल् ज महत्त्वे पुलक उच्छ्रितौ।

४४। पील रोधे। (पील—भ्वा॰ प॰) रोधः क्रियानिरोधः जडीभाव इत्यर्थः। पीलति पशुः।

४५। पुल श महत्त्वे। } (पुल—तुदा॰ प॰) (पुल—भ्वा॰ प॰) द्वौ
४५। पुल ज महत्त्वे। } पञ्चमस्वरिणौ। श—पुलति पुलिनं शरदि, महत् स्यादित्यर्थः। पोलिता। ज—पोलः पुलः। पोलति।

४५। पुल क उच्छ्रितौ। (पुल—चु॰ प॰) पञ्चमस्वरी। उच्छ्रितिरुच्चीभावः। क—पोलयति पर्व्वतः।

## पूल् कि स्यात् संहतौ फुल्ल विकासे ञि फला भिदि।

४६। पूल कि स्यात् संहतौ। (पूल—चु॰ भ्वा॰ प॰) षष्ठस्वरी। कि—पूलयति पूलति। संहतीराशीकरणम्।

४७। फुल्ल विकासे। (फुल्ल—भ्वा॰ प॰) क्लसौ लद्वयान्तः। विकास इति कस ज गताविति दन्त्यान्तस्य घञि रूपम्, विपूर्व्वत्वेन विकसनमित्यर्थः। फुल्लति मल्लीकलिका।

४८। ञि फला भिदि। (फल—भ्वा॰ प॰) ञि—फुल्तोऽस्ति। आ—फलितं फुल्लं तेन, प्रफलितः प्रफुल्त. सः। फलति काष्ठं कुठारः।

## फल् निष्पत्तौ फल् ज गतौ फेलृ च क् वल्ल जीवने।

४८। फल निष्पत्तौ। (फल—भ्वा॰ प॰) इह नवशुककोमला मणीनां रविकरसंवलिताः फलन्ति भासः इति भारविः। ५। ३८। (निष्पद्यन्ते इत्यर्थः)। निष्पादनेऽपि वाल्मीकिः—फलति स्म यस्य चरितस्तोत्राय दिव्या गिर इति।

४८। फल ज गतौ। (फल—भ्वा॰ ज्वलादिः, प॰) ज—फालः फलः। फलति।

४९। फेलृ च। (फेल—भ्वा॰ प॰) ऋ—अपिफेलत्। पिफेलतुः। चकाराद्गतौ।

५०। क वल्ल जीवने। (वल—चु० प०) क, म—वलयति। (जीवनं प्राणनम्)।

**वल् ज धान्यावरोधे च वल् ङ दाने वधे ङ् वलक्।**

**च निरूपे बिल कश भेदने बुल्क मज्जने।**

५०। वलज धान्यावरोधे च। (वल—भ्वा० प०) ज—वाल: वल। धनस्य भावो धान्यं समृद्धि, तस्यावरोधः प्रतिबन्धः। वलति पुण्यहीनं विधिं, पुण्यहीनस्य समृद्धिं प्रतिबध्नातीत्यर्थ.। अयमर्थोऽन्यैर्न मन्यते। चकाराज्जीवने च। वलत्यनेन लोकः।

५०। वलङ दाने वधे। (वल—भ्वा० आ०) ङ—वलते।

५०। ङ वल क च निरूपे। (वल—चु० आ०) ङ, क—वालयते धर्म्मं धीरः। अयं कैश्चिन्न मन्यते। चकारात् वलङ च। (निरूपणार्थकः)।

५१। बिल कश भेदने। (बिल—चु० तुदा० प०) तृतीयस्वरी। क—बेलयति। श—बिलति।

५२। बुल्क मज्जने। (बुल—चु० प०) पञ्चमस्वरी। क—बोलयति प्रस्तरः पयसि। तालव्यवर्गादिरयमिति केचित्। चोलः वस्त्रम्। निजां वीणां वाणी निचुलयति चोलेन निभृतमिति शङ्कराचार्य्यः। अत्र निचुलयतीति अरमित्यतायां अगृह्णाप्नोति क प्रत्यये निचुलां करोतीति ञौ साध्यम्। मग्नां करोतीत्यर्थः। तालव्यवर्गाद्यादिपक्षे उञ्छाद्येऽप्ययम्।

**भलङ् भल्कङ् भिल्क वादिवन्नल्लङ तु भल् ङ्वत्।**

| | | |
|---|---|---|
| ५३। भल ङ वादिवत्। | | (भल—भ्वा० आ०) (भल—चु० आ०) |
| ५३। भल क ङ वादिवत्। | } | (भिल—चु० प०) ङ—भलते। क, ङ— |
| ५४। भिल क वादिवत्। | | भालयते। क—भेलयति। वादिवदिति— |

(एते त्रयो धातवः पूर्व्वोक्ता वकारादयः वलङ, ङ वल क, बिल क श इतिवदर्थबोधका इत्यर्थः। ततश्चैते धातव इत्थं पठनीयाः। यथा—भलङ दानवधनिरूपणेषु, भलक ङ निरूपणे, भिलक भेदने इत्यर्थः।

५५। भल्ल ङ तु भलङ्वत्। (भल्ल—भ्वा० आ०) लद्वयान्तः। ङ—भल्लते भलङ्वत् दानवधनिरूपणेष्वित्यर्थः।

मल् मल्लङ धृतौ मील् निमेषे मिल यञ् श्लिषि।

५६। मल ङ धृतौ। } (मल—भ्वा० आ०) (मल्ल—भ्वा० आ०) तृतीयो-
५७। मल्ल ङ धृतौ। } लद्वयान्तः। ङ—मलते, मल्लते। (धृतिर्धारणम्।)

५८। मील निमेषे। (मील—भ्वा० प०) चतुर्थस्वरी। अट—अमिमीलत्। मीलति चक्षुः, पक्ष्मभिरावृतं स्यादित्यर्थः।

५९। मिल य ञ श्लिषि। (मिल—तुदा० उ०) श्लिषि सम्बन्धीभावे। य, ञ—मिलति मिलते लता वृक्षेण। अयं विभाषया कुटादिरिति कुलचन्द्रः। तेन मिलिष्यन्ति। महापातकिनः पञ्च मिलितव्यं न तैः सहेति। एवं व्याल-निलयमिलनेन गरलमिव कलयति मलयसमीरमिति जयदेवः।

मुल् मूलक् रोपणे मूलञ् प्रतिष्ठायां ललक् ङ तु।
ईप्सायां वेल्ल वेल् वेह्ल चाले वल् मि वल्लङ।
स्मृतौ विलश् च शल ङ चलने च शलञ् गतौ।

६०। मुलक रोपणे। } (मुल—चु० प०) (मूल—चु० प०) द्वौ
६१। मूलक रोपणे। } क्रमात् पञ्चमषष्ठस्वरिणौ। रोपणमारोपणम्। क—मोलयति, मूलयति तरुं लोकः। गोविन्दभट्टस्तु रोहणेति पठित्वा रोहणं जन्मेति व्याख्याति।

६१। मूल ञ प्रतिष्ठायाम्। (मूल—भ्वा० उ०) पवर्गशेषादिः षष्ठस्वरी। प्रतिष्ठा स्थितिरिति गोविन्दभट्टः। मूलति मूलते यशः। अयं परस्मैपदीति केचित्।

६२। लल कङ तु ईप्सायाम्। (लल—चु० आ०) क, ङ—लालयते। ईप्सा आप्तुमिच्छा।

६३। वेल्ल चाले। } (वेल्ल—भ्वा० प०) (वेल—भ्वा० प०) (वेह्ल—
६४। वेलृ चाले। } भ्वा० प०) त्रय एकादशस्वरिणः। आद्यो
६५। वेह्लृ चाले। } लद्वयान्तः, शेष अन्त्यचतुर्थोपधः। अट—अविवेल्लत् अविवेलत् अविवेह्लत्। आद्यन्तयोः ऋदनुबन्धः कूडतेः कुटादिपाठवन्निष्फलः,

वेदेपूत्राहणभेदार्थौ श्रा१ वालः शष्पवनम्। उदेतमुत्सवस्रिकत्रुणमस्कारः शष्पं वार्य्यतामिति। एते गतावित्येके। शेषः केचिन्न मन्यते।

६६। वल मिङ स्तृतौ। ⎫ (वल—भ्वा॰ आ॰) (वल्ल—भ्वा॰ आ॰)
६७। वल्ल ङ स्तृतौ। ⎭ शेषो लद्वयान्तः। स्तृतिरिह संवरणम्।
मि—वलयति वालयति। ङ—वलते वल्लते धनं लोकः, संवृणोतीत्यर्थः। (कुवलयं वलयन् मदद्दाववाविति माघः। ६। २।)

६८। विलश च। (विल—तुदा॰ प॰) तृतीयस्वरी। चकारात् स्तृतौ। स्तृतिराच्छादनम्। श—विलति वस्त्रं लोकः, परिदधातीत्यर्थः। वेलिता। अयं केचिन्न मन्यते।

६९। शल ङ चलने च। (शल—भ्वा॰ आ॰) ङ—शलते। चलनं कम्पः। चकारात् स्तृतौ, स्तृतिरिह संवरणम्।

६९। शल ञ गतौ। (शल—भ्वा॰ प॰) ञ—शालः शलः।

शल् ङक् श्लाघे शल श्वल्ल श्वल् वेगे ङ् शालृ कत्थने।

६९। शल ङक श्लाघे। (शल—चु॰ आ॰) ङ, क—शालयते पण्डितं धीरः।

६९। शल वेगे। ⎫ (शल—भ्वा॰ प॰) (श्वल्ल—भ्वा॰ प॰) (श्वल—
७०। श्वल्ल वेगे। ⎬ भ्वा॰ प॰) शेषौ द्वौ वकारयुक्तादी। मध्यमो लद्व-
७१। श्वल वेगे। ⎭ यान्तः। शलति श्वल्लति श्वलति। वेगः शीघ्रगतिः।

७२। ङ शालृ कत्थने। (शाल—भ्वा॰ आ॰) कत्थनं प्रशंसा। ङ—शालते गुणिनं गुणी। ऋ—अशशालत्।

शिल शुञ्छे ञि शील स्यात् समाधौ श्मील् निमेषणे।

७३। शिल श उञ्छे। (शिल—तुदा॰ प॰) तृतीयस्वरी। उञ्छ उद्धृतशस्यशेषापहरणम्। श—शिलति धान्यं दीनः। शेलिता।

७४। ञि शील स्यात् समाधौ। (शील—भ्वा॰ प॰) चतुर्थस्वरी। ञि—शीलितोऽस्ति। समाधिः सेवानुभावनं प्रवृत्तिर्वा। यः शीलति सदा धर्म्ममिति हलायुधः। २४५।

७५। श्मील निमेषणे। (श्मील—भ्वा॰ प॰) श्मोष्ठ्यवर्गशेषयुक्तः। श्मीलति चक्षुः, पक्ष्मभिरावृतं स्यादित्यर्थः।

## शूल् रुजायां शैल षैलृ केलृवत् ष्ठलज स्थितौ ।

७६। शूल रुजायाम्। (शूल—भ्वा० प०) षष्ठस्वरी। शूलति लोकं रोगः।

७७। शैलृ केलृवत्। } (शैल—भ्वा० प०) (षैल—भ्वा० प०) द्वौ

७८। षैलृ केलृवत्। } क्रमात्तालव्यमूर्द्धन्यादौ। ऋद—अशिशैलत्, असिषेलत्। केलृवत् चालगत्योरित्यर्थः।

७९। ष्ठलज स्थितौ। (ष्ठल—भ्वा० प०) ज—स्थाल: स्थलः। स्थलति लोकस्तिष्ठतीत्यर्थः। तिष्ठालयिषति।

## षिल् शुञ्छे षल् गतौ स्थल्ज स्थाने खल्मि चये चले।

८०। षिल श उञ्छे। (षिल—तुदा० प०) उञ्छ उद्धृतशस्यशेषापहरणम्। श—सिलति धान्यं दीनः। सेलिता।

८१। षल गतौ। (षल—भ्वा० प०) मूर्द्धन्यादिः। सलति। सिषालयिषति।

८२। स्थल ज स्थाने। (स्थल—भ्वा० प०) दन्त्यादिः। ज—स्थाल: स्थलः। तिस्थालयिषति। अयं नास्तीति केचित्।

८३। खल्मि चये चले। (खल—भ्वा० प०) मि—खलयति वचनं ते सर्व्वथा सुभ्रु खेदमिति मालत्याम्। खालयति। चखाल। चयः सञ्चयः। खलति पुष्पं मालिकः, सञ्चिनोतीत्यर्थः। चलः खलनम्। खलति पत्रं वृक्षस्य। दृढः प्रेमा भग्नः सदसिरिव सन्धिं न लभते लभेतापि प्रायः स्खलति खलु यत्नैरपि धृत इति।

## स्फुल्शि स्फूर्त्तौ च स्फल श चाले च स्मील् निमेषणे।

८४। स्फुल शि स्फूर्त्तौ च। (स्फुल—तुदा० प०) शि—स्फुलति, अस्फुलीत्, पुस्फोल। स्फूर्त्तिः प्रकाशः। चकारात् चयचलयोश्च।

८५। स्फल श चाले च। (स्फल—तुदा० प०) आद्यस्वरी। श—स्फलती स्फलन्ती। पस्फाल। पिस्फलिषति। पास्फल्यते। सुरद्विपास्फालनकर्कशाङ्गुलाविति रघुः। ३। ५५। चालश्चलनम्। चकारात् स्फूर्त्तौ च। अयमपि षष्ठस्वरीति भ्रमो हेयः। तथात्वे कामधेनौ स्फलती स्फलन्तीत्युदाहरणासङ्गतेः। न च तत्रापि पक्षमेश्वर एवेति वाच्यं तर्हि गुणस्थानिनां पुलतिप्रभृतीनामिव तिवादेरेवोदाहर्त्तुमुचितत्वात्। यत्त अस्मिन् सत्यपि स्फुलतेरेव

भवति स्फाल इति निपातनं तत् स्फोल इत्यनिष्टपदनिवारणार्थम्, अस्य सर्व्व-सम्मतत्वाभावाच्च। अतएव स्फल इत्येके इति रमानाथः।

८६। मील निमेषणे। (मील—भ्वा० प०) ओष्ठ्यवर्गशेषयुक्तः। मीलति चक्षुः, पक्ष्मभिराहतं स्यादित्यर्थः।

सेलृ क्ष्वेले क्ष्वल ज्वल्म चाले हुलज् हृतौ छदि।

८७। सेलृ क्ष्वेले। (सेल—भ्वा० प०) ऋ—असिसेलत्। क्ष्वेले चालगत्योः।

८८। क्ष्वलम चाले। } (क्ष्वल—भ्वा० प०) (ज्वल—भ्वा० प०) आद्यो

८९। ज्वलम चाले। } वकारयुक्तः शेष ओष्ठ्यवर्गशेषयुक्तः। म—प्रज्व-लयति। क्ष्वलयति क्ष्वालयति। ज्वलयति ज्वालयति (ज्वलह्वल ह्मलेति वा ह्रस्वः) चालश्चलनम्।

९०। हुल ज हृतौ छदि। (हुल—भ्वा० प०) ज—होलः हुलः। छदीति छदकि ज संवृतावित्यस्य रूपं, संवरणे इत्यर्थः।

हिलश् हावक्रतौ हल्ज विलेखे ला नवतिस्त्रिभिः।

९१। हिल श हावकृतौ। (हिल—तुदा० प०) तृतीयस्वरी। एकोऽर्थः। श—हिलति तरुण्या तरुणः।

९२। हल ज विलेखे। (हल—भ्वा० प०) ज—हालः हलः। हलति भूमिं कृषकः।

ला नवतिस्त्रिभिः। (लान्तास्त्रिनवतिसंख्यकाः)। अत्र संख्यायामेकोनास्तीति चिन्त्यम्।

---

## वान्तवर्गः।

अव रक्षे गतौ कान्तौ प्रीतौ तृप्तौ द्युतौ श्रुतौ।
प्राप्तौ श्लेषेऽर्थने वेशे भावे वृद्धौ ग्रहे वधे।
सामर्थ्येऽवगमे कामे धृतावर्च्चे वधे ड्रवि।
व्याप्तिप्रीणनयोरुर्व्वी हिंसे नृ क्रवि कृतौ च ष।

**अवि सेवे अर्वे दर्पे श्लव ञ्लङ भये श्रिव।**

**श्रिव्यु ष्ठीव निरासे ष्ठीव् कव क्षीवङ वान्तवत्।**

१। अव रक्षे गतौ कान्तौ प्रीतौ तृप्तौ द्युतौ श्रुतौ प्राप्तौ श्लेषेऽर्थने वेशे भावे वृद्धौ ग्रहे वधे सामर्थ्येऽवगमे कामे धृतौ। (अव—भ्वा० प०) ऊनविंशति-रर्थाः। कान्तिरिच्छा, कमुङ स्पृहीति योगार्थत्वात्। काम इति अप्रन्ता-वुत्पत्तेरिच्छोत्पादना इति भेदः। द्युतिः शोभा, श्रुतिराकर्णनम्, श्लेष आलि-ङ्गनम्, अर्थनं याच्ञा, वेशः प्रवेशः, भावः सत्ता, ग्रह आदानम्, सामर्थ्यं शक्तिः, अवगमो ज्ञानम्, धृतिर्धरणं, रक्षणे प्रसिद्धोऽयम्। प्रीतौ तु न मामवति सद्दीपा रत्नसूरपि मेदिनीति रघुः।१।६५। केचित्तु ग्रहस्थाने दहनं पठन्ति। अवति।

२। अर्वं वधे। (अर्व—भ्वा० प०) अर्वति।

३। इवि व्याप्तिप्रीणनयोः। (इन्व—भ्वा० प०) कस्वादिः। इ—इनुष्यते। दन्त्यवकारपरत्वान्नानुस्वारः। प्रीणनं केचिन्न मन्यते।

४। उर्वी हिंसे। (उर्व—भ्वा० प०) कस्वादिः। र्व्वनमृत्ययीति दीर्घे ऊर्वति। क्विपि राल्लोपोलोप इति वलोपे ऊः उरौ उरः। एवं सर्वत्र। ई—ऊर्णः।

५। न ऋवि ऋतौ च। (ऋव—स्वा० प०) सप्तमस्वरौ। म—ऋणोति (ऋविधिव्योः ऋधौम्नौ) इ—ऋणवते। चकाराद्धिंसे च।

६। ङ केवृ सेवे। (केव—भ्वा० आ०) ङ—केवते। ऋ—अचिकेवत्।

७। कर्वं दर्पे। (कर्व—भ्वा० प०) कर्वति।

८। क्लवच ङ भये। (क्लव—भ्वा० आ०) अन्तःस्थादृतीययुक्तः। च—क्लवा। म—क्लवयति। ङ—क्लवते। विक्लवन्ति दिवि ग्रहा इति तु पचा-दित्वादनि विक्लवा इवाचरन्तीति क्वौ साध्यम्।

९। श्रिवु निरासे।<br>९। ष्ठिव्यु निरासे।<br>१०। ष्ठीव निरासे।

(श्रिव—भ्वा० प०) (श्रिव—दिवा० प०) (ष्ठीव—भ्वा० प०) दावाद्यौ कस्विनौ, शेषौ दीर्घौ। निरास इह थुत्कार इति भट्टमल्लः, मुखेन श्लेष्मादेर्वमनमिति केचित्। पृथक्पाठात् पूर्वौ भ्वादिः। ष्ठेवति। उ—ष्ठेवित्वा ष्ठ्यूत्वा। य—ष्ठीव्यति। उ—ष्ठेवित्वा ष्ठ्यूत्वा। ष्ठीवत्यकं लोकः। (थुत्करोतीत्यर्थः)।

१०। चीवृङ् वान्तवत्। (चीव—भ्वा० आ०) (काव—भ्वा० आ०)
११। काबृङ् वान्तवत्। (क्लीव—भ्वा० आ०) ऋट—अचिचीवत्,
१२। क्लीवृङ् वान्तवत्। अचकावत्, अचिक्लीवत्। ङ—चीवते,

(चीवते हर्षगर्वितं इति हलायुधः। ८५) कावते, क्लीवते। वान्तवदिति चीवृङ् दर्पे, काबृङ् स्तुतौ वर्णे, क्लीवृङ् अधार्ष्ट्ये इत्यर्थः। (ओष्ठ्यबकारान्तानामेतत्सजातीयानां त्रयाणामिवार्था एषामपीत्यर्थः)।

खवग् खच्वत् खर्व गर्व्वे खेव् गेव् ग्लेवृङ् सेव ई।
गुर्वुद्यमे गर्व मर्दे चीवृञ ग्रहसंवृतौ।

१३। खव ग खचवत्। (खव—क्र्या० प०) खचवदिति भूतिपूत्योत्पत्तौ। ग—खौनाति राजा, समृद्धः स्यादित्यर्थः। क्वौःशूटावित्यूट्, आदूटोऽग्निः। क्विपि खौः खावौ खावः। क्तौ खौतिः। केचित्तु प्वादित्वात् ह्रस्वे खुनातीत्याहुः। धातुपारायणस्तु खवूनातीत्युदाहरन्ति।

१४। खर्व गर्वे। (खर्व—भ्वा० प०) खर्वति।

१५। खेवृङ सेवे। (खेव—भ्वा० आ०) (गेव—भ्वा० आ०)
१६। गेवृङ सेवे। (ग्लेव—भ्वा० आ०) शेषोऽन्तःस्थात्तृतीययुक्तः।
१७। ग्लेवृङ सेवे। ऋट—अचिखेवत्, अजिगेवत्, अजिग्लेवत्।

ङ—खेवते, गेवते, ग्लेवते।

१८। ई गुर्वुद्यमे। (गुर्व—भ्वा० प०) क्त्री। गूः गुरौ गुरः। ई—गूर्णः। गूर्वति पत्ति' ग्रन्थम्।

१९। गर्व मदे। (गर्व—भ्वा० प०) मद इहाहङ्कारः। नीचो गर्व्वति सम्पदा।

२०। चीवृञ ग्रहसंवृतौ। (चीव—भ्वा० उ०) चतुर्थस्वरी। ऋट—अचिचीवत्। ञ—चीवति चीवते वल्कलं भिक्षुः, गृह्णाति परिदधाति वेत्यर्थः। (अर्थद्वयं, ग्रहो ग्रहणं, संवृतिराच्छादनम्)।

चीवक् दीप्तौ चर्व कितु भक्षे जुर्वी वधे जिवि।
प्रीणने जीवञ्च प्राणे पिवि सेवीऽथ नीवतु।
स्थौल्ये तीव च तुर्वी तु हिंसे तेवृङ देवने।

२०। चीवक् होती। (चीव—चु० प०) चतुर्थस्वरी। णि—चीवयति।

२१। चर्वं कितु भक्षे। (चर्वं—चु० भ्वा० प०) णि—चर्वयति चर्वति तण्डुलान् बालः।

२२। जुर्वी बधे। (जुर्वं—भ्वा० प०) ऊस्वी। क्विपि जूः जुरौ जुरः। ई—जूर्णः।

२३। जिवि प्रीणने। (जिन्व—भ्वा० प०) ऊस्वी। इ—जिन्व्यते जिन्वति लोकः पितरम्।

२४। जीव ऋ प्राणे। (जीव—भ्वा० प०) चतुर्थस्वरी। ऋ—अजीजिवत् अजिजीवत्। प्राणः प्राणधारणम्। जीवति लोक।

२५। णिवि सेके। (णिन्व—भ्वा० प०) ऊस्वी। इ—निन्व्यते निन्वति।

२६। अथ णीव तु स्थौल्ये। (णीव—भ्वा० प०) चतुर्थस्वरी। नीवति लोकः स्थूलः स्यादित्यर्थः।

२७। तीव च। (तीव—भ्वा० प०) चतुर्थस्वरी। चकारात् स्थौल्ये।

२८। तुर्वी तु हिंसे। (तुर्वं—भ्वा० प०) ऊस्वी। क्विपि तूः तुरौ तुरः। ई—तूर्णः।

२९। तेवृङ् देवने। (तेव—भ्वा० प०) देवनमिह क्रीड़ा। ऋ—अतितेवत्। ङ—तेवते कन्दुकैर्नित्यमिति। देवनमिह रोदनमिति भट्टमल्लः।

## थुर्वं दुर्वी बधे दिव्यु जिगीषेच्छापणिद्युतौ।

## क्रीड़ागत्योर्दिवि प्रीतौ द्रिव कङ् परिकूजने।

३०। थुर्वं बधे। } (थुर्वं—भ्वा० प०) (दुर्वं—भ्वा० प०) द्वौ ऊस्विनौ।
३१। दुर्वी बधे। } क्विपि थूः थुरौ थुरः, दूः दुरौ दुरः। ई—थूर्नः दूर्णः।

३२। दिव्य जिगीषेच्छापणिद्युतौ क्रीड़ागत्योः। (दिव—दिवा० प०) य—दीव्यति। उ—देवित्वा द्यूत्वा। दीव्यमानं शितान् बाणानिति भट्टौ (५।८१) ताच्छील्ये शतुः शानः। पणिर्व्यवहारः स्तुतिश्च। व्यवहारस्तु क्रयणविक्रयणस्वरूपः। स्तुतावेवाकर्म्मकः। क्रीड़ायान्तु दीव्यतेः करणस्य नित्यं कर्म्मत्वम्, तत्र तृतीया विभक्तिरेव विभाव्यते इति साम्प्रदायिकाः। तेन अक्षा दीव्यन्ते छात्रेणेति कर्म्मणि प्रत्ययः स्यात्। अक्षैर्दीव्यते छात्रेणेति भावे प्रत्ययो

न स्यात्। अकर्म्मदेवयते छात्रेण गुरुरित्यत्र अण्यन्तकर्त्तुः कर्म्मत्वं न स्यात्। तेनादुद्युषयद्रामं मृगेण मृगलोचनेति भट्टौ तु, तेनेति करणं दुद्यूषेरेव न तु दीव्यतेः। तेनाकर्म्मकत्वात् राममित्यण्यन्तकर्त्तुः कर्म्मत्वम्।

३२। दिवि प्रीतौ। (दिन्व—भ्वा० प०) इ—दिन्व्यते। प्रीतिरिह प्रीतीकरणम्। दिन्वति लोकः पितरम्।

३२। दिव काङ परिकूजने। (दिव—चु० आ०) क, ङ—परिदेवयते वणिक्तस्य राष्ट्रे न दुःखित इति हलायुधः। ६०।

## क दिवर्द्दे देवृङ तु देवने दव् धवि व्रजे।

३२। क दिवर्द्दे। (दिव—चु० प०) क—देवयति। अर्द्द इह पीडनमिति मैत्रेयः। याचनं गमनं वेति रमानाथः।

३३। देवृ ङ तु देवने। (देव—भ्वा० आ०) ऋ—अदिदेवत्। ङ—देवते कन्दुकैर्नित्यमिति हलायुधः। ६०। देवनमिह रोदनमिति भट्टमल्लः।

३४। दवि व्रजे। (दन्व—भ्वा० प०) (धन्व—भ्वा० प०) इ—दन्व्यते,
३५। धवि व्रजे। धन्व्यते, व्रजो गतिः।

## धिविन् प्रीतौ गतौ धुर्व्वीं हिंसे धावुञ् जवे मृजि।

३६। धिविन् प्रीतौ गतौ। (धिन्व—स्वा० प०) प्रीतिरिह प्रीतीकरणम्। इ—धिन्व्यते। न—धिनोति हव्येन हिरण्यरेतसमिति भारविः।१।२२। गतिः कैश्चिन्न मन्यते।

३७। धुर्व्वीं हिंसे। (धुर्व—भ्वा० प०) क्रुक्वौ। क्विपि धूः धुरौ धुरः। ईं—धूर्णः। कितवेच वाच्ये धूर्त्त इति मनीषादित्वान्निपातः।

३८। धावु ञ जवे मृजि। (धाव—भ्वा० उ०) उ—धावित्वा धौत्वा। ञ—धावति धावते। जवः शीघ्रगतिः। यस्य रोषारुणा दृष्टिर्धावते यत्र मानवे। पाशपाणिः पुनस्तत्र यमदूतोऽपि धावतीति हलायुधः। १२८। मृट् शुद्धीभावः शुद्धीकरणञ्च। धावति ताम्रमम्लेन, शुध्यतीत्यर्थः। दधावाङ्गिरस्ततस्त्वचः सुग्रीवस्य विभीषण इति भट्टिः।१४।५०। अस्य जवे निष्ठाया अप्रयोगः। (यच्च धावितेति पदं तत् धावो धावनं स जातोऽस्य इति वाक्ये इतप्रत्ययसाधितम्)।

**प्लवङ् गत्यां प्लेव पेवृ ङ सेवे पिवि सेचने।**

३९। प्लव ङ गत्याम्। (प्लव—भ्वा० आ०) अन्तःस्थाद्वतीययुक्तः। ङ—प्लवते।

४०। प्लेवृ ङ सेवे। | (प्लेव—भ्वा० आ०) (पेव—भ्वा० आ०)
४१। पेवृ ङ सेवे। | आद्योऽन्तःस्थाद्वतीययुक्तः। ऋ—अपिप्लेवत्, अपिपेवत्। ङ—प्लेवते, पेवते।

४२। पिवि सेचने। (पिन्व—भ्वा० प०) तृतीयस्वरी। इ—पिन्व्यते।

**पीव स्थौल्ये पर्व पुर्व पूर्त्तौ पूर्वक् निकेतने।**

४३। पीव स्थौल्ये। (पीव—भ्वा० प०) चतुर्थस्वरी। पीवति लोकः, स्थूल स्यादित्यर्थ।

४४। पर्व पूर्त्तौ। | (पर्व—भ्वा० प०) (पुर्व—भ्वा० प०) शेषः
४५। पुर्व पूर्त्तौ। | पञ्चमस्वरी। पूः पुरौ पुर। पर्वति, पुर्वति पयसा कुम्भं चेटी।

४६। पूर्वक् निकेतने। (पूर्व—चु० प०) षष्ठस्वरी। निकेतनमिह निमन्त्रणं निवासो वा। क—पूर्व्वयति द्विजान् भोजनाय गृही, पूर्व्वयति तीर्थं साधु।

**भर्व हिंसे मीव पीवे मर्व पूर्त्तौ गतौ मिवि।**

**सेके मुर्व्वी मव नद्धे मेव म्लेवृङ सेवने।**

४७। भर्व हिंसे। (भर्व—भ्वा० प०) रेफोपध.। भर्वति।

४८। मीव पीवे। (मीव—भ्वा० प०) चतुर्थस्वरी। मीवति। पीवः स्थूलीभाव'।

४९। मर्व पूर्त्तौ गतौ। (मर्व—भ्वा० प०) मर्वति पयसा कुम्भं चेटी।

५०। मिवि सेके। (मिन्व—भ्वा० प०) इ—मिन्व्यते। मिन्वति।

५१। मुर्व्वी नद्धे। | (मुर्व—भ्वा० प०) (मव—भ्वा० प०) आद्यः
५२। मव नद्धे। | पञ्चमस्वरी। मूः मुरौ मुरः। ई—मूर्ण.। नद्धो बन्धनम्। मवति चौरं लोकः।

५३। मेवृ ङ सेवने। ⎫ (मेव—भ्वा॰ आ॰) (म्लेव—भ्वा॰ आ॰)
५४। म्लेवृ ङ सेवने। ⎭ शेषोऽन्तःस्थान्ततीययुक्तः। ऋ—अमिमेवत्, अमिम्लेवत्। ङ—मेवते, म्लेवते।

रीवृञ् चीवे रेवृङ तु प्लुतौ रव् रिवि च व्रजे।

५५। रीवृ ञ चीवे। (रीव—भ्वा॰ उ॰) ऋ—अरिरीवत्। ञ—रीवति रीवते। चीवे—ग्रहणसंवरणयोः।

५६। रेवृ ङ तु प्लुतौ। (रेव—भ्वा॰ आ॰) प्लुति प्लवेन गमनम्। ऋ—अरिरेवत्। ङ—रेवते कपि', उत्प्लुत्य गच्छतीत्यर्थ.।

५७। रवि व्रजे। ⎫ (रख—भ्वा॰ प॰) (रिख—भ्वा॰ प॰) द्वौ
५८। रिवि च व्रजे। ⎭ रेफादी। इ—रखयते, रिखयते। चकारात् रेवृ ङ च (व्रजार्थक.)। व्रजो गतिः।

शव् विकारे च शर्व् हिंसे षिव्यु तन्तुततौ ष्ठिवु।
ष्ठिव्य ष्ठीव निरासेऽथ स्यात् षेवृङ ञ सेवने।

५९। शव विकारे च। (शव—भ्वा॰ प॰) शवति चित्तं कामः। चकाराद्व्रजे च।

६०। शर्व हिंसे। (शर्व—भ्वा॰ प॰) तालव्यादिः। शर्व्वति।

६१। षिव्यु तन्तुततौ। (षिव—दिवा॰ प॰) मूर्द्धन्यादि। तन्तुततिस्तन्तुभिर्ग्रन्थनम्। य—सीव्यति वस्त्रं सौचिकः। उ—सेवित्वा, स्यूत्वा।

६२। ष्ठिवु निरासे। ⎫ (ष्ठिव—भ्वा॰ प॰) (ष्ठिव—दिवा॰ प॰)
६२। ष्ठिव्य निरासे। ⎬ (ष्ठीव—भ्वा॰ प॰) द्वावाद्यौ ह्रस्विनौ, शेषो
६२। ष्ठीव निरासे। ⎭ दीर्घी। उ—ष्ठेवित्वा, ष्ठ्यूत्वा। ष्ठीवति (ष्ठिवुक्लमाचमोऽपि घे इति दीर्घ.)। य—ष्ठीव्यति। आद्यस्य क्त्वावेट्त्वादीमुदोऽस्त्वीत्यनेन इमो निषेधे निष्ठायां ष्ठ्यूतः, मध्यमस्य तु ष्ठिवित इति भेदः। ष्ठिवुक्लमाचमोऽपीत्यनेन यस्य ह्रस्विनो दीर्घः क्रियते, ष्ठीविष्यति ष्ठीवितव्यमित्यादिदर्शनात् स एवायं दीर्घी पठितो न तु तद्भिन्नो धातुः। तेन ह्रस्विनो ग्रहणेनैवास्मिन् गृह्यते भ्वाद्यादिषा इत्यनेन मूर्द्धन्यषस्य दन्त्यसो न स्यात्, एवं ष्ठिवजाद्योरित्यादिना खेष्ठकारस्य तकारे तिष्ठीव टिष्ठीव इत्याद्यपि स्यात्।

यत्तु अस्मिन् सत्यपि अनटि ष्ठीवनमिति निपातनं, तदस्य सर्व्वसम्मतत्वाभावात्। निरास इह थुत्कार इति भट्टमल्ल, मुखेन श्लेष्मादेर्वमनमिति केचित्। ष्ठीवत्ययं लोकः। ष्ठीवामि शुष्केत्तुलतास्थिकल्पमिति।

६३। अथ स्यात् षेवृङ ञ सेवने। (षिव—भ्वा० उ०) ऋट—असिषेवत्। ञ—सेवति सेवते। ङ—सेवते। (अस्य आनुबन्धिकत्वं परस्मैपदित्वे मतभेद-ज्ञापनार्थम्)। सेवनमाराधनमुपभोग आश्रयणञ्च। विष्णुं सेवते, सुखं सेवते, तीर्थं सेवते साधुः। अन्ये त्वस्मात् परस्मैपदममन्यमाना "नीचं समृद्धमपि सेवति नीच एवेति" "स्वाधीने विभवेऽप्यहो नरपतिं सेवन्ति किं मानिनः" इत्यादौ गणकृतानित्यत्वमाहुः। वक्ष्यमाणे दन्त्यादावप्येवं व्याख्येयम्।

षान्त्व सान्त्वक् सामयोगे ष्ठिव्यु शोषे गतौ ञ ङ।

सेवृ सेवे ह्लिवि प्रीतौ वान्ता इत्यष्टषष्टिकाः।

६४। षान्त्वक सामयोगे। } (षान्त्व—चु० प०) (सान्त्व—चु० प०)

६५। सान्त्वक सामयोगे। } द्वौ क्रमान्मूर्द्धन्यदन्त्यादौ। सिषान्त्वयिषति, सिसान्त्वयिषति। क—सान्त्वयति शोकार्त्तं दयालुः।

६६। ष्ठिव्यु शोषे गतौ। (ष्ठिव—दिवा० प०) रेफयुक्तसकारादि-स्ततोयस्वरौ। य—ष्ठीव्यति। उ—ष्ठेवित्वा ष्ठूत्वा। सिष्ठेव।

६७। ञ ङ सेवृ सेवे। (सेव—भ्वा० उ०) ञ—सेवति सेवते। ऋट—असिसेवत्।

६८। ह्लिवि प्रीतौ। (ह्लिवि—भ्वा० प०) इ—ह्लिन्व्यते। प्रीतिरिह प्रीतीकरणम्। ह्लिन्वति लोकं पितरम्।

वान्ता इत्यष्टषष्टिका.।

---

## शान्तवर्गः।

अशूङ् व्याप्तिसंहत्योरशग् भोजन ईश् ल ङ।

ऐश्वर्य्ये कश शब्दे यु काश काशृङ् द्युतौ कुशि।

किच कुश्येर् श्लिषि क्रुश्ञो रोदे ह्वतौ क्रुशियंतु।

काश्ये क्लेशङ् वधेङ् क्लिश्युञ् चोपतापे क्लिशू ग तु।
विबाधे याश् लुयू नाशे पिश शीले दृशिक् त्विषि।

१। अशू ङ न व्याप्तिसंहत्योः। (अश—स्वा॰ आ॰) ऊ—अशिष्यते अक्ष्यते। ङ, न—अश्नुते। संहतिः समूहः। (स प्राहृषेश्वैरिव चानशेऽब्दै-रितिभट्टिः। २। ३०)।

१। अशग भोजने। (अश—क्र्या॰ प॰) ग—अश्नात्यन्नं बुभुक्षितः। (अशिता भट्टा, वेम् सहलुभेति वेम्)।

२। ईश लङ ऐश्वर्य्ये। (ईश—अदा॰ आ॰) दीर्घादिः। ऐश्वर्य्यमीश्वरी-भावोऽधीनीकरणञ्च। ल, ङ—ईष्टे धनी। विषयाणाञ्च नेशिषे इति भट्टिः। १८ १५। अत्र कर्म्मणि षष्ठी।

३। कश शब्दे। (कश—भ्वा॰ प॰) कशति।

४। युकाश्ट ङ द्युतौ। | (काश—दिवा॰ आ॰) (काश—भ्वा॰
४। काश्ट ङ द्युतौ। | आ॰) य, ङ—काश्यते। ङ—काशित्वा काष्ट्वा। ऋ—अचकाशत्। ङ—काशते चन्द्रः। शेषोदन्त्यान्त इत्येके।

५। कुशि कि च। (कुन्श—चु॰ भ्वा॰ प॰) पञ्चमस्वरी। इ—कुंश्यते। कि—कुंशयति कुंशति। चकारात् द्युतौ।

५। कुश्येर् श्लिषि। (कुश—दिवा॰ प॰) य—कुश्यति बाला कान्तम्। इर्—अकुशत् अकोशीत्। अस्मान्नित्यं ङ इति दुर्गः।

६। क्रुश औ रोदे ह्वतौ। (क्रुश—भ्वा॰ प॰) अ—क्रोशः क्रुशः। औ—अक्रुक्षत्। रोदोऽश्रुविमोचनम्, ह्वतिराह्वानम्। (विचुक्रुशुः केचन सास्रमुच्चै-रिति भट्टिः। ३। १०)।

७। कृशिर्य तु कार्श्ये। (कृश—दिवा॰ प॰) कार्श्यं कृशीकरणम्। इर्—अकृशत् अकर्शीत्। अस्मान्नित्यं ङ इति दुर्गः। य—कृश्यति चन्द्रः कृष्णपक्षः।

८। क्लेश ङ वधे। (क्लेश—भ्वा॰ आ॰) एकादशस्वरी। एतदाद्या-स्त्रयोऽन्त्यतालव्यतृतीययुक्ताः। ङ—क्लेशते, चिक्लेशे। धातुप्रदीपे तु क्लेष व्यक्तायां वाचीति मूर्द्धन्यान्तो दृश्यते। क्लेषते न तथा वाक्यमिति हलायुधोऽपि। ८३।

९। ङ क्लिश्यु ञ चोपतापे। (क्लिश—दिवा॰ उ॰) ङ, य—क्लिश्यते। उ—क्लिशित्वा क्लिष्ट्वा। ञ—क्लिश्यति क्लिश्यते। उपताप इह उपतप्तीभाव-

स्तत्करणश्च। क्लिश्यते न च निष्फलमिति हलायुधः। ८१। क्लिश्यते क्षपणः स्वर्गमपीति चतुर्भुजः। अन्ये त्वस्मात् परस्मैपदमनन्यमानाः क्लिश्यन्नपि हि मेघावीति, प्रत्यासन्नतुषारदीधितिकरक्लिश्यत्तमोवल्लरीत्यादि च क्लिशं करोतीति कण्ड्वादित्वात् यके शत्रन्तमाहुः। नृपात्मजौ चिक्लिशतु' ससीताविति भट्टिप्रयोगश्च क्रैयादिकात् समादधते, तन्नेयं क्रैयादिकस्य बाधनार्थत्वात् ( बाधनं पीडनं तदर्थत्वेन सकर्म्मकत्वादित्यर्थः ) चकारात् क्लेशङ च ( उपतापार्थक' )।

९। क्लिशू गतु विबाधे। ( क्लिश—क्र्या० प० ) विबाधोविहृति' ( विघ्नोत्पादनपीडनादिकमित्यर्थः ) ऊ—अक्लेशीत् अक्लिक्षत्। ग—इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयमिति कुमारसम्भवम्। २। ४०।

१०। णश्लृयू नाशे। ( नश—दिवा० प० ) नाशो दर्शनाभाव इति प्राञ्चः। लुक्कायनमिति सर्व्वस्वम्। लृ—अनेशत् अनशत्। य—नश्यति शत्रुस्तिरोभवतीत्यर्थ'। ऊ—नशिष्यति नङ्क्ष्यति।

११। णिश शौले। ( निश—भ्वा० प० ) शौले समाधौ। नेशति योगी। निनिशतुः।

१२। दशिक् त्विषि। (दन्श—चु० प०) इ, क—दंशयति। त्विषि दीप्तौ।

## दशिक् ङ दर्शे दन्शौ च दशे दाशन्‌ हिंसने।

१२। दशिक ङ दर्शे। ( दन्श—चु० आ० ) इ, क, ङ—दंशयते। दर्शो दर्शनम्।

१३। दन्शौ च दंशे। ( दन्श—भ्वा० प० ) औ—अदाङ्क्षीत्। दशति बिम्बफल शुकशावकः। दंशनमित्यनुस्वारयुक्तम्। अन्येतु अनुस्वारहीनं पठित्वा तन्निर्देशादनटि नकारलोप इत्याहुः। अतएव दशनो दन्तः। चकाराद्दशिक ङ च ( दंशनार्थकः )। नाहि दंशयते कश्चिद्दिव्यया गाडुराख्ययेति हलायुधः। २०५। भट्टमल्लमते दंशनमिह सन्नाहः, तेन अदंशयन्नरहितशौर्य्यदर्शनास्तनूरयन्नय इति वृष्णिभूभृत इति भावः। १७। २१। तनूः सकवचाश्चक्रुरित्यर्थः। अत्र परस्मैपदं चिन्त्यमिति वल्लभः। वस्तुतस्तु दंशंकरोतीति णौ साध्यम्।

१४। दाशनृ हिंसने। ( दाश—स्वा० प० ) एतदाद्यास्त्रयो द्वितीयस्वरिणः। न—दाश्नोति। ऋ—वैदिकः।

## दाशृक् ङ दानेदाशृञ् च दिशौञ् शौचेऽप्य दृहं शौ।

**प्रेक्षे धूशक् कान्तिकृतौ पिश् शपावयवे पशञ्।**

**बाधे ग्रन्थे पशक् बन्धे भृश भ्रनृशिर्युधःपते।**

१४। दाश्व कङ दाने। (दाश—चु० आ०) ङ—अददाशत्। क, ङ—दाशयते।

१४। दाश्व अच। (दाश—भ्वा० आ०) ङ—अददाशत्। अ—दाशति दाशने। चकाराद्दाने।

१५। दिशौ अ श मोचे। (दिश—तुदा० उ०) औ—अदिक्षत्। अ, श—दिशति दिशते। मोच इति उचिर्य्य समवायने इत्यस्य अलि रूपम्। धातूनामनेकार्थत्वादोच इह दानमाज्ञापनं वा। दिदेश कौत्साय समस्तमेवेति रघु। ५। ३०। कथनेऽप्ययं, धर्मं दिशति देशिकः।

१६। अथ दृष्टृशौ प्रेक्षे। (दृश—भ्वा० प०) इर्—अदर्शत् अद्राक्षीत्। औ—द्रष्टा। प्रेक्षश्चाक्षुषज्ञानम्। पश्यति चन्द्रं लोकः। ततः स ददृशे च ताविति चण्डीप्रयोगे व्यतीहारे आत्मनेपदम्। द्रक्ष्येऽहं परमेश्वरीति गणकृतानित्यत्वादात्मनेपदम्।

१७। धूश क कान्तिकृतौ। (धूश—चु० प०) षष्ठस्वरी। कान्तिकृतिः शोभायुक्तकरणम्। चन्दनो धूशयत्यङ्गम्।

१८। पिश शपावयवे। (पिश—तुदा० प०) श, प—पिंशति पटः, अवयवी स्यादित्यर्थः।

१९। पश ञ बाधे ग्रन्थे। (पश—भ्वा० उ०) ञ—पशति पशते। बाधो विहतिः, (व्याघात इत्यर्थः) ग्रन्थो ग्रन्थनम्। ग्रन्थस्थाने स्पर्शं पठन्ति केचित्।

१९। पश क बन्धे। (पश—चु० प०) क—पाशयति।

२०। भृशिर्यु अधःपते। } (भृश—दिवा० प०) (भ्रनृश—दिवा० प०)
२१। भ्रनृशिर्यु अधःपते। } शेषायाः क्रा रेफयुक्तायाः। इर्—अभृशत् अभर्शीत्, अभ्रशत् अभ्रंशीत्। आभ्यां नित्यं ङ इति दुर्गः। य—भृश्यति, घूर्ण्यमाणा मरीचेव भ्रश्यत्परिपताकिनीति हलायुधः। १७६। उ—भर्शित्वा भृष्ट्वा, भ्रंशित्वा भ्रष्ट्वा।

**स्वभ्रनृशुङ् भश्यु च भाश्वभाम्रणट्रुभासि तौ रतौ।**

२१। ऌ भ्रंशु ङ च। } (भ्रंश—भ्वा० आ०) (भ्रंश—दिवा०
२२। भ्रंश च। } प०) ऌ—अभ्रशत्। ङ—भ्रंशित्वा भ्रष्ट्वा।
ङ—भ्रंशते। य—भ्रश्यति। ङ—भ्रशित्वा भृष्ट्वा। चकारादधःपते।

२३। भ्राश्य ऋण टुङ भासि। } (भ्राश—दिवा० आ०) (भ्राश—
२४। भ्राश ऋण टुङ भासि। } भ्वा० आ०) य, ङ—भ्राश्यते। ऋट—
अबभ्राशत्। ऋमते अनयोर्अङि ऋत्वविकल्पनेऽपि सप्तमस्वरानुबन्धोऽन्येषा-
मनुरोधात्। ण—भ्रेशे बभ्राशे। टु—भ्राशथुः। ङ—भ्राशते। भासि दीप्तौ।

तौ रनौ। तौ एतौ। (भ्राशधातू) रनौ च स्याताम्, रेफस्थाने दन्त्य-
नकारो ययोस्तौ रनौ। यथा—

२४। भ्लाश्य ऋण टुङ भासि। } (भ्लाश—दिवा० आ०) (भ्लाश—
२४। भ्लाश ऋण टुङ भासि। } भ्वा० आ०) य, ङ—भ्लाश्यते। ऋट—
अबभ्लाशत्। ण—भ्लेशे बभ्लाशे। टु—भ्लाशथुः। ङ—भ्लाशते।

मश मिश्तुध्वनौ कोपे मृशशौ मृशि रुश्रिशौश्।

हिंसे लशक् शिल्पयोगे शौलिश गत्यां ङलिश्य शौ।

तीक्ष्णे त्वशिर्य त्वत्यां शौ विश् प्रवेशि ङ वाश्य ऋट।

शब्दे वश्लु स्पृहि शश प्लवने स्पृश शौ स्पृशि।

२५। मश ध्वनौ कोपे। } मश—भ्वा० प०) (मिश—भ्वा० प०)
२६। मिश तु ध्वनौ कोपे। } मशकः। मेशति।

२७। मृश शौ स्पृशि। (मृश—तुदा० प०) श—मृशति। शौ—अम्रा-
क्षीत् अमार्क्षीत् अमृक्षत्। मृशतीति तालव्यान्तस्यैव रूपम्, तेनानिर्दिष्टार्थ-
त्वात् स्पर्शनं प्रणिधानञ्च तस्यार्थः। स्पर्शने—परामृशन् हर्षजडेन पाणिना
तदीयमङ्गं कुलिशव्रणाङ्कितमिति रघुः। ३। ६८। प्रणिधाने—रामप्रवासे
व्यमृशन्न दोषं जनापवादं सनरेन्द्रमृत्युं, कैकयीति शेष इति भट्टिः। ३। ७।
विमर्शः परामर्शः। मृषतीति मूर्द्धन्यान्तपाठो हेयः, तर्हि क्षमैवार्थः स्यात्।

२८। रुशी श हिंसे। } (रुश—तुदा॰ प॰) (रिश—तुदा॰ प॰)

२९। रिशी श हिंसे। } ओ—अरुक्षत्, अरिक्षत्। श—रुशति, रिशति। रोक्ष्यति, रेक्ष्यति (अनेनोदाहरणेनायं न कुटादिरिति सूचितम्)।

३०। लश क शिल्पयोगे। (लश—चु॰ प॰) क—लाशयति कुशलो नृत्ये, शिल्पं युनक्तीत्यर्थः।

३१। शी लिश गत्याम्। (लिश—तुदा॰ प॰) श—लिशति। ओ—अलिक्षत्। लेष्टा।

३१। ङ लिश्य ओ तीच्छ्ये। (लिश—दिवा॰ आ॰) तौच्छ्यमल्पी-भाव.। ङ, य—लिश्यते धर्म्म' कलौ। ओ—लेष्टा।

३२। तृशिर्य तृत्याम्। (तृश—दिवा॰ प॰) इर्—अतृशत् अवर्षीत्। अस्मान्नित्यं ङ इति दुर्गः। य—तृश्यति वरं कन्या।

३३। शी विश प्रवेशे। (विश—तुदा॰ प॰) श—विशति। ओ—अवि-क्षत्। विवेश कश्चिज्जटिलस्तपोवनमिति कुमारसम्भवम्। ५। ३०। वेपराजि-परिव्यवक्रीत्यादिनात्मनेपदविधानेऽपि 'अङ्के निविशते भयादि'ति रघौ केवलात् शन्तप्रत्यय विधाय पश्चादुपसर्गेण योग इति दुर्घटवृत्तिः। निशब्द इहोपसर्गप्रति-रूपको वा। यस्माद्विश्वमिदं सर्व्वं तस्य शक्त्या महात्मन। तस्मादेवोच्यते विष्णुर्विशेर्धातोः प्रवेशनादिति पुराणे विष्णुशब्दव्युत्पादनात् मूर्द्धन्यान्तोऽय-मिति केचित्, तच्चिन्त्य तालव्यान्तस्य सर्वसम्मतत्वात्।

३४। ङ वाश्य ऋ शब्दे। (वाश—दिवा॰ आ॰) शब्द इह तिरश्चामेव। तिरश्चां वाशितं रुतमित्यमरात्। ङ. य—वाश्यते पक्षी। ऋ—अववाशत्। उद्वाश्यमान' पितरं सराममिति भट्टौ (३। ३२) अनेकार्थत्वादाह्वानार्थ.। वासित सुरभीकृते। ज्ञानमात्रे खगारावे वासित वस्त्रवेष्टिते इति विश्वप्रका-शात् दन्त्यान्तोऽयमपीति।

३५। वश लु स्पृहि। (वश—अदा॰ प॰) लु—वष्टि धनं लोकः।

३६। शश प्लवने। (शश—भ्वा॰ प॰)[1] तालव्यादि'। शशोशशिशुशीः शशञ्चिति किरातयमकात्। १५। ५। शशति भेक, प्लवेन गच्छतीत्यर्थः। तृफलभजेत्यत्र वर्जनमस्यैव। दन्त्यान्तोऽप्ययमित्येके।

३७। स्पृश शी स्पृशि। (स्पृश—तुदा॰ प॰) श—स्पृशति। ओ—अस्प्राक्षीत् अस्पार्क्षीत् अस्पृक्षत्। हस्तेन सस्पर्श तदङ्गमिन्द्र इति कुमारसम्भवम्। ३। २२।

स्पर्शं काङ् ग्रहणे श्लेषे स्पशञ ग्रन्थबाधयोः ।
शकारान्ता नवत्रिंशदिह धातव ईरिताः ।

३८ । स्पर्श क ङ ग्रहणे श्लेषे । (स्पर्श—चु॰ आ॰) रेफोपधः । क, ङ—स्पर्शयते, पिस्पर्शयिषते ।

३९ । स्पश ञ ग्रन्थबाधयोः । ( स्पश—भ्वा॰ उ॰ ) ञ—स्पशति स्पशते । पस्पाश । केचिद् ग्रन्थस्थाने स्पर्शं पठन्ति ।

शकारान्ता नवत्रिंशदिह धातव ईरिताः ।
( नवाधिका त्रिंशन्नवत्रिंशदूनचत्वारिंशदित्यर्थः ) ।

---

## षान्तवर्गः ।

अक्ष्नक्षू व्याप्तिसंहत्योरषञ् दीप्तौ ग्रहे गतौ ।

१ । अक्षनू व्याप्तिसंहत्योः । } ( अक्ष—स्वा॰ प॰ ) ( अक्ष—भ्वा॰ प॰ )
१ । अक्षू व्याप्तिसंहत्योः । } न—अक्ष्णोति । ऊ—आक्षिष्टां आष्टां । अक्षति धनं लोकः, व्याप्नोति राशीकरोति वेत्यर्थः ।

२ । अष ञ दीप्तौ ग्रहे गतौ । ( अष—भ्वा॰ उ॰ ) ञ—अषति अषते ।

इष्गाभीक्ष्ण्य इषुश् वाञ्छे इष्य सर्पण ईषङ ।
दानेच्छहिंसे चेषुञ्छे ईक्ष ङ् दर्शन उक्ष् व्रषि ।

३ । इष गाभीक्ष्ण्ये । ( इष—क्र्या॰ प॰ ) आभीक्ष्ण्यं पौनःपुन्येन करणम् । ग—इष्णाति पण्डितः पुण्यं, पुन पुनः करोतीत्यर्थः ।

३ । इषु श वाञ्छे । ( इष—तुदा॰ प॰ ) उ—एषित्वा, इष्ट्वा । वेम् सहेत्यादिनैवेष्टसिद्धावस्योदनुबन्धस्तत्सूत्रे इषगाभीक्ष्ण्ये इष्य सर्पणे इत्येतयोरप्राप्तये विशेषणार्थः । न च पित्रादिग्रहणवत् तत्र इच्छेति ग्रहणेनैवेष्टसिद्धिरिति वाच्यं लाघवाभावे प्राचीनमतस्यैव न्याय्यत्वात् । श—इच्छन्ती इच्छती । अस्यैव इच्छादेशः । इच्छति धनं लोकः ।

३ । इष्य सर्पणे । ( इष—दिवा॰ प॰ ) य—इष्यति । सर्पणं गतिः ।

४। ईषङ दानेऽहिंसे च। (ईष—भ्वा॰ आ॰) दीर्घादिः। ङ—ईषते। ईच्चो दर्शनम्। चकारात् सर्पणे च।

४। ईषुञ्छे। (ईष—भ्वा॰ प॰) उञ्छ उद्धृतशस्यशेषापहरणम्। ईषति धान्यं दीनः।

५। ईक्षङ दर्शने। (ईक्ष—भ्वा॰ आ॰) दर्शनं चाक्षुषज्ञानं प्रणिधानञ्च। ङ—ईक्षते चन्द्रं लोकः। न कामवृत्तिर्वचनीयमीक्षते इति कुमारसम्भवम्। ५। ८२। निरीक्षिष्यामि यमुनोनिति गणकृतानित्यत्वात्, पचादित्वादनि निरीक्ष इवाचरतीति क्वौ साध्यम्।

६। उक्ष वृषि। (उक्ष—भ्वा॰ प॰) वृट् सेकः। उक्षति वृक्षं मेघः।

## उषूष् बधे दह्यूष् रोगे ऋक्षु न् बध ऋषीश् गतौ।

७। उषु बधे दहि। (उष—भ्वा॰ क्लावेट्॰ प॰)
७। उष बधे दहि। (उष—भ्वा॰ प॰) द्वौ क्रत्वादौ। उ—ओषित्वा उष्ट्वा। ओषति। पूर्व्वस्य क्लावेट्त्वान्नेम् डोश्वीत्यादिना इमो निषेधे निष्ठायां उष्टः, शेषस्य उषित इति भेदः। दहि भस्मीकरणे।

८। ऊष रोगे। (ऊष—भ्वा॰ प॰) दीर्घादिः। ऊषति सन्तं खलः (पीडयतीत्यर्थ.)।

९। ऋक्षु न बधे। (ऋक्ष—स्वा॰ प॰) र—वैदिकः। न—ऋक्ष्णोति।

१०। ऋषी श गतौ। (ऋष—तुदा॰ प॰) क्रत्वादिः। ई—ऋष्टः। श—ऋषति। अर्षिता।

## एषृङ् च कष् बधे कुष् ग निष्कर्षे काचि काङ्क्षणे।

११। एषृ ङ् च। (एष—भ्वा॰ आ॰) एकादशस्वरो। ऋ—मा भवाम् एषिषत्। ङ—एषते। चकाराद्गतौ।

१२। कष बधे। (कष—भ्वा॰ प॰) कषति। अयमुभयपदीति चतुर्भुजजुमरौ। रामरमानाथौ तु इमं परस्मैपदिनं मत्वा उभयपदिनं तालव्यान्तमन्यं मन्येते।

१३। कुषग निष्कर्षे। (कुष—क्रया॰ प॰) ग—कुष्णाति। चुकोष। निष्कर्षं इयत्तापरिच्छेदः। तूलैरवकुष्णाति इति वोपदेवः। निष्कर्षोऽन्तः-

प्रकाशनमिति गोविन्दभट्टः। ततोऽकुण्ठाद्द्मग्रीवः क्रुद्धः प्राणान् वनौकसामिति भट्टौ ( १७। ८० ) अनेकार्थत्वान्निष्कासनार्थः।

१४। काक्षि काङ्क्षणे। ( काङ्क्ष—भ्वा॰ प॰ ) इ—काङ्क्षति धनं लोकः। नमध्यपाठेनैवेष्टसिद्धाविदनुबन्धो वेदपूच्चारणभेदार्थः।

कृषौत्वाकृषि कृष् शौञ् च विलेखे खष् बधेऽथगेष्।
ग्लेषृङन्वेषेऽथ घृषु सङ्घर्षे घुष्कि क्ष्नुर्नुतौ।
विशब्दे आङः सततक्रन्दे क्ष्नुघुंष् बधे घुषिङ्।
धूषि घषिङ् क्षरे चूष् पाने चक्षल्ङ वदे चषञ्।
भक्षेऽथ चष् वधे छृष् जष् जूष् ञ चश् ङी ञिजुष् मुदि।
सेवे कि जुष् तर्कृष्टशोर्जिषु सेकेऽथ जेषृङ।
गत्यां जक्षिम् ङ दाने च जक्षच्लुघ् भक्षहासयोः।

१५। कृषौ त्वाकृषि। ( कृष—भ्वा॰ प॰ ) औ—अक्राक्षीत् अकार्क्षीत् अकृक्षत्। आकृषि आकर्षणे। कर्षन्ति तुरगा रथम्।

१५। कृष शौ ञ च विलेखे। ( कृष—तुदा॰ उ॰ ) श, ञ—कृषति कृषते भूमिं कृषकः। औ—अक्राक्षीत् अकार्क्षीत् अकृक्षत्। चकारात् कृषौ च। ( विलेखः कर्षणम् )।

१६। खष बधे। ( खष—भ्वा॰ प॰ ) खषति।

१७। अथ गेषृ ङ अन्वेषे। ⎫ ( गेष—भ्वा॰ आ॰ ) ( ग्लेष—भ्वा॰ आ॰ )
१८। ग्लेषृ ङ अन्वेषे। ⎭ आद्यः कैश्चिन्न मन्यते। शेषोऽन्तःस्था-

तृतीययुक्तः। ऋ—अजिगेषत् अजिग्लेषत्। ङ—गेषते, ग्लेषते। जिगेषे, जिग्लेषे। अन्वेषोऽनुसन्धानम्। ग्लेषते यः सतां मार्गमिति हलायुधः।२४७।

१९। अथ घृषु सङ्घर्षे। ( घृष—भ्वा॰ प॰ ) उ—घर्षित्वा घृष्ट्वा। घर्षति चन्दनं लोकः।

२०। घुष्कि क्ष्नुर्नुतौ विशब्दे। ( घुष—चु॰ भ्वा॰ प॰ ) एतदाद्यास्त्रयः पञ्चमस्वरिणः। विशब्द इह आविष्करणं, कथनं, नानाशब्दकरणं वा। कि—

घोषति गूढ़मर्थमभियुक्तः। मावश्यं घोषति द्वारि यस्य कश्चिदुपद्रवमिति हलायुधः। १४१। इर्—अघुषत् अघोषीत्।

आङः सततक्रन्दे। घुष्कि इर् इत्यनुवर्त्तते। (आङित्युपसर्गात् घुष्कि इर् इत्यस्य सततक्रन्दनमर्थं इति।) कि—आघोषयति शोकार्त्तः, सततं क्रन्दतीत्यर्थः।

२०। इर्घुष बधे। (घुष—भ्वा० प०) इर्—अघुषत् अघोषीत्।

२०। घुषिङ् धूषे। (घुन्ष—भ्वा० आ०) धूषः कान्तिकृतिः। इ—घुंष्यते। ङ—घुंषते चन्दनो गात्रम्।

२१। घषि ङ स्वरे। (घन्ष—भ्वा० आ०) आद्यस्वरी। इ—घंष्यते। ङ—घंषते। अयं केश्चिन्न मन्यते।

२२। चूष पाने। (चूष—भ्वा० प०) दीर्घी। चूषत्याम्नं लोकः।

२३। चक्ष लङ वदे। (चक्ष—अदा० आ०) वदः कथनम्। ल, ङ—चष्टे धर्म्मं धीरः। तृतीयस्वरानुबन्धोऽयमिति प्राञ्चः। इकार उच्चारणार्थं इति केचित्। छन्दसि नुणागमार्थं इति केचित्। वेदेषूच्चारणभेदार्थं इति केचित्। तत्र वङ्गवस्तु तृतीयस्वरो लिपिकरप्रमादकृतः किन्तु चतुर्थस्वरानुबन्धोऽयं निष्ठाया इम्निषेधार्थः, तेन वर्जनार्थे ख्याञ्क्साआदेशयोरप्राप्तौ आचष्टं वर्ज्जनमित्याहुः।

२४। चष ञ भक्षे। (चष—भ्वा० उ०) ञ—चषति चषते।

२४। अथ चष बधे। (चष—भ्वा० प०) चषति।

२५। क्षष ञ च।
२६। जष ञ च।
२७। जूष ञ च।
(क्षष—भ्वा० उ०) (जष—भ्वा० उ०) (जूष—भ्वा० उ०) शेषः षष्ठस्वरी। ञ—क्षषति क्षषते, जषति जषते, जूषति जूषते। आद्यः केश्चिन्न मन्यते। अन्यौ परस्मैपदिनावित्यन्ये। चकाराद्बधे।

२८। ञ ङीञि जुष मुदि सेवे। (जुष—तुदा० आ०) पञ्चमस्वरी। ञ, ङ— जुषते। ई, ञि—जुष्टोऽस्ति। मुदि हर्षे।

२८। कि जुष तर्कक्लमयोः। (जुष—चु० भ्वा० प०) पञ्चमस्वरी। कि—जोषयति जोषत्यन्यगुणं गुणी, तर्कयतीत्यर्थः।

२९। जिषु सेके। (जिष—भ्वा० प०) उ—जेषित्वा, जिष्टा।

३०। अथ जेषृङ गत्याम्। (जेष—भ्वा० आ०) एकादशस्वरी। ऋ—अजिजेषत्। ङ—जेषते, जिजेषे।

३१। जक्षि मङ दाने च। (जक्ष—भ्वा० आ०) इ—जक्षते। नमध्यपाठे-नैवेष्टसिद्धाविदनुबन्धो वेदेषूच्चारणभेदार्थः। म—अजक्षि अजाक्षि, जक्षं जाक्षं जाड्क्षं जाक्षम्। अनुबन्धबलादनुपधाया अपि दीर्घः। स्वमते दीर्घविधिरुपधां नोपेक्षते। ङ—जक्षते। चकाराद्गत्याञ्च।

३१। जक्ष क्षलुव भक्षहासयोः। (जक्ष—अदा० प०) केचित्तु विष्णु-पुराणे यक्षराक्षसोत्पत्तिप्रसङ्गे "यक्ष्यतामिति यैरुक्तं ते वै यक्षास्तु यक्षणात्" इति भक्षणार्थस्यैव यक्षव्युत्पादनादेतमन्तःस्थादिं मन्यन्ते। तत्र अमरटीकायां वर्ग्यजकारस्यान्तःस्थयकारश्छान्दसो द्रष्टव्य इत्युक्ता वर्ग्यादिरयं निर्णीतः। घ—जक्षति। लु, घ—जक्षिति।

## झषञ् ग्रहेऽपिधाने झष् वधे णेषृ ङ णक्ष् व्रजे।

३२। झष ञ ग्रहेऽपिधाने। (झष—भ्वा० उ०) ञ—झषति झषते वस्त्रं जनो, गृह्णाति परिदधाति वेत्यर्थः। सप्तमस्वरादिरयमिति पूर्णचन्द्र-त्रिलोचनरामाः। (तन्मतेऽयं ऋषधातुरित्यर्थः) अर्षति अर्षते।

३२। झष वधे। (झष—भ्वा० प०) आद्यस्वरी। झषति। षष्ठस्वरी चायमिति केचित्। झूषति।

३३। णेषृ ङ व्रजे।
३४। णक्ष व्रजे।
(णेष—भ्वा० आ०) (णक्ष—भ्वा० प०) ऋ—अनिनेषत्। ङ—नेषते, निनेषे। नक्षति। व्रजो गतिः।

## णिषु सेके णिक्ष चुम्बे तूष् तुष्टौ तुष् ऌ यौ ञि च।

३५। णिषु सेके। (णिष—भ्वा० प०) उ—नेषित्वा निष्टा।

३६। णिक्ष चुम्बने। (णिक्ष—भ्वा० प०) निक्षति। (प्रणिक्षति प्रनिक्षति)।

३७। तूष तुष्टौ। (तूष—भ्वा० प०) षष्ठस्वरी। तूषन्ति कुलदेवताः।

३८। तुषऌ यौ ञि च। (तुष—दिवा० प०) ऌ—अतुषत्। य—तुष्यति। औ—तोष्टा। ञि—तुष्टोऽस्ति। चकारात् तुष्टौ।

## त्विषौञ् भासेऽवाग्निवासे दाने चेयं ञि टष् टषि।

३९। त्विषौ ञ भासे। (त्विष—भ्वा० उ०) षौ—अत्विचत्। अ—त्वेषति त्वेषते। भासो दीप्तिः।

अवात्निवासे दाने च। त्विषौञ इत्यनुवर्त्तते। चकाराद्भासे च। षौ—अवात्विचत्। अ—अवत्वेषति अवत्वेषते, निवसति ददाति दीप्यते वेत्यर्थः।

४०। इर्यञि तृष तृषि। (तृष—दिवा० प०) इर्—अतृषत् अतर्षीत्। अस्मान्नित्यं ङ इति दुर्गः। य—तृष्यति। ञि—तृषितोऽस्ति। तृट् आकाङ्क्षा। इच्छाकाङ्क्षास्पृहेहातृट्वाञ्छालिप्सामनोरथ इत्यमरात्। तदुपस्थितमग्रहीदजः पितुराज्ञेति न भोगतृष्णयेति रघुः। ८। २। तृष्यति धनं लोकः, तृष पिपासायामिति प्राञ्चः। तृष्यति तोयं पान्थ इति रमानाथः।

तृचित्यां त्वच् त्वचोग्राहे त्वचू कार्श्येऽथ तावथौ।

४१। तृच् इत्याम्। (तृच—भ्वा० प०) समस्तरो। तृचति। इत्यां गतौ।

४२। त्वच त्वचोग्राहे। (त्वच—भ्वा० प०) त्वचोग्राहश्चर्म्मणो ग्रहणम्। त्वच त्वचने इति प्राञ्च। त्वचनं संवरणमिति रमानाथः। त्वचति कायं वर्म्मणा भटः।

४२। त्वचू कार्श्ये। (त्वच—भ्वा० प०) ऊ—त्वचिष्यति त्वक्ष्यति। कार्श्यं कृशीकरणम्। त्वचति काष्ठं तक्षा।

अथ तावथौ। तौ एतौ (त्वचधातू) अथौ वकाररहितौ च स्याताम्। यथा—

४३। तच त्वचोग्राहे। } (तच—भ्वा० प०) (तच—भ्वा० प० वेट्)
४३। तचू कार्श्ये। } तचति। ऊ—तचिष्यति तक्ष्यति।

तचून् तचे ङ् दीच मौण्डेज्याज्योऽर्थे दचङ स्यदे।

दृचौ दृच्मष् ङ हन्त्यर्थे दुर्दुष्यौ वैकृतेल् द्विषौ ञ्।

वैरे द्राच धाच भ्राचि काङ्क्षे घोरकृते धूषक्।

ङ शक्तिबन्धे ञि धृषान् प्रागल्भ्ये धृष् संहतौ।

हिंसे धृषा कि त्वमर्षे धूषक् धूशेर्लिंधिष् रवे।

४३। तचून तचे। (तच—भ्वा० प०) तचः कृशकरणम्। ऊ—तचिष्यति तक्ष्यति। न—तक्ष्णोति काष्ठं तक्षा।

४४। ङ दीक्ष मौण्ड्येज्याज्योऽर्थे। (दीक्ष—भ्वा॰ आ॰) मौण्ड्यं मुण्डित-मस्तकीभावः। इज्या यजनम्। ज्योऽर्थौ नियमव्रतादेशोपनीतयः (श्रोका-रान्तगणे ज्योङ नियमव्रतादेशोपनीतिष्वित्युक्तं, अस्यापि तदर्था इत्यर्थः)। ङ—दीक्षते वटुर्मुण्डितमस्तकः स्यादित्यर्थः। दीक्षते जनो यजतीत्यर्थः। दीक्षते याज्ञिको नियमी स्यादित्यर्थः। दीक्षते पण्डितो जनं, व्रतमुपदिशतीत्यर्थः। दीक्षते पुत्रं विप्र, उपनयतीत्यर्थः।

४५। दक्ष ङ स्वदे वृद्धौ। (दक्ष—भ्वा॰ आ॰) स्वद इह शीघ्रकरणम्। ङ—दक्षते धनमुद्योगी, शीघ्रमुत्पादयतीत्यर्थः।

४५। दक्षमषङ हन्त्यर्थे। (दक्ष—भ्वा॰ आ॰ घटादिः) म—अदक्षि अदाक्षि, दक्षं दक्षं दाक्षं दाक्षं। मानुबन्धबलादनुपधाया अपि दीर्घः। स्वमतेतु दीर्घविधिरुपधां नोपेक्षते। ष—दक्षा, सेमन्तात् सरोरित्यनेनैवेष्टसिद्धावस्य षानुबन्धस्त्वरपर्य्यन्तघटादिभ्यो ङ इति प्राचीनमतानुवादार्थः। ङ—दक्षते। हन्त्यर्थे गतिबधयोः।

४६। इर्दुष्यौ वैकृते। (दुष—दिवा॰ प॰) वैकृतमशुद्धीभावः। इर्—अदुषत् अदुक्षत्। अस्मान्नित्यं ङ इति दुर्गः। य●दुष्यति लोकः पापात्। औ—दोष्टा।

४७। ल द्विषौ ञ वैरे। (द्विष—अदा॰ उ॰) ल, ञ—द्वेष्टि द्विष्टे। औ—अद्विक्षत्। द्विषन्ति मन्दाश्चरितं महात्मनामिति कुमारसम्भवम्।५।७५।

४८। द्राक्षि काङ्क्षे घोररुते। ४९। ध्राक्षि काङ्क्षे घोररुते। ५०। ध्राक्षि काङ्क्षे घोररुते। (द्राङ्क्ष—भ्वा॰ प॰) (ध्राङ्क्ष—भ्वा॰ प॰) (ध्राङ्क्ष—भ्वा॰ प॰) आद्यन्तौ रेफयुक्तादी, मध्यम ओष्ठ्य-वर्गशेषयुक्तादिः। घोररुतमिति तिरश्चामेव घोरशब्दः। इ—द्राङ्क्षति, ध्राङ्क्षति, ध्राङ्क्षति पक्षी। नमध्यपाठेनैवेष्टसिद्धावेषामिदनुबन्धो वेदेषूच्चा-रणभेदार्थः।

५१। धृष कङ शक्तिबन्धे। (धृष—चु॰ आ॰) शक्तेर्बन्धः शक्तिबन्ध (अभिभव इत्यर्थः)। क, ङ—धर्षयते वह्निं पयः।

५१। ञि धृषान प्रागल्भ्ये। (धृष—स्वा॰ प॰) ञि—धृष्टोऽस्ति आ—धर्षितं धृष्टं तेन, प्रधर्षितः प्रधृष्टः सः। न—न धृष्णोति गुरोरग्रे (यः इति हलायुधः। ८७।

५१। धृषु संहतौ हिंसे। (धृष—भ्वा० प०) उ—धर्षित्वा धृष्ट्वा। संहतिः समूहः।

५१। धृषा कि त्वमर्षे। (धृष—चु० भ्वा० प०) आ—धर्षितं धृष्टं तेन, प्रधर्षितः प्रधृष्टः सः। कि—धर्षयति धर्षति। अमर्ष इह अभिभव इति भट्टमल्लः। न धर्षति निजाः प्रजाः। तमेव धर्षयत्येकं यस्तासु प्रतिकूलतीति हलायुधः। ८७।

५२। धूष क धूशे। (धूष० चु० प०) षष्ठस्वरी। धूशः कान्तिकृतिः। क—चन्दनो धूषयत्यङ्गम्।

५३। लिं धिष रवे। (धिष—ह्वा० प०) र—वैदिकः। लि—दिधेष्टि। रवः शब्दः।

धिच्च धुच्चङ सन्दीपे क्लेशे जीवे पुषग् पुष।

पुष्टौॡ पुष्यौच पुषक् धृतौ धौ पिष् ॡ चूर्णने।

५४। धिच्च ङ सन्दीपे क्लेशे जीवने। } (धिच्च—भ्वा० आ०) (धुच्च—
५५। धुच्च ङ सन्दीपे क्लेशे जीवने। } भ्वा० आ०) द्वौ क्रमात् तृतीय-

पञ्चमस्वरिणौ। ङ—धिच्चते, धुच्चते वह्निः, सन्दीप्यते इत्यर्थः। धिच्चते धुच्चते जनः, क्लिश्यति जीवति वेत्यर्थः।

५६। पुष ग पुष्टौ। } (पुष—क्र्या० प०) (पुष—भ्वा० प०) ग—
५६। पुष पुष्टौ। } पुष्णाति। पुपोष। पोषति पुत्रं तातः।

५६। ॡ पुष्यौ च। (पुष—दिवा० प०) ॡ—अपुषत्। य—पुष्यति। औ—पोष्टा। चकारात् पुष्टौ।

५६। पुषक् धृतौ। (पुष—चु० प०) क—पोषयति। (तृष्णां न पुष्णाति यशांसि पुष्यति प्रवारणैर्विभ्रमनांसि पोषति। भृत्यांश्च यः पोषयतीप्सितैर्धनैरिति सर्व्वत्र हलायुधः। २१।

५७। धौ पिष् ॡ चूर्णने। (पिष—रुधा० प०) ध—पिनष्टि लोको गोधूमम्। औ—पेष्टा। ॡ—अपिषत्।

पषक् बन्धे पषञ् वाधे ग्रन्थे पक्षक् परिग्रहे।

५८। पष क बन्धे। (पष—चु० प०) क—पाषयति। तालव्यान्त एवायमिति बहवः, दन्त्यान्त इति केचित्। मूर्द्धन्यान्तपाठस्तु केषाञ्चिदनुरोधात्।

५८। पष ञ बाधे ग्रन्थे। (पष—भ्वा० उ०) ञ—पषति पषते। बाधो विहतिः। ग्रन्थो ग्रन्थनम्। ग्रन्थस्थाने स्पर्शं पठन्ति केचित्।

५९। पष क परिग्रहे। (पष—चु० प०) क—पषयति।

पर्ष ङ् स्नेहे प्रुषग् सेकपूर्त्त्योश्च प्रुषु दहनम्।

रलौ म्लुष्यल्ट च प्युष्येर्भागे च प्युषकुत्सृजि।

६०। पर्ष ङ स्नेहे। (पर्ष—भ्वा० आ०) रेफोपधः। स्नेह स्निग्धीभावः। ङ—पर्षते पयसा पटः। स्पर्श इति चतुर्भुजः। स्पर्शते पस्पर्शे।

६१। प्रुष ग सेकपूर्त्त्योः। (प्रुष—क्र्या० प०) ग—प्रुष्णाति, पुप्रोष। सेकस्थाने मोचनमिति धातुप्रदीपभट्टमल्लौ। चकारात् स्नेहे च।

६१। प्रुषु दहि। (प्रुष—भ्वा० प०) उ—प्रोषित्वा प्रुष्ट्वा। प्रोषति। दहि भस्मीकरणे।

अमू रलौ। अमू एतौ। (प्रुषधातू) रलौ च स्याताम्। रेफस्थाने अन्तःस्थातृतीयो ययोस्तौ रलौ। यथा—

६२। प्लुष ग सेकपूर्त्त्योः। } (प्लुष—क्र्या० प०) (प्लुष—भ्वा० प०)

६२। प्लुषु दहि। } ग—प्लुष्णाति। उ—प्लोषित्वा प्लुष्ट्वा। प्लोषति।

६२। प्लुष्य ल्ट च। (प्लुष—दिवा० प०) अन्तःस्थातृतीययुक्तः। य—प्लुष्यति। ल्ट—अप्लुषत्। पुप्लोष। चकाराद्दहि।

६३। प्युषेर् भागे च। (प्युष—दिवा० प०) अन्तःस्थाद्ययुक्तः। य—प्युष्यति धनं दायादः। इर्—अप्युषत् अप्योषीत्। अस्मान्नित्यं ङ इति दुर्गः। चकाराद्दहि च।

६३। प्युष क उत्सृजि। (प्युष—चु० प०) अन्तःस्थाद्ययुक्तः। उत्सृजि उत्सर्गे। क—प्योषयति अन्नं दाता।

पृषु सेके पूष वृद्धौ प्लक्ष भ्लक्ष ञ भक्षणे।

६४। पृषु सेके। (पृष—भ्वा० प०) उ—पर्षित्वा पृष्ट्वा। पर्षति।

६५। पूष वृद्धौ। (पूष—भ्वा० प०) षष्ठस्वरी। पूषति। (प्रतिपक्षं पूषति यस्य विक्रम इति हलायुधः। २१)।

६६। म्लुच अ भक्षणे। ⎫ (म्लुच—भ्वा० उ०) (भ्लुच—भ्वा० उ०)
६७। भ्लुच अ भक्षणे। ⎭ द्वावन्तःस्थाद्वतीययुक्तौ। अ—म्लुचति म्लुचते, भ्लुचति भ्लुचते। मम्लुच, बभ्लुच। शेषस्य लस्थाने सप्तमस्वर इति दुर्गः। भ्लुचति भ्लुचते।

## भक्षक् च भिक्षङ् लाभार्थलोभोक्तिक्लिशि भाषङृ।

## वाचि भ्रेषृ ञ् चले भेषृ ञ् च भये भूष् कि भूषणे।

६८। भक्षक् च। (भक्ष—चु० प०) क—भक्षयति। चकारात् भक्षणे।

६९। भिक्ष ङ लाभार्थं लोभोक्तिः क्लिशि। (भिक्ष—भ्वा० आ०) (चत्वारोऽर्थाः) अर्थो याचनम्। लोभादुक्तिर्लोभोक्तिः। ङ—भिक्षते भूमिं नृपात् पण्डितः, लभते इत्यर्थः। भिक्षते दातारं धनं भिक्षुर्याचतीत्यर्थः। भिक्षते दातारं दीनः, लोभाद्वदतीत्यर्थः। भिक्षते जनः क्लिश्यतीत्यर्थः।

७०। भाष ङ ऋ वाचि। (भाष—भ्वा० आ०) ङ—भाषते। ऋ—अबीभाषत् अबभाषत्।

७१। भ्रेषृ ञ चले। (भ्रेष—भ्वा० उ०) रेफयुक्तः। ऋ—अबिभ्रेषत्। ञ—भ्रेषति भ्रेषते। बिभ्रेषे धर्म्मात् खलः।

७२। भेषृ ञ च भये। (भेष—भ्वा० उ०) ऋ—अबिभेषत्। ञ—भेषति भेषते, बिभेषे। चकाराद् भ्रेषृ ञ च (भयार्थकः)।

७३। भूष कि भूषणे। (भूष—चु० भ्वा० प०) कि—भूषयति भूषति हारो जनम्।

## भष् वुक्के पिशुनोक्तौ मष् मुष वधे मुष्य इर्च्छिदि।

७४। भष् वुक्के पिशुनोक्तौ। (भष—भ्वा० प०) वुक्कः कुक्कुरादिकर्त्तृकशब्दः। भषति श्वा। भषत्यन्यदोषं खलः, सूचयतीत्यर्थः। भर्त्सने इति प्राञ्चः। भषति श्वा पान्थं, "शब्देन निर्भर्त्सयते इत्यर्थः" इति रमानाथः।

७५। मष वधे। ⎫ (मष—भ्वा० प०) (मुष—भ्वा० प०) द्वौ क्रमा-
७६। मुष वधे। ⎭ दाद्यपञ्चमस्वरिणौ। मषति। मोषति।

७६। मुष्य इर् छिदि। (मुष—दिवा० प०) पञ्चमस्वरी। छेद इह खण्डनम्। य—मुष्यति विपक्षं चतुरः। इर्—अमुषत् अमोषीत। अस्मात्

पुषादित्वान्नित्यं ङ इति दुर्गः। (मुष्णत्यपहृतार्थानां दुःखं धनसमर्पणादिति हलायुधः। (११५)।

## मुषग् मूष लुण्ठने मिषश स्पर्द्धे मिष् मृष् सेचने।

७६। मुष ग लुण्ठने। (मुष—क्र्या० प०) (मूष—भ्वा० प०) द्वौ
७७। मूष लुण्ठने। क्रमात् पञ्चमषष्ठस्वरिणौ। ग—मुष्णाति।
यो मूषति परद्रव्यमिति हलायुधः। ११५। शेषोऽपि ऋत्वीत्येके। मोषति।

७८। मिष श स्पर्द्धे। (मिष—तुदा० प०) स्पर्द्धः पराभिभवेच्छेति वोपदेवः। श—मिषति वली वलवन्तम्। मेषिता।

७८। मिषु सेचने। (मिष—भ्वा० प०) (मृष—भ्वा० प०) आद्य-
७९। मृषु सेचने। स्तृतीयस्वरी। शेषाद्यास्त्वत्वारः सप्तमस्वरिणः।
उ—मेषित्वा मिष्ट्वा। मर्षित्वा मृष्ट्वा। मेषति। मर्षति।

## मृषक् क्षान्तौ मृष ञ ङुमृष्य च क् म्रक्ष म्रक्षणे।

## स्नेहने म्रक्ष सङ्घाते मक्ष रोषे च मोक्ष कि।

## चेपे माक्षि स्पृहे येषृ ङ यत्ने यक्ष कङ् महि।

७९। मृष क क्षान्तौ। (मृष—चु० प०) क—मर्षयति। अयमात्मनेपदीत्येके।

७९। मृष ञ ङु च। (मृष—भ्वा० उ०) (मृष—दिवा० उ०)
७९। मृष्य ञ च। ञ—मर्षति मर्षते। ङ—मर्षते। उ—
मर्षित्वा मृष्ट्वा। अयमात्मनेपदीत्यन्ये। य, ञ—मृष्यति मृष्यते। ममर्ष।
चकारात् क्षान्तौ। अपि गुरुमपराधं मर्षति ब्राह्मणानामिति हलायुधः।१५।
(मृषयति न नृपाणां मृष्यते चोद्धतानामनुचितमणुमात्रं न द्विषां मर्षते यः।
अपि गुरुमपराधं मर्षति ब्राह्मणाना सितवसनभृतां यो मर्षयत्यागमज्ञमिति सर्वत्र हलायुधः। १५।

८०। क म्रक्ष म्रक्षणे स्नेहने। (म्रक्ष—चु० प०) रेफयुक्तादिः। म्रक्षणं द्रव्यस्य द्रव्यान्तरेण संयोजनम्। क—म्रक्षयति घृतेनान्नं लोकः।

८०। म्रक्ष सङ्घाते। ( म्रक्ष—भ्वा० प० ) रेफयुक्तादिः। म्रक्षति पयसा शक्तून् लोकः, राशीकरोतीत्यर्थः ( सङ्घातोऽत्र निविड़संयोगकरणम् )।

८१। मक्ष रोषे च। ( मक्ष—भ्वा० प० ) मक्षति। चकारात् सङ्घाते च।

८२। मोक्ष क्रि क्षेपे। ( मोक्ष—चु० भ्वा० प० ) क्रि—मोक्षयति। मोक्षति। मुमोक्षतुः।

८३। माक्षि स्पृहे। ( माङ्क्ष—भ्वा० प० ) द्वितीयस्वरी। इ—माङ्क्षति। नमध्यपाठेनैवेष्टसिद्धाविदनुबन्धो वेदेषूच्चारणभेदार्थं.।

८४। येषृ ङ यत्ने। (येष—भ्वा० श्रा०) अन्त.स्थादिः। ऋ—अयियेषत्। ङ—येषते, यियेषे।

८५। यक्ष क ङ मह्नि। ( यक्ष—चु० श्रा० ) क, ङ—यक्षयते। महि पूजायाम्।

## यूष् रिष् बधे रुष् ञि च रुष्येर्ञि क्रुधि रुषक् तथा।

८६। यूष बधे। ⎫ ( यूष—भ्वा० प० ) ( रिष—भ्वा० प० ) आद्यः
८७। रिष बधे। ⎭ षष्ठस्वरी। यूषति। रेषति।

८८। रुष ञि च। ( रुष—भ्वा० प० ) एतदाद्यास्त्रयः पञ्चमस्वरिणः। ञि—रुष्टः रुषितोऽस्ति ( वारुषामङ्क्षेत्यादिना इम्निषेधविकल्पनात् ) रुरोष। चकाराद्बधे।

८९। रुष्ये ञिं क्रुधि। ( रुष—दिवा० प० ) य—रुष्यति भृत्याय भूपालः। इर्—अरुषत् अरोषीत्। अस्मान्नित्यं ङ इति दुर्गः। ञि—रुष्टः रुषितोऽस्ति।

८८। रुष क तथा। ( रुष—चु० प० ) क—रोषयति। तथा—क्रुधि।

## ञि रक्ष पालने रेषृ ङ् क्रेषायामथ लूष् क बधे।

८९। ञि रक्ष पालने। (रक्ष—भ्वा० प०) ञि—रक्षितोऽस्ति। रक्षति।

९०। रेषृ ङ क्रेषायाम्। (रेष—भ्वा० श्रा०) क्रेषा घोटककर्तृकशब्दः। ऋ—अरिरेषत्। ङ—रेषतेऽश्व। रिरेषे।

९१। अथ लूष क बधे। ( लूष—चु० प० ) षष्ठस्वरी। क—लूषयति।

## लुष् च स्तेये लषक् शिल्पयोगे लष्य लष ञ् स्पृहि।

९२। लुष च स्तेये। (लुष—भ्वा० प०) लोषति। चकारात् लूष क च।

८१। लष क श्लिष्ययोगे। (लष—चु॰ प॰) क—लाषयति कुमलो नृत्ये, श्लिष्यं युनक्तीत्यर्थः।

८३। लष अ स्पृहि। (लष—दिवा॰ उ॰) य, अ—लष्यति लष्यते।
८३। लष अ स्पृहि। (लष—भ्वा॰ उ॰) अ—लषति लषते।

लक्ष क अ दर्शनेऽङ्के कङ् लक्षालोचे विषिलिं औ।
ङ व्याप्तौ विष गौ विप्रयोगेऽथ विषु सेचने।

८४। लक्ष क अ दर्शनेऽङ्के। (लक्ष—चु॰ उ॰) क, अ—लक्षयति लक्षयते घटं लोकः, पश्यति, चिह्नयुक्तं करोति वेत्यर्थः।

८४। क ङ लक्षालोचे। (लक्ष—चु॰ आ॰) आलोचः प्रणिधानम्। क, ङ—लक्षयते कार्य्यं सुधीः।

८५। विषिलिं औ ङ व्याप्तौ। (विष—ह्वा॰ उ॰) इर्—अविषत् अविक्षत्। लि, अ—वेवेष्टि वेविष्टे (निजां खेरेणुः) औ—वेष्टा। ङ—वेविष्टे। उभयपदीत्यन्ये। अफलवत्कर्त्तर्य्यात्मनेपदार्थो ङकारः। वेवेष्टि पिष्टपं सर्व्वं कीर्त्तिर्यस्यातिशायिनीति हलायुधः (१८१)।

८५। विष गौ विप्रयोगे। (विष—क्र्या॰ प॰) ग—विष्णाति ज्ञानी, पुत्रादिभ्यो वियुक्तः स्यादित्यर्थः। औ—अविक्षत्। दन्त्यान्तोऽयमिति विसशब्दव्युत्पत्तौ सुभूतिः (विसं स्यादामगन्धि यदित्यत्र विस विप्रयोगे वाहुल्याद्रक् इत्युक्तम्) (विष्णाति विषवत् प्राणान् तयोधर्म्मद्विषामसाविति हलायुधः। १८१)।

८५। अथ विषु सेचने। (विष—भ्वा॰ प॰) उ—वेषित्वा विष्ट्वा। वेषति।

वृषु चाथ कङ् वृषु च प्रजनैश्वर्येऽथ वृक्ष ङ।
वृतौ वक्ष् रोषसंहत्योर्वाचि काङ्क्षेऽथ वष् शष।
शिष्‌वधे शिष्‌क्यसर्व्वोपयोगे वेरतिशायने।

८६। वृषु च। (वृष—भ्वा॰ प॰) उ—वर्षित्वा वृष्ट्वा। वर्षति। चकारात् सेचने।

८६। अथ क ङ वृषु च प्रजनैश्वर्ये। (वृष—चु॰ आ॰) क, ङ—वर्षयते। अस्य पञ्चमस्वरानुबन्धो लेखकभ्रमकृत एव, आन्तेभ्यः सर्व्वत्र निस्येमः

साम्प्रदायिकत्वात्। न च प्राचामनुरोधात् पाठ्य इति वाच्यं, तर्हि श्वञ्चकव्यक्ती, काङ वञ्च वञ्चने, वृतक दीप्ती, वृधक दीप्ती, दिव काङ परिकूजने, क्त दिव अर्द्दे, भूष काङ ग्रन्थिबन्धे, जसक बधेऽनादरे इत्येषामष्टानामपि पञ्चमस्वरानुबन्धित्वापत्ते। वस्तुतस्तु एषां (पूर्व्वोक्तानामष्टानां) पञ्चमस्वरानुबन्धः प्राचीनैः पठितोऽप्यनर्थः। अतएव रमानाथोऽपि एषामुदनुबन्धः पूर्व्वपठितधातवोऽर्थान्तरेषु चुरादयः स्युर्नत्वेते पृथग्धातव इति ज्ञापनार्थं इत्याह। प्रजनो गर्भग्रहणम्, ऐश्यं ऐश्वर्य्यम्। चकारात् वृषु च (एतदुभयार्थकः)।

९७। अथ वृक्ष ङ वृतौ। (वृक्ष—भ्वा० आ०) सप्तमस्वरी। ङ—वृक्षते वरं कन्या।

९८। वक्ष रोषसंहत्योः। (वक्ष—भ्वा० प०) वक्षति।

९९। वाक्षि काङ्क्षे। (वाङ्क्ष—भ्वा० प०) इ—वाङ्क्षति। नमध्यपाठेनैवेष्टसिद्धाविदनुबन्धो वेदेषूच्चारणभेदार्थः।

१००। अथ वष बधे। | (वष—भ्वा० प०) (शष—भ्वा० प०)
१०१। शष बधे। | (शिष—भ्वा० प०) वषति, शषति,
१०२। शिष बधे। | शेषति।

१०२। शिष क्विअसर्व्वोपयोगे। (शिष—चु० भ्वा० प०) असर्व्वोपयोगः परिशेषीकरणम्। क्वि—शेषयति कीर्त्तिं लोकः, अवशिष्टां करोतीत्यर्थः।

वेरतिशायने। शिष क्विरनुवर्त्तते। क्वि—विशेषयति विशेषति सम्पत्त्या भूपं विधिः। (श्रिया शक्रं विशेषति। विशेषयति यो वाग्मी वाचा वाचस्पतेर्वंच इति हलायुधः। ९१)।

शिष्लृ धौ तु विशेषेश्रिष् श्लिषु दाहे श्लिषौ य्लृञि।
श्लेषे श्लिष क्च शुष्यौ लृ शोषे शिक्ष ङ शिक्षणे।

१०२। शिष्लृ धौ तु विशेषे। (शिष—रुधा० प०) विशेष उपरञ्जनम्। लृ—अशिषत्। ध—विशिनष्टि स्मर मूर्त्त्या (य:) इति हलायुधः। ९१। मूर्त्तिविशिष्टं करोतीत्यर्थः। श्री—शेष्टा।

१०३। श्रिषु दाहे। | (श्रिष—भ्वा० प०) (श्लिष—भ्वा० प०) द्वौ
१०४। श्लिषु दाहे। | क्रमाद्रेफान्तःस्थातृतीययुक्तौ। उ—श्रेषित्वा

श्रिष्ट्वा। श्लेषित्वा श्लिष्ट्वा। श्रेषति। श्लेषति।

१०४। श्लिषो य ऌ ञि श्लेषे। (श्लिष—दिवा० प०) अन्तःस्थाद्यतीय-युक्तः। औ—श्लेष्टा। य—श्लिष्यति। ऌ—अश्लिषत्। आलिङ्गने तु अश्लिक्षत्। ञि—श्लिष्टोऽस्ति। श्लेष आलिङ्गनम्, वक्षोद्वयसंयोग इति यावत्। श्लिष्यति कामपीति जयदेवः। (मा न श्लिक्षः प्रिय प्रिये इति भट्टिः। ६।१६)। श्लेषः सम्बद्धीभावश्च। अत्राकर्म्मकोऽयम्। श्लिष्यति वृक्षे लता, लग्ना स्यादित्यर्थः।

१०४। श्लिष क च। (श्लिष—चु० प०) अन्तःस्थाद्यतीययुक्तः। क—श्लेषयति। चकारात् श्लेषे। (यः श्लिष्यति प्रियां प्रेम्णा श्लेषति द्विषतां पुरम्। दुःश्लेषाण्यपि कार्य्याणि धिया श्लेषयति क्षणादिति सर्व्वत्र हलायुधः। ६१)।

१०५। शुष्यौ ऌ शोषे। (शुष० दिवा० प०) शोष स्नेहरहितीभावः। य—शुष्यति धान्यमातपात्। औ—शोष्टा। ऌ—अशुषत्।

१०६। शिक्ष ङ शिक्षणे। (शिक्ष—भ्वा० आ०) क्रस्वी। ङ—शिक्षते। शिक्षणं विद्याग्रहणम्। अशिक्षतास्त्रं पितुरेव मन्त्रवदिति रघुः। ३। ३१।

शूष, षूष प्रसवे ष्टृक्ष गमने षूर्क्ष सूर्क्ष तु।
अनादरे स्तृक्ष, गत्यां सूष, प्रसवे हृष, हृष्य ञि।
हृहृं ष्टौ हृषु ञि प्रोक्तोऽलीके क्रेषृ ङ सर्पणे।

१०७। शूष प्रसवे। (शूष—भ्वा० प०) (षूष—भ्वा० प०) द्वौ
१०८। षूष प्रसवे। षष्ठस्वरिणौ क्रमात्तालव्यमूर्द्धन्यादौ च। शूषति। सूषति। सुषूष। आद्यः कैश्चिन्न मन्यते।

१०९। ष्टृक्ष गमने। (ष्टृक्ष—भ्वा० प०) सप्तमस्वरयुक्तस्तमध्यः। स्तृक्षति तरीष्टृक्ष्यते।

११०। षूर्क्ष अनादरे। (षूर्क्ष—भ्वा० प०) (सूर्क्ष—भ्वा० प०)
१११। सूर्क्ष तु अनादरे। द्वौ रेफयुक्तौ षष्ठस्वरिणौ क्रमान्मूर्द्धन्यदन्त्यादौ च। सूर्क्षति दुष्टं लोकः। सुषूर्क्ष। सुसूर्क्ष।

११२। स्तृक्ष गत्याम्। (स्तृक्ष—भ्वा० प०) सप्तमस्वरयुक्तस्तमध्यः। स्तृक्षति। तरीस्तृक्ष्यते।

११३। सूष प्रसवे। (सूष—भ्वा० प०) षष्ठस्वरी। सूषति। सुसूष।

११४। हृषु जि इर् हृष्टौ। ( हृष—दिवा॰ प॰ क्वावेट् ) ( हृष—
११४। हृष जि इर् हृष्टौ। दिवा॰ प॰ ) हृष्टिश्चित्तोल्लासः। उ—हर्षित्वा हृष्ट्वा। य—हृष्यति लोकः सुखात्। जि—हृष्टोऽस्ति। इर्—अहृषत् अहर्षीत्। अस्मात्रित्यं ङ इति दुर्गः। पूर्व्वस्य क्वावेट्त्वात्रेम् डीच्छी-त्वादिना इमो निषेधे निष्ठायां हृष्टः, शेषस्य हृषित इति भेदः।

११४। हृषु जि प्रोक्तोऽलीके। ( हृष—भ्वा॰ प॰ ) उ—हर्षित्वा हृष्ट्वा। जि—हृष्टोऽस्ति। अलीकं मिथ्याकरणम्। हर्षति कथां नीचः,मिथ्याकरोतीत्यर्थः।

११५। क्षेषृ ङ सर्पणे। ( क्षेष—भ्वा॰ आ॰ ) रेफयुक्तः। ऋ—अजिक्षेषत्। ङ—क्षेषते, जिक्षेषे।

## ङ हेषृ च स्वनेऽश्वानां षान्ताः षोड़शकं शतम्।

११६। ङ हेषृ च स्वनेऽश्वानां। ( हेष—भ्वा॰ आ॰ ) ( अश्वानां स्वनेऽर्थे )। ङ—हेषते घोटकः, जिहेषे। ऋ—अजिहेषत्। चकारात् क्षेषृ ङ च ( अश्वस्वनार्थकः )। मधुरमधुरं क्षेषन्त्येते इति गणकृतानित्यत्वात् परस्मैपदम्।

षान्ताः षोडशकं शतम्।

षोड़शकमिति षोड़शभिर्युक्तं शतमित्यर्थे दशादेर्डोयुते शतादाविति डः, ततः स्वार्थे कः।

---

## सान्तवर्गः।

### असू भावेऽस्यु इर्च्चेपे असञ्अःषार्थे जि लास ङ।
### उपवेशे गुश्रसुच्छे कुश्रसुतत्त्विपि च क्लसु।
### म्य हृतौड् क्लास् कुसि कि च भासने कुस्य इर्श्लिषि।

१। असू भावे। ( अस—अदा॰ प॰ ) भावः सत्ता। सा चेह विद्यमानतेव। ल—अस्ति विष्णुः।

१। असु इर्च्चेपे। ( अस—दिवा॰ प॰ ) य—अस्यति। उ—असित्वा अस्त्वा। इर्—आस्थत् आसीत्। अस्मात्रित्यं ङ इति दुर्गः। अस्यमानं महागदामिति भट्टी ( शत्रर्थे ) शतृ श्रानः।

१। असँ ञ अर्थार्थे। (असँ—भ्वा० उ०) ञ—असति असते। अर्थार्थे—दीप्तिग्रहणगतिषु इत्यर्थ. (सान्तवर्गे अष ञ दीप्तौ ग्रहे गताविति्युक्तः)। वासुदेवं परित्यज्य योऽन्यदेवमुपासते, उपगच्छतीत्यर्थः। लावण्य उत्पाद्य इवास यत्न इत्यादिसिद्धौ सत्तार्थोऽप्ययमिति रमानाथ.। अनुप्रयोगात् (अस्क्रन्वाम इत्यनेन आमन्तादनुप्रयोगादित्यर्थ.) अन्यत्रापि परोक्षायां (ण्वां) अस्तेर्भूभावं केचिदिच्छन्तीति धातुप्रदीपः।

२। ञि लाम ङ उपवेशे। (आस—अदा० आ०) ञि—आसितोऽस्ति। ल, ङ—आस्ते सिंहासने नृप। विद्यमानतायामप्ययम्। आकाशमास्ते।

३। ग उभ्रसुञ्छे। (उभ्रस—क्र्या० प०) एतदाद्योर्द्वयोरादौ पञ्चमस्वर', मध्ये केवलधकारस्याधो रेफ.। "क्र्यादावुभ्रस उञ्छ इत्ययमुदिश्चौरादिकः पठ्यते तस्य भ्रासयतीति रूपमपरं भ्रस्नाति येषा भ्रसे'। उत्पूर्व्वस्य गणद्वयेऽपि पठनं तेषां मते श्नाविधावुभ्रस्नाति निगद्यते णिचि क्षतेऽप्युभ्रासयत्यन्यत:" इत्यत्र "उत्पूर्व्वस्ये"ति उत् उकार. नतूपसर्ग। ग—उभ्रस्नाति धान्यं दीनः।

३। क उभ्रसुत्क्षिपि च। (उभ्रस—चु० प०) क—उभ्रासयति धूलिं वायुः। चकारादुञ्छे च।

४। क्रसु म्य ह्रतीङ्। (क्रस—दिवा० प०) एतदादौ द्वौ दन्त्यनकारयुक्त-कक्रारादौ। उ—क्रसित्वा क्रस्त्वा। म—क्रसयति कान्त्या जगत् पान्थ (दीपयतीत्यर्थः, परत्र कुसि कि च भासने इति चकारानुकृष्टत्वादय दीप्त्यर्थकोऽपि)। य—क्रस्यति खल, कुटिल स्यादित्यर्थः। (ह्रति कौटिल्यम्)।

४। क्रसि कि भासने। } (क्रन्स—चु० भ्वा० प०) (कुन्स—चु०
५। कुसि कि च भासने। } भ्वा० प०) शेष' पञ्चमस्वरौ। इ—क्रंस्यते, कुंस्यते। कि—क्रंसयति क्रंसति। कुसयति कुसति। चकारात् क्रसुम्य च (भासनार्थकः)। भासनं दीप्ति।

५। कुस्य इश्लिषि। (कुश—दिवा० प०) य—कुस्यति वाला कान्तम्। इर्—अकुसत् अकोसीत्। अस्मान्नित्य ङ इति दुर्ग।

## कासृङ् कुशब्दे कुत्स क् ङ अवक्षेपे कस ज् गतौ।

१। कासृ ङ कुशब्दे। (कास—भ्वा० आ०) कुशब्द इह रोगहेतुक-कुत्सितशब्दः। ऋ—अचकासत्। ङ—कासते वृद्धः।

७। कुत्स क ङ ञ अवक्षेपे। (कुत्स—चु० उ०) पञ्चमस्वरी दन्त्यवर्गा-द्योपधः। अवक्षेपो निन्दा। यो न कुत्सयते कुत्स्यमिति हलायुधः। २४। ञ—कुत्सयति कुत्सयते। अयमात्मनेपदीत्यन्ये, कदाचित् परस्मैपदार्थो ञकारः।

८। कस ज गतौ। (कस—भ्वा० प०) ज—कासः कसः। विपूर्व्वोऽयं प्रफुल्लीभावे। तथा च "प्रफुल्लोत्फुल्लसंफुल्लव्याकोषविकचस्फुटाः। फुल्लश्चैते विकसिते" इत्यमरः। विकसति पङ्कजकलिका।

कसि कस् ल ङ शाते च ग्रस् कि ग्रासे ग्रस ग्लसु।
ङ भक्षे लृ घसौ चाथ घसि ङ क्षरणे च्युसक्।
ह्रानौ चकासृद्वलु दीप्तौ जस् क् बधेऽनादरे जसु।
इयं मोक्षे जसिक् रक्षे जर्त्स भर्त्से च लङ् णिसि।
चुम्बे णसङ् हृतौ णासृङ् तुस ध्वाने त्रसक् धृतौ।
ग्रहे निषेधे त्रसि कि भासि त्रस्य त्रसीण् भये।

८। कसि लङ शाते। } (कन्स—अदा० आ०) (कस—अदा०
८। कस लङ शाते च। } आ०) शात इह ध्वसना। इ—कंस्यते। ल, ङ—कस्ते कंसम्। चकाराद्गतौ च।

९। ग्रस कि ग्रासे। (ग्रस—चु० भ्वा० प०) रेफयुक्तः। कि—ग्रासयति फलं लोकः। ग्रसति तत्र मुखेन्दुं पूर्णचन्द्रं विहाय। इम ग्रहणे पठन्ति केचित्।

९। ग्रसु ङ भक्षे। } (ग्रस—भ्वा० आ०) (ग्लस—भ्वा० आ०) द्वौ
१०। ग्लसु ङ भक्षे। } क्रमाद्रेफान्तःस्थाद्वितीययुक्तौ। उ—ग्रसित्वा ग्रस्त्वा। ग्लसित्वा ग्लस्त्वा। ङ—ग्रसते ग्लसते। हिमांशुमाशु ग्रसते इति माघः। २। ४९।

११। लृ घसौ च। (घस—भ्वा० प०) लृ—अघसत्। औ—घस्ता। चकाराद् भक्षे।

११। अथ घसि ङ क्षरणे। (घन्स—भ्वा० आ०) इ—घंस्यते। ङ—घंसते। अयं केचिन्न मन्यते।

१२। च्युस क ह्रानौ। (च्युस—चु॰ प॰) अन्तःस्थादियुक्तः। क—च्योसयति।

१३। चकासृ दलु दीप्तौ। (चकास—अदा॰ प॰) ऋट—अचीचकासत् अचचकासत्। अनेकाच्त्वात् सन्वद्भावविकल्पः। घ—चकासति। लु—चकास्ति।

१४। जस क बधेऽनादरे। (जस—चु॰ प॰) क—जासयति। (निर्जौजसोज्जासयितुं जगद्द्रुहामिति माघः। १। ३७)।

१४। जसु इर्यं मोचे। (जस—दिवा॰ प॰) उ—जसित्वा जस्त्वा। इर्—अजसत् अजासीत् अजसीत्। अस्मान्नित्यं ङ इति दुर्गः। य—जस्यति वत्सं गोप।

१४। जसि क रचे। (जन्स—चु॰ प॰) इ, क—जंसयति।

१५। जर्त्स झर्झ च। (जर्त्स—भ्वा॰ प॰) रेफयुक्तादन्त्यवर्गाद्योपधः। जर्त्सति। झर्झा भर्त्सनमुक्तिश्च। चकाराद्रचे च।

१६। लङ णिसि चुम्बे। (णिन्स—अदा॰ आ॰) ल, ङ—निंस्ते। इ—निंस्यते।

१७। णस ङ ह्वृतौ। (णस—भ्वा॰ आ॰) ह्वृतिरिह कुटिलीभावस्तत्करणञ्च। ङ—नसते खलः, कुटिलः स्यादित्यर्थः। नसते लतां वायुः कुटिलां करोतीत्यर्थः।

१८। णासृ ङ ध्वाने।
१९। तुस ध्वाने।
(नास—भ्वा॰ आ॰) (तुस—भ्वा प॰) ऋट—अननासत्। ङ—नासते। तोसति।

२०। त्रस क धृतौ ग्रहे निषेधे। (त्रस—चु॰ प॰) एतदाद्याश्चत्वारो रेफयुक्ताद्याः। क—त्रासयति मृगं व्याधः, धरति गृह्णाति निराकरोति वेत्यर्थः।

२०।त्रसि कि भासि। (त्रन्स—चु॰ भ्वा॰ प॰) इ—त्रंस्यते। कि—त्रंसयति त्रंसति। भासि दीप्तौ।

२०। त्रस्यी ण भये।
२०। त्रसी ण भये।
(त्रस—दिवा॰ प॰) (त्रस—भ्वा॰ प॰) य—त्रस्यति। ई—त्रस्तः। ण—त्रेसतुः तत्रसतुः। त्रसति।

तसिक्थलङ्कृतौ तस् दस्य दूर्तूत्त्वे पणे दसिक्।
भासि दसिङ् दृशौ दशे दासृञ् दानेनैदास् बधे।

२१। तसि क्य अलङ्कृतौ। (तन्स—चु० भ्वा० प०) इ—तंस्यते। कि—तंसयति तसति हारो जनम्।

२१। तसु इर् उत्क्षेपणे। | (तस—दिवा० प०) (दस—दिवा० प०) य—तस्यति, दस्यति धूलिं वायुः।

२२। दसु इर् तु उत्क्षेपणे। |

उ—तसित्वा तस्त्वा, दसित्वा दस्त्वा। इर्—अतसत् अतासीत् अतसीत्, अदसत् अदासीत् अदसीत्। अस्मान्नित्यं ङ इति दुर्गः।

२२। दसि क भासि। (दन्स—चु० प०) इ, क—दंसयति। भासि दीप्तौ।

२२। दसि ङ क दृशो दशे। (दन्स—चु० आ०) दृशिरिति पश्यते-रौणादिककिप्रत्यये रूपम्। इ, ङ, क—दसयते फलं शिशुः, पश्यति, दशति वेत्यर्थः। भट्टमल्लमते दंश इह सन्नाहः।

२३। दासृ ञ दाने। (दास—भ्वा० उ०) ऋ—अददासत्। ञ—दासति दासते।

२३। र न दास बधे। (दास—स्वा० प०) र—वैदिकः। न—दास्नोति।

धस् कुत्क्षेपे धसगु चोञ्छे धूस क धूशि ध्वन्सु लृङ् गतौ।
भ्रंशे पेस् पिसृ गत्यां पिस् कषट्कार्थे च प्युस इर्।
भागे इर् प्लुस दाहे च प्रसृ षङ् प्रसवे ततौ।

२४। भ्रस् कुत्क्षेपे। (भ्रस—चु० प०) क—भ्रासयति।

२५। भ्रस ग उ च उञ्छे। (भ्रस—क्र्या० प०) ग—भ्रस्नाति ग्रस्यं दीनः। उ—भ्रसित्वा भ्रस्त्वा। चकारात् भ्रसक च (उञ्छार्थकः)।

२६। धूस क धूशि। (धूस—चु० प०) षष्ठस्वरो। धूशः कान्तिकृतिः। क—चन्दनो धूसयत्यङ्गम्। महिषधूसरितः सरितस्तटमिति जानकीहरणयमकाद्दन्त्यान्त एवायमिति रमानाथः। स्वमते तालव्यमूर्द्धन्यान्तोऽप्ययम्।

२७। ध्वन्सु लृङ गतौ भ्रंशे। (ध्वन्स—भ्वा० आ०) उ—ध्वंसित्वा ध्वस्त्वा। लृ—अध्वसत्। ङ—ध्वंसते। भ्रंशोऽध पतनम्।

२८। पेसृ गत्याम्। | (पेस—भ्वा० प०) (पिस—भ्वा० प०) ऋ—

२९। पिसृ गत्याम्। | अपिपेसत्। पिपेसतुः। पिपिसतुः।

२९। पिस क षट्कार्थे च। (पिस—चु० प०) क—पेसयति। मूर्द्धन्यान्तोऽयमिति केचित्। षट्कार्थो निकेतनहिंसाबलदानानि। चकाराद्गत्याञ्च।

३०। प्युस दुर्भागे। (प्युस—दिवा० प०) अन्तःस्थाद्ययुक्तः। य—प्युस्यति धनं दायादः। इर्—अप्युसत् अप्योसीत्। अस्मान्नित्यं ङ इति दुर्गः। (भागो विभजनम्)।

३१। प्लुस्य दाहे च। (प्लुस—दिवा० प०) अन्तःस्थाद्वतीययुक्तः। इर्—अप्लुसत् अप्लोसीत्। य—प्लुस्यति। चकारात् विभागे च।

३२। प्रस म षङ प्रसवे ततौ। (प्रस—भ्वा० आ०) रेफयुक्तः। म—प्रसयति। ष—प्रसा। ङ—प्रसते कीर्त्तिं क्रिया, प्रसूते विस्तारयति वेत्यर्थः।

## पसिक् नाशे पस्क पसञ् षान्तवत् पिसि कि त्विषि।

३३। पसि क नाशे। (पन्स—चु० प०) नाश इह नष्टीकरणम्। इ, क—पंसयति पापं गङ्गा।

३३। पस क षान्तवत्। } (पस—चु० प०) (पस—भ्वा० उ०) क—
३३। पस ञ षान्तवत्। } पासयति। ञ—पसति पसते। पृथक् पाठादाद्यो न ञित्। अन्यथा पसकि ञ इत्यनेनैवेष्टसिद्धौ पृथक्पाठोऽनर्थः स्यात्। षान्तवदिति पष क बन्धे, पष ञ बाधे ग्रन्थे इतिवदर्थबोधक इत्यर्थः।

३४। पिसि कि त्विषि। (पिन्स—चु० भ्वा० प०) इ—पिंस्यते। कि—पिंसयति पिंसति। त्विषि दीप्तौ।

## पुंस्क मर्द्दे बुस्येर्हानौ बिस्येच्चेपेक् ङ भर्त्स ञ।
## भर्त्सभंस् लि द्युतौ चाथ भ्रास्य भ्रास् ङ्णट् ङ भान्तवत्।

३५। पुस क मर्द्दे। (पुस—चु० प०) ओष्ठ्यवर्गशेषोपधः, संयोगान्मकारस्यानुस्वारः। तेन क्विपि पुंसोऽसुङ्भावित्यनेनासुङि सकारपरत्वाभावादनुस्वारस्य पुनर्मकारे पुमान्। न च नकारजावनुस्वारपञ्चमाविति नियमान्नकारोपध एवायमिति वाच्यम्, सुतसुरातिरिरितिद्वयोस्तालव्यशकारादिपाठेन तद्वचनस्य व्यभिचारदर्शनात्। मर्द्दोऽभिमर्द्दनम् (पीड़नमित्यर्थः)। क—पुंसयति खलं राजा।

३६। बुस्येर्हानौ। (बुस—दि० प०) य—बुस्यति जलं मेघः, त्यजतीत्यर्थः। इर्—अबुसत् अबोसीत्। अस्मान्नित्यं ङ इति दुर्गः। बुसं कड़ङ्गरः।

३७। बिस्येर्क्षेपे। (बिस—दिवा० प०) य—बिस्यति। इर्—अबिसत् अबेसीत्। अस्मान्नित्यं ङ इति दुर्गः।

३८। क ङ भर्त्स ञ भर्त्से। (भर्त्स—चु० उ०) रेफयुक्तदन्त्यवर्गाद्योपधः। भर्त्सा भर्त्सनम्। भर्त्सनन्त्वपकारगीरित्यमरः। क, ङ—भर्त्सयते जनं राजा। ञ—भर्त्सयति भर्त्सयते। अयमात्मनेपदीत्यन्ये, कदाचित् परस्मैपदार्थो ञकारः।

३९। र भस लि द्युतौ च। (भस—ह्वा० प०) र—वैदिकः। लि—बभस्ति। चकाराद्भर्त्से च।

४०। अथ भ्रास्य ङ ऋ ण टु शान्तवत्। } (भ्रास—दिवा० आ०)

४०। भ्रास ङ ऋ ण टु शान्तवत्। } (भ्रास—भ्वा० आ०)

द्वौ रेफयुक्तौ। य, ङ—भ्रास्यते। ङ—भ्रासते। ऋ—अबभ्रासत्। ण—भ्रेसे बभ्रासे। टु—भ्रासथुः। शान्तवदिति भासि, तौ रणौ चेत्यर्थः। (शान्तवदित्यनेन तालव्यशकारान्त भ्राशधातुवदिमावपि दीप्त्यर्थकौ रस्थानजातनकारौ च स्यातामित्युक्तम्) तेन भ्लास्य भ्लास ङ ण टु भासि इत्यपि।

४१। भ्लास्य ङ ऋ ण टु भासि। } (भ्लास—दिवा० आ०) (भ्लास—

४१। भ्लास ङ ऋ ण टु भासि। } भ्वा० आ०) य, ङ—भ्लास्यते। ङ—भ्लासते। ऋ—अबभ्लासत्। ण—भ्लेसे बभ्लासे। टु—भ्लासथुः। केचित्तु भ्रास भ्लास्य ङ ण टु इति पूर्व्वं रेफयुक्तमनुबन्धशून्यं शेषं दन्त्यनकारयुक्ताद्यं पठित्वा शान्तवदित्यस्य भासोत्येवार्थं व्याख्याति तद्धेयं, तथात्वे निःसन्देहार्थं शान्तवदिति नोक्त्वा दीपने इत्येवावदिष्यत्।

> भासृ ङ् दीप्तौ भ्यसङ् भीत्यां मुस्येर्छिदि मसिर्य ई।
> परिमाणे परीणामे इर्यस्यु यतने रस।
> शब्दे रासङ् ङपि लसक् शिल्पयोगे लस श्लिषि।
> क्रीड़े ग्रीस ग्रूस् कि वधे वसक् स्नेहच्छिदोश्च यु।
> वसिर् स्तम्भे वसै ओ निवासे वस ङल स्तृतौ।

४२। भासृ ङ दीप्तौ। (भास—भ्वा० आ०) ऋ—अबीभसत् अबभासत्। ङ—भासते।

४३। भ्यस ङ भीत्याम्। (भ्यस—भ्वा० आ०) ङ—भ्यसते।

४४। मुस्येर्छिदि। (मुस—दिवा० प०) छिदि खण्डने। य—मुस्यति विपक्षं चतुरः। इर्—अमुसत् अमोसीत्। अस्मान्नित्य ङ इति दुर्गः।

४५। मसि यँ ई परिमाणे परीणामे। (मस—दिवा० प०) इर्—अमसत् अमासीत् अमसीत्। अस्मान्नित्यं ङ इति दुर्गः। य—मस्यति धान्यं गृही, परिमातीत्यर्थः। ई—मस्तः। परीणाम इति कस्यचिदनुरोधात्।

४६। इयँस्यु यतने। (यस—दिवा० प०) इर्—अयसत् अयासीत् अयसीत्। अस्मान्नित्यं ङ इति दुर्गः। य—प्रयस्यति। क्रमक्लमभ्रमेत्यादिना केवलात् सम्पूर्व्वाच्चास्मात् श्यन्विकल्पनात् यस्यति यसति संयस्यति संयसति। उ—यसित्वा यस्त्वा। यतन यत्नः।

४७। रस शब्दे। (रस—भ्वा० प०) रसति।

४८। रासृ ङ् अपि। (रास—भ्वा० आ०) दन्त्यान्तोऽयमिति गदसिंहः। रासभ. खरः। दुर्गसिंह इमं तालव्यान्तं मत्वा ह्रस्वं कृत्वा रश्मिशब्दं व्युत्पादितवान्। ऋ—अररासत्। ङ—रासते। अपिशब्दात् शब्दे।

४९। लस क शिल्पयोगे। (लस—चु० प) क—लासयति कुशलो नृत्ये, शिल्पं युनक्तीत्यर्थः।

४९। लस श्लिषि क्रीड़े। (लस—भ्वा० प०) लसति।

५०। व्रीस कि वधे। } (व्रीस—चु० भ्वा० प०) (व्रूस—चु० भ्वा० प०)

५१। व्रूस कि वधे। } द्वौ रेफयुक्तदीर्घिणौ। कि—व्रीसयति व्रीसति, व्रूसयति व्रूसति।

५२। वसक् स्नेहच्छेदोश्च। (वस—चु० प०) स्नेहः प्रीतिः। क—वासयति बन्धु। चकारात् वधे।

५२। यु वसिर स्तम्भे। (वस—दिवा० प०) य—वस्यति। उ—वसित्वा वस्त्वा। इर्—अवसत् अवासीत् अवसीत्। अस्मान्नित्यं ङ इति दुर्गः। स्तम्भ इह नम्रतारहितीभाव। यो वस्यत्यरिष्विति हलायुधः। १४।

५२। वसँ औ निवासे। (वस—भ्वा० प०) ऐ—उष्यात्। औ—अवात्सीत्।

५२। वस ल ङ स्तृतौ। (वस—अदा० आ०) स्तृतिराच्छादनपूर्व्वक धारणम्। ल, ङ—वस्ते वस्त्रं लोकः।

## वेस्वितौ श्वस् घलु प्राणे शस्लुर् स्वप्ने उशस् वधे।

५३। वेस् ऋ इतौ। (वेस—भ्वा० प०) ऋ—अविवेसत्। विवेसतुः। इतौ गत्याम्।

५४ । श्वस खलु प्राणे । ( श्वस—अदा० प० ) वकारयुक्तः । घ, लु— श्वसिति लोकः, जीवतीत्यर्थः । आश्वसेयुर्निशाचरा इति भट्टौ (१९ । २१) न विश्वसेत् पूर्व्वविरोधितस्येति पञ्चतन्त्रे, न विश्वसेदविश्वस्ते विश्वस्ते नाति- विश्वसेदित्यादौ न गणकृतमनित्यमिति न्यायात् शपः स्थितौ सिद्धम् । अथवा भ्वादेराकृतिगणत्वात्तत्र दृश्यम् । वस्तुतस्तु पचादित्वादनि स इवाचरतीति क्वौ साध्यम् ।

५५ । शस लुर स्वप्ने । ( शस—अदा० प० ) लु—शस्ति । र—वैदिकः ।

५५ । उ शस वधे । ( शस—भ्वा० प० ) उ—शसित्वा शस्त्वा । शसति ।

आङ्पूर्व्वास्तुशसि ङ् शासुङ्शासुलङ्ङाशिषि स्मृताः ।

५५ । आ+शसि ङाशिषि । ( आ+शन्स भ्वा० आ० ) ( आ+ शास भ्वा० आ० ) ( आ+शास अदा० आ० ) आङ्पूर्व्वा इति केवलानामन्य- पूर्व्वाणाञ्च प्रयोगनिषेधार्थम् ।

५६ । आ+शासु ङाशिषि ।

५६ । आ+शासु ल ङाशिषि ।

किन्तु "इदं गुरुभ्यः पूर्व्वेभ्यो नमोवाक प्रशा- स्महे" इत्युत्तरचरिते तृतीयः प्रपूर्व्वोऽपि दृश्यते । इ—आशंस्यते । ङ—आश- सते । ङ—आशासते । उ—आशासित्वा आशास्त्वा । उदनुबन्धसामर्थ्यात् क्त्वाचो न यप् । समासाभावादिति गोविन्दभट्टः । किन्तु अस्योदनुबन्धफलं छन्दस्येवेति धातुप्रदीप. । ल, ङ—आशास्ते । शासुडिञ्सङे इत्यत्र जचा- दीयशास एव ग्रहणादस्योपधाया इकारो न स्यात् । आशीरिष्टार्थाशंसनम् । कीर्त्तिमाशंसते परामिति हलायुध. । २२ । एते इच्छायामित्यन्ये ।

शासु खलु शासने शन्सु हिंसास्तुत्यो र्यं लृ षासु ।
मि निवासे षासु भन्ने षस् लुस्वापे लृ स्रन्सु ङ ।
भ्र शे ङ स्रन्सु प्रसादे क्सस ह्लस रवे हसे ।
ह्रासे हिस् धिकि हिसे ते सान्ताःस्यु पञ्चषष्टिधा ।

५६ । शासु खलु शासने । ( शास—अदा० प० ) उ—शासित्वा शिष्ट्वा । घ—शासति । लु—शास्ति । शास्ति यत्राज्ञया राज्ञः स सम्राड़ित्यमरः ।

५७ । शन्सु हिंसास्तुत्योः । ( शन्स—भ्वा० प० ) तालव्यादिः । उ—

शंसित्वा शस्त्वा । यः शंसति सतां वृत्तिमिति हलायुधः । २२ । अनेकार्थत्वात् कथनेऽप्ययम् । यथा रघौ—शशंस वाचा पुनरुक्तयेवेति ( २ । ६८ ) न मे क्रिया शंसति किञ्चिदीप्सितमित्यादि च ( ३ । ५ ) ।

५८ । य लृ णस्तु मि निवासे । ( णस—दिवा० प० ) मूर्द्धन्यादिर्दन्त्य-नकारयुक्तः । य—नस्यति । लृ—अनसत् । उ—नसित्वा नस्त्वा । मि—नस-यति नासयति ।

५९ । ष्णुस भवे । ( ष्णुस—दिवा० प० ) मूर्द्धन्यादिर्दन्त्यनकारयुक्तः । य—स्नुस्यति । सुष्णोस ।

६० । षस लुर स्वापे । ( षस—अदा० प० ) मूर्द्धन्यादिः । लु—सस्ति । र—वैदिकः । स्वापः शयनम् ।

६१ । लृ स्रन्सु ङ भ्रंशे । ( स्रन्स—भ्वा० आ० ) द्युतादिः रेफयुक्त-दन्त्यादिः । लृ—असस्रत् । उ—स्रंसित्वा स्रस्त्वा । ङ—स्रंसते । भ्रंशोऽधःपतनम् ।

६१ । ङ स्रन्सु प्रसादे । ( स्रन्स—भ्वा० आ० ) रेफयुक्तादिः । ङ—स्रंसते । उ—स्रंसित्वा स्रस्त्वा । प्रसादः प्रसन्नीभावः ।

६२ । क्रस रवे । } (क्रस—भ्वा० प०) (ह्रस—भ्वा० प०) द्वौ क्रमाद्रेफा-
६३ । ह्रस रवे । } न्तःस्यात्तृतीययुक्तौ । क्रसति । ह्रसति । रवः शब्दः ।

६४ । हसे हासे । ( हस—भ्वा० प० ) ए—अहसीत् । ( एदित्वात् हसादेः सेम इत्यादिना न वृद्धिः ) हासोऽपूर्व्वप्रीत्या कपोलस्य विकसितीकरणम् । तत्रे-वाकर्म्मकः । हसति शनैः शुष्करुदितमुखीति गोवर्द्धनः । यदा तु कस्यचि-द्दोषादिकमुद्दिश्य तत् स्यात्तदा सकर्म्मकः । हसन्तमन्तर्बलमर्व्वतो रवेरिति श्रीहर्षः । हसन्ति साधवश्चौरम् ।

६५ । हिस धिकि हिंसे । (हिन्स—रुधा० चु० भ्वा० प०) ध—हिनस्ति । इ—हिंस्यते । कि—हिंसयति हिंसति । हन्त्यर्थेनैव पाचिकचुरादित्वे सिद्धे किकरणं भ्वादित्वार्थम् ।

ते सान्ताःस्युः पञ्चषष्टिधा । ( पञ्चषष्टिप्रकाराः ) ।

---

## हान्तवर्गः ।

### अहिक् भासेऽहिङ् गतेऽर्ह योग्यत्वेऽर्हक् च पूजने ।

१ । अहि क भासे । (अन्ह—चु० प०) इ, का—अंहयति । भासो दीप्तिः ।

१। अहि ङ गतौ। (अंह—भ्वा० आ०) इ—अंह्यते। ङ—अंहते।

२। अर्ह योग्यत्वे। (अर्ह—भ्वा० प०) अर्हति विप्रो वेदं पठितुम्। सकर्म्मकोऽपि। यज्ञदानतपांस्यस्य कलां नार्हन्ति षोडशीमिति।

२। अर्ह क च पूजने। (अर्ह—चु० प०) क—अर्हयति। चकारादर्ह च।

ईह ङ् चेष्टे उहिर् त्वर्द्दे ऊहङ् तर्के ग्रह ग्लहू।

क्यादाने ग ग्रह ञ च गर्ह गल्ह ङ कुत्सने।

३। ईह ङ चेष्टे। (ईह—भ्वा० आ०) दीर्घादि। ङ—ईहते। ऐहिष्ट तं कारयितु मतात्मेति भट्टिः। १। ११। सकर्म्मकोऽपि। सर्व्वः स्वार्थं समीहते इति माघ। २। ६५। भामं भ्रमादपि नेहते इति जयदेवः।

४। उहिर् त्वर्द्दे। (उह—भ्वा० प०) ह्रस्वादिः। इर्—औहत् औहीत्। अर्द्द इह वधः।

५। ऊह ङ तर्के। (ऊह—भ्वा० आ०) दीर्घादि। सन्देहाद्विचारस्तर्कः। ङ—ऊहते तर्कं धोरः। यशः समूहन्निव दिग्विकीर्णमिति गेर्व्वास्योहो ढेचेति परस्मैपदविधानात् शत्रन्तम्। अनुक्त मप्यूहति पण्डितो जन इति गणकृता-नित्यत्वात्, पचादित्वादिनि ऊह इवाचरतीति क्वीवा साध्यम्।

६। ग्रह कि आदाने। (ग्रह—चु० भ्वा० प०) (ग्लह—चु० भ्वा०

७। ग्लह कि आदाने। प०) द्वौ क्रमाद्रेफान्तःस्यात्ततीययुक्तौ। ऊ—अग्रहीत् अग्राचीत्, अग्लहीत् अग्लाचीत्। कि—ग्राहयति ग्रहति, ग्लाहयति ग्लहति। आद्यः कैश्चिन्न मन्यते, शेषोऽपि भ्वादिरात्मनेपद्येव मन्यते।

६ क। ग ग्रह ञ च। (ग्रह—क्र्या० उ०) ग, ञ—गृह्णाति। गृह्णते। चकारादादाने।

८। गर्ह ङ कुत्सने। (गर्ह—भ्वा० आ०) (गल्ह—भ्वा० आ०) द्वौ

९। गल्ह ङ कुत्सने। क्रमाद्रेफान्तःस्यात्ततीययुक्तौ। ङ—गर्हते, गल्हते। कुत्सन निन्दा।

कि गर्ह च ङ गाहू विलोडे गुहू ञ संवृतौ।

८ क। कि गर्ह च। (गर्ह—चु० भ्वा० प०) रेफोपध। कि—गर्हयति गर्हति। चकारात् कुत्सने।

१०। ङ गाहृ विलोड़े। (गाह—भ्वा० आ०) ङ—गाहन्तां महिषा-निपानसलिलमिति आकुललले। ऊ—अगाहिष्ट अगाढ।

११। गुहृ अ संवृतौ। (गुह—भ्वा० उ०) पञ्चमस्वरौ। ऊ—अगूहीत् अघुक्षत्। अ—गूहति गूहते। गुहोपोवरिति दीर्घः।

## चहकम चह शाठ्ये ङ जेह यत्नेऽथ णह्य औ।

## बन्धे तृह धू तृन्हूश हिंसे तुह् दुहिरर्द्दने।

१२। चह कम शाठ्ये। (चह—चु० प०) (चह—भ्वा० प०) क—
१२। चह शाठ्ये। चहयति। चहति खलः,साधुं प्रतारयतीत्यर्थः।

१३। ङ जेहृ यत्ने। (जेह—भ्वा० आ०) ङ—जेहते, जिजेहे। ऋ—अजिजेहत्।

१४। अथ णह्य औ बन्धे। (णह—दिवा० उ०) य, अ—नह्यति नह्यते। औ—अनात्सीत् अनद्ध।

१५। तृह धू हिंसे। (तृह—रुधा० प०) (तृन्ह—तुदा० प०) द्वौ
१६। तृन्हू श हिंसे। सप्तमस्वरिणौ। ध—तृणेढि। ऊ—अतर्हीत् अतृक्षत्। ऊ—अतृन्हीत् अतृन्क्षत्। श—तृहति।

१७। तुहिर् अर्द्दने। (तुह—भ्वा० प०) (दुह—भ्वा० प०) इर्—
१८। दुहिर् अर्द्दने। अतुहत् अतोहीत्। तोहति। इर्—अदुहत् अदोहीत्। दोहति। अर्द्दनमिह वध।

## दुह लऔ दुहि ल्ह द्रुह्य जिघांसे दिह्ल औ लिपि।

१८। दुह ल औ दुहि। (दुह—अदा० उ०) धुक् दोहनम्, तच्च व्यक्तीकरणमिति धातुपारायणिका। ल, अ—दोग्धि दुग्धे गां दुग्धं गोपः। औ—अधुक्षत्। स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनीति किराते (१।१८) वसूनीति कर्म्मणो विद्यमानतया कर्म्मकर्त्तृत्वाभावात् स्खलितमित्येके। दुहादेरप्रधानकर्म्मविषये कर्म्मकर्त्तृत्वे प्रधानकर्म्मप्रयोगो दुर्निवार इति कुलचन्द्रः। स्वमते तु अतएवानयोर्ढेऽपि ढघत्वमिति, पचदुहोः कर्म्मणि विद्यमानेऽपि कर्म्मकर्त्तृत्वमित्यर्थ।

१९। ल्ह द्रुह्य जिघांसे। (द्रुह—दिवा० प०) जिघाम इह अनिष्टा-

करणमिति विद्यानिवासः। लृ—अद्रुहत्। य—द्रुह्यति खलः साधवे। ऋ—द्रोहिष्यति ध्रोक्ष्यति।

२०। दिह ल औ लिपि ( दिह—अदा० उ० ) दिह उपचये इति प्राञ्चः। उपचयो वृद्धिस्तत्कारणञ्च। ल, अ—देग्धि दिग्धे देहः, प्रतिदिनमुपचितः स्यादित्यर्थः। देग्धि सौधं सुधया लेपकः उपचितं करोतीत्यर्थः। औ—अधिक्षत्।

दहौ दाहे दहिक् दीप्तौ दाहे द्राहङ जागरे।

निक्षेपे दृहि दृह् वृद्धौ म्लिहङ् गत्यां बर्हबल्ह ङ।

स्तृतिहिंसादानवाक्षु मह पूजे महिक् त्विषि।

२१। दहौ दाहे। ( दह—भ्वा० प० ) औ—अधाक्षीत्। दाहो भस्मीकरणम्। दहत्यग्निः काष्ठम्।

२१। दहिक दीप्तौ दाहे। ( दन्ह—चु० प० ) इ, क—दंहयति।

२२। द्राह ङ जागरे निक्षेपे। ( द्राह—भ्वा० आ० ) ऋ—अदद्राहत्। ङ—द्राहते। ( द्राहते च निद्राक्षये इति हलायुधः। १०९। जागर्त्तीत्यर्थः )।

२३। दृहि वृद्धौ। } ( दृन्ह—भ्वा० प० ) ( दृह—भ्वा० प० ) द्वौ सत्तम-

२३। दृह वृद्धौ। } स्वरिणौ। इ—दृंह्यते। दृंहति। दर्हति।

२४। म्लिह ङ गत्याम्। ( म्लिह—भ्वा० आ० ) अन्तःस्थान्ततीययुक्तः। ङ—म्लेहते।

२५। बर्ह ङ स्तृतिहिंसादानवाक्षु। } ( बर्ह—भ्वा० आ० ) ( बल्ह—

२६। बल्ह ङ स्तृतिहिंसादानवाक्षु। } भ्वा० आ० ) ङ—बर्हते, बल्हते। ( स्तृतिराच्छादनं, वाक् कथनम् )।

२७। मह पूजे। ( मह—भ्वा० प० ) महति। ( नित्यं महति माहेयीमिति हलायुध. )। ३४।

२७। महिक् त्विषि। ( मन्ह—चु० प० ) इ, क—मंहयति। त्विषि दीप्तौ।

महिङ् वृद्धौ तु मुह्यू ल ञि वैचित्त्ये मिहौ सिचि।

२७। महिङ् वृद्धौ तु। ( मन्ह—भ्वा० आ० ) इ—मंह्यते। ङ—मंहते।

२८। मुह्यू ल ञि वैचित्त्ये। ( मुह—दिवा० प० ) वैचित्त्यं ज्ञानरहितो-

भावः। य—लीन मुह्यति चिराय मे मन इति मुरारिः। ज—मोहिष्यति मोक्ष्यति। ङ—अमुहत्। ञि—मुग्धः मूढ़ोऽस्मि।

२९। मिहौ सिचि। (मिह—भ्वा० प०) ओ—अमिक्षत्। मेहति। (सिक् क्षरणम्)।

## माहृञ् माने रिह् बधे ञि ज् रुहौ जन्यां रह त्यजि।

३०। माहृ ञ माने। (माह—भ्वा० उ०) ऋट—अममाहत्। ऋदनुबन्धस्थाने षष्ठस्वरानुबन्ध इत्येके। ञ—माहति माहते।

३१। रिह बधे। (रिह—भ्वा० प०) रेहति।

३२। ञि ज रुहौ जन्याम्। (रुह—भ्वा० प०) ञि—रुढोऽस्मि। ज—रोढः रुहः। जनिर्जन्म। रोहति जन्तुः जायते इत्यर्थः। रुह जन्मप्रादुर्भावे इति प्राञ्चः। जन्मप्रादुर्भावयोरेकोऽर्थ इति गोविन्दभट्टचतुर्भुजमिश्रौ। रमानाथस्तु जन्म असदुत्पत्तिः, प्रादुर्भावः स्फूर्त्तिरितिभेदमाह।

३३। रह त्यजि। (रह—भ्वा० प०) त्यजि वर्ज्जने। रहति सुखं दीनः।

## रहि गत्यां लुहौ गार्ध्ये ल् लिहौञ् स्वादे क्वर्ह बधे।
## दीप्तौ वर्ह वल्हङ् श्रैष्ठ्य वल्ह क् त्विषि ह्रहि क्वपि।

३३। रहि गत्याम्। (रन्ह—भ्वा० प०) इ—रंह्यते। रंहति।

३४। लुहौ गार्ध्ये। (लुह—भ्वा० प०) ओ—अलुक्षत्। गार्ध्यं लब्धुमिच्छा। लोहति धनं लोकः।

३५। ल लिहौ ञ स्वादे। (लिह—अदा० उ०) ल, ञ—लेढि पुष्पाणि षट्पदः लीढ़े। ओ—अलिक्षत्।

३६। क वर्ह बधे दीप्तौ। (वर्ह—चु० प०) रेफोपधः। क—वर्हति।

३६। वर्ह ङ श्रैष्ठ्ये। } (वर्ह—भ्वा० आ०) (वल्ह—भ्वा० आ०)

३७। वल्ह ङ श्रैष्ठ्ये। } द्वौ क्रमाद्रेफान्तःस्थाद्यतीयोपधौ। ङ—वर्हते, वल्हते धनी श्रेष्ठः स्यादित्यर्थः। (निवर्हयति वृत्रारीन् तपसा यो निवर्हते इत्युभयत्र हलायुधः। २५२)।

३७। वल्ह क त्विषि। (वल्ह—चु० प०) अन्तःस्थाद्यतीयोपधः। क—वल्हयति। त्विषि दीप्तौ।

३८। ह्रहि क्वपि। (ह्रन्ह—चु० भ्वा० प०) एतदाद्याः पञ्च सप्तम-

ख्वरिण। इ—बृंह्यते। णि—बृंहयति, बृंहति। अपिशब्दात् त्विषि।

बृहिर्ध्वनद्यर्योर्वृहि च बृह् वृद्धौ शू बृहुद्यमे।
वेह् वाहृङ् यत्नेऽथ वहिङ् वृद्धौ वहिक् त्विषि।

३८। बृहिर्ध्वनद्यर्योः। (बृह—भ्वा० प०) इर्—अबृहत् अवर्हीत्। ध्वनः शब्दः। ऋद्धिर्वृद्धिः।

३८। वृहि च। (बृन्ह—भ्वा० प०) इ—बृंह्यते। वबृंहिरे गजपतय इति माघे आत्मनेपदप्रयोगः प्रामादिक इति वल्लभः। चकारात् ध्वनद्यर्योः। ध्वनश्चेह हस्तिकर्त्तृकः, बृंहितं करिगर्ज्जितमित्यमरात्। बृंहितं करिगर्ज्जायां शब्दमात्रेऽपि कथ्यत इति शब्दमहार्णवात् कदाचिदन्यकर्त्तृकोऽपि, तेन श्रीहर्षचरिते सिंहबृंहितमिति वाणभट्टप्रयोग.।

३८। बृह वृद्धौ। (बृह—भ्वा० प०) वर्हति। बृहिर्ध्वनद्यर्योरित्यनेनैवेष्टसिद्धावस्य पाठो वृद्धौ (घर्थे) इरनुबन्धवर्ज्जनार्थः। किन्त्वनेनैवेष्टसिद्धौ तत्र ऋद्धिग्रहणं परत्रानुवृत्त्यर्थमेव। अयं धातुः कैश्चिन्न मन्यते।

३८। शू बृहुद्यमे। (बृह—तुदा० प०) श—बृहति। ऊ—अवर्हीत् अबृक्षत्।

३८। वेहृङ यत्ने। ⎫ (वेह—भ्वा० आ०) (वाह—भ्वा० आ०)
४०। वाहृङ यत्ने। ⎭ ऋ—अविवेहत्, अववाहत्। ङ—वेहते, विवेहे, वाहते ववाहे।

४१। अथ वहि ङ वृद्धौ। (वन्ह—भ्वा० आ०) इ—वंह्यते। ङ—वंहते।

४१। वहि क त्विषि। (वन्ह—चु० प०) इ, क—वंहयति। त्विषि दीप्तौ।

वहे ञो प्रापणे षाह्यू लृ उद्गारे षिह्व य् लृ ञि।
प्रीतौ षिहक् स्नेहने षह्य ङि शक्तौ षह जङ च।

४१। वहे ञो प्रापणे। (वह—भ्वा० उ०) प्रापणमिह ज्ञ्यन्तस्य रूपम्। ऐ—उह्यात्। ञ—वहति वहते भारं ग्रामं जनः, प्रापयतीत्यर्थः। ओ—अवाक्षीत्। अर्थान्तरेऽकर्म्मकोऽयम्। जम्बूसरिद्वहति सीमनि कम्बुकण्ठीति नैषधम्। मन्दं मरुद्वहति गर्ज्जति वारिवाह इति महानाटकम्। ववाह रक्त पुरुषास्ततो जाता सहस्रश इत्यादिमिद्धार्थमोक्षादिकञ्च वहधातु मन्येते कर्ण-

शरणदेवी । वस्तुतस्तु बहुवाद्यसम्मतत्वादोष्ठ्यादिरनेनोपेक्षितः । ववाह इत्यादिप्रयोगस्य वाहृङ यत्ने इत्यस्मात्गणकृतानित्यत्वात् परस्मैपदे सिद्धिः, अनेकार्थत्वात् सुस्नावित्यर्थः । अथवा वव इत्याह इत्येव व्याख्यानम् ।

४२ । ष्णुह्यू लृ उद्गारे । ( ष्णुह—दिवा॰ प॰ ) मूर्द्धन्यादिरयम् । एतदाद्यास्त्रयो दन्त्यनकारयुक्ताद्याः । उद्गारो वान्तिः । य—स्नुह्यत्यन्नं लोकः । ऊ—स्नोहिष्यति स्नोक्ष्यति । लृ—अस्नुहत् ।

४३ । ष्णिह्य यलृञि प्रीतौ । ( ष्णिह—दिवा॰ प॰ ) ऊ—स्नेहिष्यति स्नेक्ष्यति । य—स्निह्यति बन्धुः । लृ—अस्निहत् । ञि—स्निग्धः स्नीढोऽस्ति ।

४३ । ष्णिह क स्नेहने । ( ष्णिह—चु॰ प॰ ) स्नेहनं स्निग्धीभावः । क—स्नेहयति वर्त्तिका तैलेन ।

४४ । षह्य कि शक्तौ । ( षह—दिवा॰ चु॰ भ्वा॰ प॰ ) शक्तिरिह दैवादिकशकधातो रूपम्, तेन क्षमेत्यर्थः । य—सह्यति दुःखं लोकः सहत इत्यर्थः । कि—साहयति सहति । स एवायं नागः सहति कलभेभ्यः परिभवमिति ।

४४ । षह ज ङ च । ( षह—भ्वा॰ आ॰ ) चकारात् शक्तौ । इहापि शक्तिः क्षमा । ज—साहः सहः । ङ—अन्यायं सहते नासाविति हलायुधः । ( साहयत्याहवे क्षोभं सहति द्रविणव्ययम् । अन्याय सहते नासौ सह्यति क्षितिरक्षणे इति सर्व्वत्र हलायुधः । ३१ ) ।

लृ षुह्य तृपि च ष्टृंह ष्टृह स्तृंह स्तृहूश् वधे ।
लृ स्नुह्‌ ङ तु विश्वासे हकारान्ताः शतार्द्धकाः ।

४५ । लृ षुह्य तृपि च । ( षुह—दिवा॰ प॰ ) पञ्चमस्वरौ । चकारात् शक्तौ । इहापि शक्तिः क्षमा । लृ—असुहत् । य—सुह्यति दुःखं लोकः, सहते इत्यर्थं । सुषोह ।

४६ । ष्टृंह श वधे ।
४७ । ष्टृह श वधे ।
४८ । स्तृंह श वधे ।
४९ । स्तृह श वधे ।

( ष्टृंह—तुदा॰ प॰ ) ( ष्टृह—तुदा॰ प॰ ) ( स्तृंह—तुदा॰ प॰ ) ( स्तृह—तुदा॰ प॰ ) द्वावाद्यौ मूर्द्धन्यादी, शेषौ द्वौ दन्त्यादी, चत्वारस्तमध्याः, आद्यतृतीयावष्टमस्वरिणौ, अन्यौ सप्तमस्वरिणौ । ऊ—अस्तृंहीत् अस्तृंक्षत्, अस्तर्हीत् अस्तृक्षत् । श—स्तृंहन्ती

स्तृंहती। स्तृंहति। एवमन्ययोश्च। तिष्टृंहयिषति तिष्टर्हयिषति। तिस्तृंहयिषति तिस्तर्हयिषति।

५०। लृ स्नन्ह ङ तु विश्वासे। (स्नन्ह—भ्वा० आ०) रेफयुक्तादि। विश्वासः शङ्कारहितोभावः। लृ—अस्नहत्। ङ—स्नंहित्वा स्नाढ्वा, ढोढ्रि-घंचेति दीर्घः। ङ—स्नंहते पुत्रो मातरि। धातुरयं केचिन्न मन्यते।

हकारान्ता. शत।ईका:। (शतस्यार्द्धं परिमाणं येषां ते, पञ्चाशदित्यर्थः)।

---

## अथ सौत्राः।

### कर्क हासे चकि भ्रान्तौ मर्क सर्पे तु सिक् सिचि।

(१) कर्क हासे। (कर्क) पृथक् पाठस्त्वेषां नियतप्रयोगाभावात्। कर्कशः, कर्कट इत्यादयः शब्दा यथेष्टमुणादिप्रत्ययाद्यैर्व्युत्पादनीयाः (२) चकि भ्रान्तौ। (चन्क) इ—चङ्कुरः। (चङ्कुरो रथवृक्षयोरिति मेदिनी (३) मर्क सर्पे। (मर्क) मर्कटः। (४) सिक सिचि (सिक) दन्त्यादि.। सिकता।

### मर्च ग्राहे कजि रुहे पजि रोधे मजि ध्वनौ।

(५) मर्च ग्राहे। (मर्च) तालव्यवर्गप्रथमान्ताः। मर्कः। (६) कजि रुहे। (कन्ज) इ—कञ्जरः (ब्रह्मा)। रुहो जन्म, रुहोः कभाव इति भावे वा। (७) पजि रोधे। (पन्ज) इ—पञ्जरम्। (८) मजि ध्वनौ। (मन्ज) इ—मञ्जरी, मञ्जुलम्, मञ्जुषा, मञ्जिः।

### मट सादे वटि स्तेये कुठ छिद्युड संहतौ।

(९) मट सादे। (मट) मटह.। (१०) वटि स्तेये। (वण्ट) इ—वण्टकः। (११) कुठ छिदि। (कुठ) कुठारः, कुठेरः, कुठाकुः। (१२) उड संहतौ। (उड) उडुपः।

### वड आरोहणे कुत्त्वास्तृतौ पुत्त गतौ लत।

### घाते सात्क सुखे ष्टृग आघाते च्चद संवृतौ।

(१३) वड आरोहणे। (वड) वड़भी, वडिशम्। (१४) कुत्तु आस्तृतौ।

( कुत, तु—णादपूरणे ) कुतपः। (१५) पुत्त गतौ। (पुत्त) पुत्तिका। (१६) लत घाते। ( लत ) लता। ( १७ ) सात्त सुखे। ( सात ) दन्त्यादि। क—सातयः। ( साति साति चेतीति ग्रः )। (१८) उन्न आघाते। ( उद—आ० ) पञ्चम . उदञ्चः। (१९) चद संहतौ। ( चद ) चत्ता।

सुदि शोभे कप् चपले चुप् सादे रिफ कुत्सने।

(२०) सुदि शोभे। ( सुन्द ) दन्त्यादि। (२१) कप चपले। (कप) कपोलः। (२२) चुप सादे। (चुप ) चुपः। (२३) रिफ कुत्सने। ( रिफ ) रिम्फः रेफः।

रिभ रवे स्तन्भ स्तुन्भ स्कन्भ स्कुन्भग्नु रोधने।

(२४) रिभ रवे। (रिभ) रेफादिः। विरिब्धः। (२५) स्तन्भ ग्नु रोधने। (२६) स्तुन्भ ग्नु रोधने। (२७) स्कन्भ ग्नु रोधने। (२८) स्कुन्भ ग्नु रोधने। ( स्तन्भ, स्तुन्भ, स्कन्भ, स्कुन्भ, आ० श्वा० ) दन्त्याद्याः सर्व्वे। द्वितीय-चतुर्थौ पञ्चमस्वरिणो। ग—स्तभ्नाति स्तुभ्नाति स्कभ्नाति स्कुभ्नाति। न—स्तभ्नोति स्तुभ्नोति स्कभ्नोति स्कुभ्नोति। उ—स्तम्भित्वा स्तब्ध्वा, स्तुम्भित्वा स्तुब्ध्वा, स्कम्भित्वा स्कब्ध्वा, स्कुम्भित्वा स्कुब्ध्वा। रोधनमावरणम्।

डिम हिंसे धम ध्माने पीय प्रीणन उर्गतौ।

( २९ ) डिम हिंसे। ( डिम ) डिण्डिमः। (३०) धम ध्माने। ( धम ) धमनिः। (३१) पीय प्रीणने। ( पीय ) पीयूषम्। (३२) उर गतौ। ( उर ) पञ्चमस्वरादिः। उरसः। ( उरः )।

तद्रि सादे मोहे उल दाहे लुल विमर्द्दने।

स्यात् शल्ल तल गत्यामृश् गतिस्मृत्यो रश स्वने।

(३३) तद्रि सादे मोहे। ( तन्द्र ) दन्त्यवर्गतृतीयोपधः। तन्द्री। (३४) उल दाहे। ( उल ) उल्का, उलपः। (३५) लुल विमर्द्दने। ( लुल ) लुलापः। ( ३६ ) शल्ल गत्याम्। ( शल्ल ) शल्लकी। (३७) तल गत्याम्। (तल) तालिशः ( पर्व्वतः )। (३८) ऋश गतिस्मृत्यो. ( ऋश ) ऋश्यः ( मृगविशेष इति शब्द-रत्नावली )। ( ३९ ) रश स्वने। ( रश ) रेफादिस्तालव्यान्तः। रशना।

. भिष् रुग्जये युष् भजने लुष हिंसन द्युत्यसौ।

धातूनामिह सौत्राणां द्विचत्वारिंशदीरिता: ।

(४०) भिष् रुग्जये । (भिष) भिषक भेषजम् । (४१) युष, भजने । (युष) योषित्, युष्मद् । (४२) लुष हिंसने । (लुष) लुष्ण: । अत्र अदाद्याद्य-क्रमभङ्गस्तु प्रसिद्धत्वेन सन्देहविषयाभावात् ।

(इत्यसावित्यादि) इति ग्रन्थोऽत्र समाप्तौ । तथाच इति हेतुप्रकरण-प्रकाशादिसमाप्तिष्वित्यमरः । इति—समाप्ता धातव इत्यर्थः । इह ग्रन्थे सौत्राणां धातूनामसौ द्विचत्वारिंशदीरिता गदितेत्यर्थ. ।

---

## उपसंहार: ।

अथ ग्रन्थकृदिति धातून्निर्धार्य्य उपसंहरति, शिष्यपरम्पराभिर्नामोत्कीर्त्तना-यशो वर्द्धनार्थं स्वनाम च निर्दिशति ।

इति स्फीत: सप्तदशशत्या षट्कोनषष्ट्या ।
धातुस्कन्धैर्बुधा: सेव्य: कविकल्पद्रुम: फलन् ।
विद्वद्धनेशशिष्येण भिषक्केशवसूनुना ।
तेने वेदपदस्थेन वोपदेवद्विजेन य: ।

हे बुधा: य एष कविकल्पद्रुमो वोपदेवद्विजेन तेने कृत: स सेव्यो युष्माभि-रिति शेष इति श्लोकद्वयेनान्वय. । (कथम्भूत) स्फीतो महान् । कल्पद्रुमसाधर्म्यम्-माह । सप्तदशशत्या षट्कोनषष्ट्या धातुस्कन्धै फलन्—सप्तदशानां शतानां समाहार सप्तदशशती तया, षण्णां समूह षट्क षट्केन ऊना षट्कोना सा चासौ षष्टिश्चेति षट्कोनषष्टि षट्कोनषष्ट्या युता सप्तदशशती षट्कोनषष्टा, द्व्यादेर्डो युते शतादाविति ड प्रत्यये स्त्रियामत आप् तया । धातवश्च ते स्कन्धाश्चेति धातुस्कन्धा' तै:, फलन् प्रतिधातुस्कन्धेन प्रत्ययभेदेन नानाप्रयोग-रूपाणि फलानि यथेष्टमर्पयन्नित्यर्थ: । गुरो पितुश्च प्रतिष्ठार्थं तन्नामनी ख्याप-यति विद्वद्धनेशेत्यादि । वेदानां पदे व्यवसाये तिष्ठतीति वेदपदस्थ: तेन । वोपदेव इति । उ शिव' अकारो विष्णु, उश्च अश्च वौ, वयोरुप समीपे दीव्य-तीति पचादित्वादनि वोपदेव. । तथा च उ सम्बुद्धौ रुषोक्तौ च शिववाचीत्वन-

व्ययम्। च स्यादभावे स्वल्पार्थे विषादेष त्वनव्ययम्। उप हीनेऽधिके प्रोक्त-मासन्नेऽप्युप कीर्त्तितमिति विश्वप्रकाशः।

कश्चित्तच्छिष्यस्तत्कीर्त्तिं वर्णयन्नाह।

स्वर्गे गीर्वाणनाथ्यः सुरपतिमभितः शाब्दिकाना वरेण्यं
पाताले नागराज भुजगयुवतयो यस्य गायन्ति कीर्त्तिम्॥
यस्तीर्णं शब्दपाथोनिधिमखिलमिमं गोष्पदं वा सुराद्रौ
शिष्योऽकार्षीज्जनेशः कविकुलतिलकः केशविर्वोपदेवः॥

इत्याचार्य्यचक्रचूडामणिश्रीवोपदेवविरचित.
कविकल्पद्रुमो नाम धातुपाठ समाप्त.।

---

स्वर्गे गीर्वाणनाथ्यः शाब्दिकाना वरेण्यं सुरपति अभितः सुरपतेः समीपे यस्य कीर्त्तिं गायन्ति, पाताले भुजगयुवतयः शाब्दिकानां वरेण्यं नागराजं अभितो यस्य कीर्त्तिं गायन्ति, यश्च अखिल समस्तं इन्द्रचन्द्रादिप्रणीतं शब्द-पाथोनिधिं गोष्पद वा गोष्पदमिव तीर्णं ततार, स वोपदेवः सुराद्रौ सुमेरुपर्व्वते इमं ग्रन्थमकार्षीदित्यर्थः। सिद्धत्वात् सुमेरुगतिः सम्भवतीति।

गाङ्गोलीयजसर्व्वदेशविदितश्रीसार्व्वभौमात्मजो
दुर्गादास इमाञ्चकार विषदां टीका स्वबोधावधि।
टीकेय विमलात्मना प्रतिपदं सम्पादयन्ती मुद
शिष्याणा विदधातु धातुगहने शार्दूलविक्रीडितम्॥
सर्व्वस्व मौग्धबोधानामन्येषां हिमराशिवत्।
कविकल्पद्रुमस्याग्रे दीप्यते धातुदीपिका॥

इति वासुदेवसार्व्वभौमभट्टाचार्य्यात्मजश्रीदुर्गादासविद्यावागीश-
विरचिता धातुदीपिका नाम कविकल्पद्रुमटीका समाप्ता।

---

समाप्तोऽयं ग्रन्थः।